# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES NOS. 661-698-715-747.

---

## ADVAITA BRAHMA SIDDHI

BY

KA'S'MI'RAKA SADA'NANDA YUTI

EDITED WITH CRITICAL NOTES

BY

PAṆḌIT VA'MAN SHA'STRI' UPA'DHYA'YA OF ISLA'MPUR.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1890.

# अद्वैतब्रह्मसिद्धिः ।

काश्मीरक-श्रीसदानन्द-यति-विरचिता ।

दुमलामपुराभिधग्रामनिवासिना

पण्डित वामनशास्त्री उपाध्याय

इत्येतेन संशोध्य

संस्कृतव्याख्यया सनाथीकृता च ।

सा च

वङ्गदेशीयास्यातिकसमाजानुज्ञया

कलिकातानगर्य्यां

बाप्तिस्टमिशनयन्त्रालये

मुद्रिता ।

शकाब्दाः १८११ । खृी० १८९० ॥



# अद्वैतब्रह्मसिद्धेर्भूमिका ।

परमपूज्य-स्वपितृचरणप्रसादाधिगत-विद्येन देशाटनलभ्यान् मतिवैशद्यादीन् गुणान्* सम्पादयितुमिच्छता मया प्रथमं दाक्षिणात्यान् जनपदान् चङ्क्रमित्वा तत्रत्य-विविधलोकस्थितिं देशाचारवैचित्र्यं धर्मस्थितिं च निरीक्ष्य तत्र तत्र अनेकविद्याविनोदानां विदुषां दर्शन-प्रश्न-सम्भाषणादिनात्मानं सम्भाव्य तत्सहवास-सुखमनुभूय कांश्चन सुप्रसिद्धान् सम्प्रति चक्रवर्त्तिनीकरकमल-शीतलच्छायासु विश्रान्तान् भूपतीन् दृष्ट्वा तेभ्यो यथोचितं सत्कारादिकं चानुभूय स्वगृहान्प्रति प्रतिनिवृत्तम् । कञ्चित्कालं गृहे स्थित्वा प्रवासक्लेशान्परिमार्ज्य उत्तरपूर्वदिक्-प्रदेशावलोकनाय तरलमानसोऽभवम् ।

खिस्तसंवत्सरीय-अष्टादशोपरि द्व्यशीतितमे वर्षे षष्ठे मासे दशमदिने अस्या मुम्बापुर्याः सकाशात् उत्तराभिमुखः प्रचलितोऽहम् । तत्र प्रथमं, स्वकृतग्रन्थद्वारा विदितनामधेयं मालवाधिपतिं (तस्मिन्समये युवराजं) दृष्ट्वा तत्कृतानल्पजल्पेन प्रथममेव तुष्टहृदयः अल्पमप्यनल्पमिव मत्वा तत्कृतसत्कारं स्वीकृत्य राजस्थानाभिधप्रदेशगतान् भूपतिसंहतीन् द्रष्टुकामः मा-लवानिव मालवानपास्य राजपुत्र-राजदर्शनमहमकृतवान् । तत्र च कति राजानः, कति मन्त्रिणः, कति सार्वभौमाधिकारिणः, कति विद्यासमुद्रपारङ्गता विदुषः, कति रमणीयानि देवालयानि, कति विभिन्नदेशभाषावेषैः देशान्तरस्थं जनं विस्मापयन्तो लोकाश्च मया दृष्टाः । शास्त्रग्रहपरिचयशून्यान् नव-क्षात्त्रतेजोरहितान् दाक्षिणात्यमण्डलाधिपतीन् दृष्ट्वा अतीव

---

* प्रवासस्य गुणा यथा—

तीर्थानामवगाहनं परिचयः सर्वत्र वित्तार्जनम्

नानाश्चर्यनिरीक्षणं बुधजनैस्संवादगोष्ठीक्रमः ।

खिन्नात्मना मया, निपुणत्वात्तत्तेजोरहितानपि बाह्याडम्बरेण भटानिव दृश्यतः राजस्थानगतान् नरपतीन् दृष्ट्वा कथङ्कथमप्यात्मा विनोदितः। गृहीतश्च तेभ्यस्तेभ्यः महामात्य-राजादिभ्यः विशिष्ट-सत्कारः। अनन्तरं मध्यभरतखण्डगतान् कतिचन भूपतीन् तत्तद्देशचमत्कारांश्चावलोक्य प्राचीनैः ऋषिभिः प्रवेशानर्हत्वेन दूरोत्सारितमपि वङ्गदेशं विद्यासदाचारादिभिः सम्प्रति अतीव पवित्रं सार्वभौमिणीप्रतिनिधिनिवासेन राजलक्ष्मी-निलयं कलिकातानगरं द्रष्टुकामेन मया; मार्गे सप्रणयं देशान्तरागतानां यजमानानां तत्र तत्र वीथिकासु तत्रत्य-द्विजदारा आतिथ्यं सम्पादयन्तीमिव अविमुक्तनगरीं वाराणसीमवलोक्य, जह्नुकन्यकाजलाप्लवनेनात्मानं पावयित्वा विश्वान्तर्यामिणं विश्वरूपमपि काशैकनिवासं भगवन्तं विश्वेश्वरमानर्च्य, तत्रत्यान् निखिलपारदृश्वनः विद्वज्जनान् मुहुर्मुहुरवलोक्य, तेषां विद्वद्गोष्ठीलाभमुररीकृत्य तन्नगरनिवाससुखमत्यक्तुमना अपि भगवतो विश्वेश्वरस्य चरणकमलं हृदि निधाय कलिकाताविलासिनीविभ्रमहृतमानसः पुनरागमनाय प्रस्थितः। वाराणसीं नमस्कृत्य निःसृतेन मया मगधराजधानीं कुसुमपुरीं आर्यचाणक्यवियोगखिन्नामपि (पाटना) कामिनीमिव मदागमनप्रतीक्षया मार्गे स्थितां दाक्षिण्येन सभाजयित्वा अन्तरापतितानि अन्यान्यपि तीर्थ-क्षेत्रादीन्यवलोक्य त्वरया प्रस्थितम्। समहतिदूत्या आकारयन्तीं सुमनः कलिकामिव कलिकातामचिरेणैव दृष्टवानहम्। तत्र च चक्रवर्त्तिनीप्रतिनिधिदर्शनागतसामन्तराज-राजपुरुष-दूतादिभिः कृतमन्त्रमिव विद्यादेव्याः विहारस्थानमिव लक्ष्म्याः आलयमिव दाक्षिण्यस्यापणमिव आचारस्य मित्रमिव अनेकगुणविशेषविशिष्टं तन्नगरं दृष्ट्वादृष्ट्वा विद्वज्जनसहवाससुखमनुभूयानुभूय च तृप्तिं नासादितवान्। कतिचित्कालं तत्र उषित्वा मैथिलान् जनपदान् तत्रत्यं ब्राह्मणकुलतिलकमपि अन्वर्थं लक्ष्मीश्वर महाराजमवलोक्य तत्कृतं विशिष्टसत्कारं स्वीकृत्य पाञ्चालदेशदर्शनकौतुकाकृष्टमनाः मार्गस्थान् ब्रह्मावर्त्तादीन् जनपदान् दृष्ट्वा प्रलम्बमुत्तीर्य्य चक्रवर्त्तिनीप्रतिनिधिनिवासं गिरिस्थानं (सिम्ला) दृष्ट्वा भारती-

यजनखान्तःसन्तोषदायिनं दयादाक्षिण्यादि-विशिष्टगुणालङ्कृतं प्रतिनिधिवरं सम्भाष्य इतरासुलभमपि तत्कृतं यथोचितं सत्कारमुररीकृत्य अपरमिव भूस्वर्गं काश्मीरमण्डलं दिदृक्षुः कतिचन पाञ्चालविषय-राजानः दृष्ट्वा काश्मीराधिपतिं अवलोक्य तद्दत्तवाहन-पाथेयादिसहायेन काश्मीरमण्डलं प्रविष्टवानहम्।

प्रथमं तावत् काश्मीरविषयराजधानीं अन्वर्थनाम्नीं श्रीनगरीमवलोक्य तत्रत्यान् पण्डितान् सभाजयित्वा प्राचीनग्रन्थावलोकने तत्सम्पादने च प्रयत्नवानभूवम्। दृष्टा मया बहवोऽप्रसिद्धा उत्तमाश्च प्राचीनसंस्कृत-ग्रन्थाः। तेषु कतिचन क्रीताः, केषाञ्चित्प्रतिरूपकङ्कृतं, केचन नियमितकाल-पर्यन्तमवलोकनार्थञ्च गृहीताः। अन्येऽपि बहवो ग्रन्था उपलब्धा आसन् परं तत्रत्य-शीतबाहुल्येन व्याधितोऽहं पुनरपि तन्महामण्डलं पश्यामीति बलवतीमाशां हृदि निधाय सम्पादितानेव ग्रन्थान्बहुन्मत्वा मुद्रणादिना त एव प्राकाश्यं प्रापणीया इति व्यवस्य तत्साधनसम्पादने यत्नवानहं पुनरपि पाञ्चालमण्डलं प्रतिनिवृत्तोऽभूवम्।

काश्मीरदेशसम्पादितेषु बहुषु ग्रन्थेषु इयमद्वैतब्रह्मसिद्धिः नवसाहसाङ्कचरिताभिधं महाकाव्यञ्च संशोध्य प्रथममेव मुद्रापितव्यमिति मम महानध्यवसायः समजनि। परं द्वित्रपुस्तकान्तरसम्पादनमन्तरा तत्संशोधनमतीव दुष्करमिति मत्वा पुनरपि इन्द्रप्रस्थादिप्रदेशेषु चङ्क्रमता मया पुस्तकान्तरसम्पादनाय प्रयतितुमारब्धम्। तत्र प्रथमं भरतपुर-इत्यभिध-नगरे अद्वैतब्रह्मसिद्धेः नवसाहसाङ्कचरितस्य च महता प्रयासेन एकैकं पुस्तकं समधिगतम्। अनन्तरं कोटानगरे पण्डित-मोतीलालजी इत्य-भिधया प्रसिद्धानां सरदार-कृष्णराव-रामचन्द्र-गुळगुळे स्टेटकौन्सिलर इत्यभिधानां ग्रन्थसङ्ग्रहादद्वैतब्रह्मसिद्धेः एकं पुस्तकं प्रतिरूपकद्वारा संगृहीतम्। एवं पुस्तकत्रयं सम्पाद्य अस्य ग्रन्थस्य संशोधनकार्यं महता उत्साहेन आरब्धुमनाः महोदयश्रीराजा-राजेन्द्रलालमित्र एल. एल. डी. सी. आइ. ई. इति सुप्रसिद्धान् संस्कृतादिप्राच्यभाषाकोविदान्प्रति पत्र-

द्वारा विज्ञापितवानहम्। बङ्गदेशीयास्यातिकसोसायटि इत्यभिधविद्वत्स- मित्या प्रसिद्धीं प्रापितायां 'बिब्ल्योथिका इण्डिका' इत्यभिधायां मुद्रितसं- स्कृतग्रन्थमालायामस्या अद्वैतब्रह्मसिद्धिकलिकाया गुम्फनं भूयादिति महती आशा समजनि। सा च डा॰ राजेन्द्रलालमित्रमहोदयैः सफलीकृता।

एवं आदर्शपुस्तकत्रयसम्पादनं मुद्रणव्यवस्था च जाता तथापि तदानी- महं देशाटनव्यग्रतया आवश्यकेतरग्रन्थावलोकनसमर्थः नासम्। अनन्तरं खिस्तसंवत्सरीयाष्टादशाधिकसप्ताशीतितमे वर्षे चतुर्थे मासे सप्तविंशति सङ्ख्याकदिने किञ्चिन्न्यून-पञ्चसंवत्सरीयप्रवासात्प्रतिनिवृत्त्य अस्यां पुरि प्राप्त- वासम्। अत्र च बहुकालपरिचितैः व्यतीत-पञ्चवर्षात्मककालेऽदर्शन- वशात् स्नेहभराक्रान्तैः दर्शनालाप-सहवासलोलुपैः मन्मित्रैः महाशय शामराव विट्ठल इत्यभिधैः एकत्र सहवासोऽभूत्। विद्याव्यसनिना तेन मित्रेणास्मिन् कार्ये ऽतीव साचिव्यङ्कृतम्। तत्सङ्गृहीतान्यनेकानि संस्कृतपुस्तकानि मदर्थं सर्वदा उद्घाटितकपाटद्वाराण्येवासन्। न केवल- मेतावदेव तेन साहाय्यं कृतमपि तु अन्यापि व्यवस्था तेनैव कृता इति सानन्दमावेदयितुमतीव उत्साहवानस्मि। एवं अपेक्षितसर्वसाधन- सम्पत्ति-सम्पन्नेन मयेऽयमद्वैतब्रह्मसिद्धिः यथामति संशोधिता।

ग्रन्थकर्तुः जीवनसमयादिविवेचनम्।

सम्पादित-पुस्तकत्रये क॰ संज्ञितपुस्तकं संवत् १७६१ ज्येष्ठ-कृष्णद्वि- तीयायां लिखितं वर्तते। पुस्तक समाप्तौ—

"इति श्रीपरमहंस-परिव्राजकाचार्य-श्रीब्रह्मानन्दसरस्वती-श्रीपाद- शिष्य-श्रीसदानन्द-काश्मीरविरचितायामद्वैतब्रह्मसिद्धौ गुरुशब्दाभिधेय- विचारे सांख्य-पातञ्जलमतनिराकरणगर्भित-प्रौढमीमांसकमतखण्डनव्या- जेन दुर्दुरूढवादिशिरसि चतुर्थोऽयं मुद्गरप्रहारः॥ ॐतत्सत्। शिवः सर्वम्। वासुदेवः सर्वम्। हरिः सर्वम्। संवत् १७६१ ज्येष्ठ-कृष्णपक्ष- द्वितीयायां समाप्तम्"। एवं लिखितं वर्तते।

ख. ग. पुस्तकयोः नास्ति लेखनकालः, परं ते अपि शतवर्षात्मा-

चीने इति तु न सन्देहः। क. पुस्तकं काश्मीरदेशे पञ्चाशन्मुद्रिकाभिः क्रीतमस्माभिः। तदेवातिप्राचीनं ग्रन्थकर्तुः स्वहस्तलिखितमिव प्रतीयते। यतोऽत्रैव पुस्तकप्रान्तभागे बहुषु स्थलेषु संशोधनं टिप्पण्यादिकं च वर्तते। कुत्रचित् मूलस्थवाक्यानि प्रकारान्तरेण लिखितान्यपि सन्ति। एकस्मिंस्थले पूरणिकापि वर्तते। नेदं ग्रन्थकर्तारमन्तराऽन्यः कोऽपि कर्तुं शक्नुयात्। अस्मिन्नेव पुस्तके प्रथमपत्रस्य प्रथमपृष्ठे—"संवत् १७६१ ज्येष्ठशुक्लपक्षत्रयोदश्यां देवताविशेषानुगृहीतब्राह्मणं प्रति—'एतच्छरीरं कदा? कुत्र? कथं? पतिष्यतीति' कृतप्रश्ने उत्तरं—'सप्तविंशतितमे वर्षे प्रयागक्षेत्रे माघमासे भगवच्चरणारविन्दं ध्यात्वैव पतिष्यतीति सिद्धान्तितं। तत्रापि नवमे वर्षे पञ्चदशे चाति दुःखमिति'" एतैर्बाह्यप्रमाणैः ग्रन्थकृदयं वैक्रमीयाष्टादशशतकोत्तरार्धे आसीदित्यनुमितं भवति। तथापि आभ्यन्तरप्रमाणपर्यालोचने षोडशशतकपूर्वार्धान्नार्वाचीन इति प्रतीयते। 'बाह्यादाभ्यन्तरं बलीय' इति तु न्यायसिद्धमेव। तथाहि यद्यप्यस्य कालनिश्चयो न भवति तथापि विक्रम संवत् १५३५ मिते वत्सरे प्रादुर्भूतात् विशुद्धाद्वैतनामकमतप्रतिपादकात् श्रीमद्वल्लभाचार्यादयं ग्रन्थकृत् प्राचीन इत्यत्र तु न कोऽपि सन्देहः। यतोऽत्र रामानुजाचार्यस्य मध्वाचार्यस्य च नामोल्लेखः तन्मतखण्डनञ्च वर्तते परं न वल्लभाचार्यस्य विशुद्धाद्वैतमतस्य वोल्लेखः। यद्येतद्ग्रन्थकरणसमये विशुद्धाद्वैतमतस्य प्रादुर्भावः स्यात् तर्हि मतान्तरमृगपोथनपटुरुद्दामवाङ्नखोऽयं काश्मीरककेसरिः मायावादखण्डनैकबद्धपरिकरस्य तस्य पुष्टिमार्गप्रवर्त्तकस्योट्टङ्कनमकृत्वा न गच्छेत्। एतत् ग्रन्थकर्तुरीतिवृत्तं ज्ञातुमस्माभिः विशेषतः प्रयतितं परं न किमप्युपलब्धम्। केवलं अन्तिमवाक्यात् ग्रन्थकृदयं ब्रह्मानन्दसरस्वतीशिष्यः काश्मीरकश्चेति प्रतीयते नान्यत्किमपि। यद्यपि सम्प्रति कालचक्रवशात् काश्मीरदेशेऽपि विरला एव विद्वांसो बहुश्रुताश्च तथापि पूर्वस्मिन्काले काश्मीरदेशः केवलं विद्याविहारस्थानमासीदित्यस्मिन्विषये न कापि विप्रतिपत्तिः। वर्त्तते च तत्र शारदापीठम्। श्रीमच्छङ्कराचार्य-रामानुजा-

चार्य-मध्वाचार्यादयो बहवो मतस्थापकाः सर्वमपि भरतखण्डं विजित्य काश्मीरविजयमन्तरा आत्मानं न कृतार्थममन्यन्त । अतएव सर्वेषामप्याचार्याणां दृश्यते महानाग्रहः काश्मीरविजये । तस्मादयं काश्मीरदेशः विद्वत्सङ्घतिलकितः आसीदित्यस्मिन् विषये न कोऽपि सन्देहः । अतएव च तत्रत्याः कवयः पण्डिताश्च स्वकृतग्रन्थादिषु साटोपं प्रौढिवादेन 'वयं काश्मीरका वयं काश्मीरका' इति वर्णयन्ति । वाग्देवीप्रेमकटाक्षपात्राणां तेषामियं प्रौढिः यथार्थैव वर्तते ।

एतद्ग्रन्थकारेणाऽपि स्वनाम्नः 'काश्मीरक' इति उपपदं योजितमेव वर्तते । ख. पुस्तके केवलं 'सदानन्द' इत्येव वर्तते. क. ग. पुस्तकयोः 'सदानन्दयति' इति वर्तते । अतोऽस्माभिः 'सदानन्दयति' इत्येवास्मिन्पुस्तके संगृहीतम् । सम्भवति च तस्य यतित्वम् । क. पुस्तकं ग्रन्थकर्त्रा स्वयं लिखितं नवेति पूर्वमुक्तमेव । किञ्च ब्रह्मानन्दसरस्वतीसंज्ञकस्य यतेः शिष्यस्यास्य यतित्वं नासम्भवि ।

अनेनैव ग्रन्थकृता स्वरूपप्रकाशाभिधो ऽन्यो ग्रन्थः कृतो वर्तते । स चास्मात्प्रथम इति प्रतीयते । यतो ऽत्र बहुषु स्थलेषु तन्नामोल्लेखः दृश्यते ।

अद्वैतनिरूपणविषये मधुसूदनसरस्वती-विरचितः अद्वैतसिद्ध्याख्यः ग्रन्थस्तावत् प्रसिद्ध एव । इयमद्वैतब्रह्मसिद्धिस्तस्मादतीव भिन्ना । अस्याः विषयप्रतिपादनव्यवस्थापि अतीव भिन्नेति विविच्य पठतां विदुषां दृग्गोचरं स्यात् । अत्र च षण्णां नास्तिकानां षण्णामास्तिकानां च दर्शनानां सङ्क्षेपत उपन्यासपूर्वकं खण्डनम् अद्वैतसिद्धान्तस्य अबाधितत्वं च ग्रन्थकर्त्रा सिद्धान्तितम् । श्रीमत्सायनमाधवाचार्यविरचिते सर्वदर्शनसङ्ग्रहाभिधेयग्रन्थे नास्तिकास्तिकदर्शनानां संक्षेपतः सङ्ग्रह एव वर्तते न तेषां खण्डनादिकं । अद्वैतसिद्धान्तविवेचनं तु तत्र नास्त्येव । ग्रन्थकर्त्रा 'तदन्यत्र प्रपञ्चितमिति अत्र न सङ्गृहीतं', इत्युक्तं वर्तते । अतः बाह्याभ्यन्तर-दर्शनखण्डनपूर्वकम् अद्वैतसिद्धान्तजिज्ञासूनां सर्वदर्शनसङ्ग्रहग्रन्थात् न तादृशं साहाय्यमुपल-

भ्यते। पूर्वोक्ता मधुसूदन-सरस्वती-विरचिता अद्वैतसिद्धिरपि न तादृगुपयुक्ता। यतः तत्र खण्डनीयानां आस्तिकनास्तिकदर्शनानां केवलं खण्डनमेव वर्तते न तत्तन्मतोपन्यासः। अतः तत्तन्मतज्ञानाभावेन तत्तत्खण्डनं न समीचीनतया जिज्ञासूनां बुद्धिमारोहति। एतादृश्येव भट्टोजीदीक्षितविरचित-तत्त्वकौस्तुभस्य अप्पयदीक्षितविरचित-सिद्धान्तलेशस्य नृसिंहसरस्वती-विरचितस्य भेदधिक्कारग्रन्थस्य च एकदेशोपयुक्ततैवेति सुधियो विदाङ्कुर्वन्तु। तस्मात् खण्डनीयमतस्वरूपज्ञानपूर्वकं अद्वैतसिद्धान्तप्रविविक्षूणामुपयुक्तः अयमेव ग्रन्थः। नास्ति एतत्सदृशोऽन्य इति विदुषो विभावयन्तु।

अत्र च बहुषु विषमस्थलेषु मया यथामति व्याख्या कृता वर्तते। उपलब्धपुस्तकचयात् समीचीनासमीचीन-पाठविवेचनपूर्वकं मयेयमद्वैतसिद्धिः यथामति यथाविज्ञानं संशोधिता। मुद्रितपत्रशोधनविषये मन्मित्रैर्महाशयैः विद्वद्वरैः हरप्रसादशास्त्रिभिरतीव साहाय्यदानेनोपकृतोऽस्मि इत्यावेदयितुं महानानन्दः। तदेषा कृतिः अनसूयकैः विद्वद्भिः—

प्रेम्णा सद्भिर्नित्यं सेव्या ज्ञेया मुकुः सदोषापि।
संशोध्य वापि हरिणा सुदाममुनिसतुषपृथुकमुष्टिरिव॥

इत्याशास्ते—

मुंबई।
पोर्चुगीजचर्चलाईन
गृहसङ्ख्या २० गिरगांव
ता० ४ आगस्त १९९०

तत्रभवच्चरणसेवाभिलाषी
वामनशास्त्रिशर्मा।

# अद्वैतब्रह्मसिद्धौ उपलब्धानां ग्रन्थानां तत्कर्तॄणां च नामानि* ।

(वर्णानुक्रमेण)



---

* इदमत्रावधेयं । येषां ग्रन्थानां तत्कर्तॄणां च नामानि यान्यत्र बहुवारं उपलब्धानि तेषां एकस्यैव स्थलस्य निर्देशः कृतः ।

तथा च नात्र वैदिकग्रन्थानां नामानि सङ्गृहीतानि बहुषु स्थलेषु विशिष्टनामनिर्देशाभावात् तत्प्रयोजनाभावाच्च ।

---

# अद्वैतब्रह्मसिद्धेर्विषयानुक्रमणिका ।

## इति मायानिरूपणम् ।



## इति प्रधानखण्डनेन सत्कार्यवादखण्डनम् ।





# अथ द्वितीयो मुद्गरप्रहारः ।



इति शून्यवादिमतखण्डनम् ।

इति चार्वाकमतखण्डनम् ।

# अथ तृतीयो मुद्गरप्रहारः ।



इति मनसोऽनिन्द्रियत्वप्रतिपादनम् ।



इति ज्ञानात्मनोर्गुणगुणिभावखण्डनपूर्वकात्मनानात्वखण्डनम् ।

---

## अथ चतुर्थो मुद्गरप्रहारः।



इति ज्ञान-कर्मसमुच्चयखण्डनम्।

इति भट्ट-चिदखण्डयोभयसम्मतमोक्षखण्डनम् ।



इत्यापातत ईश्वरनिरूपणम् ।



इति प्रतिबिम्बवादः ।



इत्यवच्छेदवादः ।



इति सङ्क्षेपेण दृष्टिसृष्टिवादः ।

सो ऽयं ग्राह्यसमाधिः।

# अद्वैतब्रह्मसिद्धेः शुद्धिपत्रम्।

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १ | १४ | मुखध्वंसार्थं | मुखध्वंसार्थं |
| ,, | १९ | ख. पुस्तके | ख. पुस्तके |
| २ | १ | सदान्दपति | सदानन्दयति |
| ३ | ११ | रिवात्त्यन्ताभावे | रिवात्यन्ताभावे |
| ,, | ११ | गम्यात्त्यन्ता | गम्यात्यन्ता |
| ,, | ,, | भावात्त्यन्ता | भावात्यन्ता |
| ४ | १ | सदानन्दपति | सदानन्दयति |
| ,, | ११ | नेक द्रव्यारब्धं | नेकद्रव्यारब्धं |
| ,, | १८ | यन्तवत्व | यन्तवत्त्व |
| ,, | २१ | न्निरवयत्वा | न्निरवयवत्वा |
| ५ | १४ | संयोगाद्व्यणुक | संयोगाद्द्व्यणुक |
| ६ | १ | सदानन्दपति | सदानन्दयति |
| ,, | ३ | स्थितस्था | स्थितिस्था |
| ,, | ८ | गुणोत्पत्या | गुणोत्पत्त्या |
| ,, | ३ | सान्निद्धस्य | सान्निध्यस्य |
| ८ | १ | सदानन्दपति | सदानन्दयति |
| ,, | २० | दुरितेम्यः | दुरितेभ्यः |
| ९ | १७ | महत्वायोगात् | महत्त्वायोगात् |
| १० | १२ | नुपपत्या | नुपपत्त्या |
| १४ | ७ | प्रामाणिकत्त्वेन | प्रामाणिकत्वेन |
| ,, | ११ | विशेष्य | विशेष |
| १५ | १८ | विशेष्य | विशेष |
| १६ | ११ | गुणश्चति | गुणश्चेति |
| ,, | २० | पटगत शुद्धत्व | पटगतशुद्धत्व |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १८ | १६ | स. पुस्तके | ख. पुस्तके |
| १९ | १२ | दूःखेनापि | दुःखेनापि |
| ,, | १३ | सम्बन्धात्तरे | सम्बन्धान्तरे |
| २१ | ७ | सति | सती |
| ,, | २२ | ग. मस्तके | ग. पुस्तके |
| २४ | ५ | मात्रत्वया | मात्रतया |
| ,, | १४ | एवभेव | एवमेव |
| ,, | १७ | विनाशोत्यत्ति | विनाशोत्पत्ति |
| ,, | १९ | नाभधेय | नामधेय |
| ,, | ,, | रज्वामिव | रज्ज्वामिव |
| ,, | २३ | परिशेषे | परिशेषो |
| ,, | २२ | वक्तसुचितम् | वक्तुमुचितम् |
| २८ | १६ | वाचम्पति | वाचस्पति |
| ,, | १९ | वयत्वाच्च | वयवत्वाच्च |
| २९ | २ | व्यवक्रीयते | व्यवक्रियते |
| ३२ | ७ | व च | न च |
| ३३ | १८ | क्षतिमत्वादि | क्षतिमत्त्वादि |
| ३५ | १३ | अन्यता | अन्यथा |
| ३६ | १८ | नोप च्छन्ति | नोपगच्छन्ति |
| ३७ | ६ | तत्वज्ञानं | तत्त्वज्ञानं |
| ३८ | ६ | नित्त्यानुमेय | नित्यानुमेय |
| ,, | १६ | तत्साद्ध्मोत्त्व | सत्साध्यमोत्त्व |
| ३९ | १९ | निमन्त्रिते | नियन्त्रिते |
| ४२ | ४ | चैतनयेन | चैतन्येन |
| ,, | २३ | कारिकं | कारकं |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ४३ ... | ११ ... | वतिष्ठन्ते ... | वतिष्ठन्ते |
| ,, ... | २२ ... | प्रप्यत ... | प्राप्यत |
| ४४ ... | १३ ... | दसत्वापत्तिः ... | दसत्त्वापत्तिः |
| ४५ ... | १२ ... | पूर्वोक्तदोषा ... | पूर्वोक्तदोषा |
| ४६ ... | १८ ... | घटन ... | घटना |
| ४७ ... | ७ ... | मन्मां ... | यन्मां |
| ,, ... | १५ ... | प्रसङ्गात् ... | प्रसङ्गात् |
| ४८ ... | ४ ... | भवगता ... | भगवता |
| ४९ ... | ४ ... | अविनाशि ... | अविनाशी |
| ५० ... | ११ ... | सर्वधर्भान्य ... | सर्वधर्मान्य |
| ५१ ... | ९ ... | सङ्क्षेपः ... | सङ्क्षेपः |
| ,, ... | २३ ... | भवितु मर्हति ... | भवितुमर्हति |
| ५३ ... | २३ ... | पज्यत्वं ... | पूज्यत्वं |
| ५४ ... | ५ ... | बलवत्वम् ... | बलवत्त्वम् |
| ,, ... | ९ ... | यशवतितमः ... | यस्त्ववतितमः |
| ,, ... | २१ ... | न बदेन्मीमांस ... | न वदेन्मीमांस |
| ५६ ... | १३ ... | मीदभेद ... | मीद्भेद |
| ५७ ... | ४ ... | तत्वनिर्णया ... | तत्त्वनिर्णया |
| ,, ... | २३ ... | स्वोकारेण ... | स्वीकारेण |
| ५९ ... | १ ... | अद्वतब्रह्मसिद्धिः ... | अद्वैतब्रह्मसिद्धिः |
| ६० ... | ६ ... | मारणानेति ... | मारणेनेति |
| ,, ... | ११ ... | अपाणिपादौ ... | अपाणिपादो |
| ६१ ... | ८ ... | इयते ... | ईयते |
| ,, ... | १६ ... | 'ग्टहीता' ... | 'ग्रहीता' |
| ६३ ... | ११ ... | कलङ्कगन्धि ... | कलङ्कगन्ध |

| पृष्ठे । | पङ्क्तौ । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ६३ ... | १३ ... | स्वागमस्तु ... | स्वागमस्तु |
| ,, ... | १८ ... | लोकोनुसारेण... | लोकानुसारेण |
| ,, ... | १९ ... | कल्पन ... | कल्पना |
| ६५ ... | १९ ... | उज्ञोषयन्ति ... | उद्घोषयन्ति |
| ६६ ... | ६ ... | माद्यमिकैः ... | माध्यमिकैः |
| ६७ ... | १७ ... | माधवाचायप्र०... | माधवाचार्यप्रणीते |
| ६८ ... | ६ ... | शुन्यमेव ... | शून्यमेव |
| ६९ ... | १३ ... | तत्वज्ञानात् ... | तत्त्वज्ञानात् |
| ७० ... | २२ ... | किमर्थ ... | किमर्थं |
| ७१ ... | १५ ... | वाह्य ... | बाह्य |
| ७४ ... | २२ ... | परभाणव ... | परमाणव |
| ७५ ... | १० ... | तया हि ... | तथाहि |
| ,, ... | १२ ... | हेतुपनिवद्धं ... | हेतूपनिवद्धं |
| ७६ ... | १४ ... | द्भवितु मर्हति ... | द्भवितुमर्हति |
| ,, ... | १७ ... | अनुपपद्य ... | अनुत्पद्य |
| ७७ ... | १२ ... | पूञ्जीक्रियन्ते ... | पुञ्जीक्रियन्ते |
| ७८ ... | १३ ... | दिकायं ... | दिकार्यं |
| ७९ ... | ९ ... | म्र्त्सुर्वर्णा ... | म्र्त्सुवर्णा |
| ८० ... | १८ ... | कार्ययो ... | कार्ययोः |
| ,, ... | २२ ... | इत्यत्त्हनीयं ... | इत्यूहनीयं |
| ८१ ... | १० ... | इत्यवंरूपा ... | इत्येवंरूपा |
| ८४ ... | ५ ... | वैय्यर्थ्यं ... | वैयर्थ्यं |
| ,, ... | १० ... | जातिमत्वेन ... | जातिमत्त्वेन |
| ,, ... | ११ ... | स्पर्शवत्वे ... | स्पर्शवत्त्वे |
| ,, ... | १४ ... | किश्च ... | किञ्च |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ८५ ... | १७ ... | तत्वतः ... | तत्त्वतः |
| ८६ ... | ४ ... | भासन्ते भासमानानि ... | भासते भासमानं |
| ८७ ... | १२ ... | चकास्ति ... | चकास्ते |
| ,, ... | २२ ... | नैय्यायिकैः ... | नैयायिकैः |
| ८८ ... | १३ ... | ग्टह्णीतुम् ... | ग्रहीतुम् |
| ८९ ... | १८ ... | ग्टह्णीतु ... | ग्रहीतु |
| ९१ ... | २ ... | ग्टह्णीतुः ... | ग्रहीतुः |
| ,, ... | १५ ... | नचोकथङ्ग ... | नचीकथङ्ग |
| ९२ ... | ७ ... | मात्रं तत्वं ... | मात्रं तत्त्वं |
| ,, ... | २२ ... | सावलम्बनत्वं ... | सावलम्बनत्वं |
| ९५ ... | २२ ... | रित्यथः ... | रित्यर्थः |
| ९९ ... | ११ ... | लौकिका ... | लौकिकात् |
| १०० ... | ४ ... | वहिरर्थसिद्धिः ... | बहिरर्थसिद्धिः |
| ,, ... | १२ ... | क्वत्स्नेन ... | क्वत्स्नेन |
| ,, ... | १७ ... | वाह्यास्तित्व ... | बाह्यास्तित्व |
| १०१ ... | १० ... | प्रत्यासत्यभावेन ... | प्रत्यासत्त्यभावेन |
| ,, ... | १७ ... | ज्ञानानिष्ठ ... | ज्ञाननिष्ठ |
| १०२ ... | ५ ... | निचारातीत ... | विचारातीत |
| ,, ... | १४ ... | एकं स्थायी ... | एकः स्थायी |
| ,, ... | १९ ... | वैनाशीकयत्नौ ... | वैनिशिकयत्नौ |
| १०४ ... | २ ... | स्तयोरूपलब्धेः ... | स्तयोरुपलब्धेः |
| १०५ ... | ३ ... | न्यथा ... | न्यथा |
| ,, ... | १४ ... | सुचिवस्त्राभरण ... | शुचिवस्त्राभरण |
| ,, ... | १६ ... | पश्यनादिशब्दाः ... | पश्यादिशब्दाः |

| पृष्ठे । | पङ्क्तौ । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १०६ ... | १७ ... | इत्यास्ति ... | इत्यस्ति |
| ,, ... | १८ ... | आदेचोपदेशे ... | आदेच उपदेशे |
| १०८ ... | २१ ... | ज्ञातिकर्माणि ... | ह्रातिकर्माणि |
| १०९ ... | २३ ... | लोप इति च ... | लोप इटि च |
| १११ ... | १३ ... | अस्त्यैवैकान्ततः ... | अस्त्येवैकान्ततः |
| ११३ ... | ४ ... | सदसत्वयोः ... | सदसत्त्वयोः |
| ११४ ... | ११ ... | व्यवस्थयैवा ... | व्यवस्थयेवा |
| ,, ... | १७ ... | मसप्रक्तेन ... | मप्रसक्तेन |
| ११५ ... | ६ ... | सत्वदशा ... | ऽसत्वदशा |
| ,, ... | २० ... | अयक्तीति ... | अस्तीति |
| ११७ ... | ४ ... | किञ्च ... | किञ्च |
| ११८ ... | ५ ... | प्रसङ्गात् ... | प्रसङ्गात् |
| १२२ .. | ४ ... | जरी म्तः ... | जरो म्तः |
| ,, ... | १३ ... | त्रिपुराड ... | त्रिपुराडं |
| १२३ ... | १७ ... | सर्यान्का .. | सर्वान्का |
| ,, ... | १८ ... | ब्रह्मवर्चस्वी ... | ब्रह्मवर्चस्वी |
| १२५ ... | ३ ... | चतुर्तिंध ... | चतुर्विध |
| १२६ ... | १५ ... | साक्षी चेत्ता ... | साक्षी चेता |
| १२७ ... | १३ ... | बार्द्धके ... | वार्धके |
| ,, ... | २३ ... | वच्छेदेन ... | वच्छिन्नं |
| १२८ ... | ७ ... | किच्च ... | किञ्च |
| १३१ ... | ८ ... | दिक्कालयोः ... | दिक्कालयोः |
| १३२ ... | २० ... | वुद्ध्यादयो ... | बुद्ध्यादयो |
| १३५ ... | १० ... | वाधव्याध ... | बाधव्याध |
| १३६ ... | २ ... | स्वादत्यनम्र ... | स्वादत्त्यनम्र |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १४३ | २१ | निमुक्तास्वरति | विमुक्तास्वरति |
| १४५ | १० | चिदखिण्डनां | चिदखिडनां |
| १४७ | १६ | उद्देश्याऽसिद्धेः | उद्‌देश्यासिद्धेः |
| १४८ | १७ | सम्पायितुमप्र | सम्पादयितुमप्र |
| ,, | २१ | प्राक | प्राक् |
| १५२ | ४ | श्रयीभुतान्तःकरण | श्रयीभूतान्तःकरण |
| ,, | १५ | श्रद्धाऽश्रद्धाह्रीर्भी-धीरित्येतत् | श्रद्धाऽश्रद्धाधृतिर-धृतिर्ह्रीर्धीर्भीरित्ये-तत् |
| १५३ | ७ | द्रष्ठा | द्रष्टा |
| १५६ | ४ | श्रुत्त्वा | श्रुत्वा |
| ,, | २४ | परमं पदं | परमं पदं |
| १५७ | २ | बाह्यदौषैः | बाह्यदोषैः |
| ,, | ९ | तस्मान्नात्म | तस्मान्ननात्म |
| १५८ | १४ | पा. ३ सू. | पा. २ सू. ३ |
| १६० | ५ | प्रतियोगादि | प्रतियोग्यादि |
| ,, | ६ | एव तृतीयः | एव न तृतीयः |
| ,, | १० | भ्रमत्वस्य भ्रमत्वप्र-सङ्गात् | भ्रमत्वप्रसङ्गात् |
| ,, | २१ | उक्ष्यत्वे उक्ष्यस्य | लक्ष्यत्वे लक्ष्यस्य |
| ,, | २२ | कल्पस्य उक्ष्यत्वं | कल्पस्य लक्ष्यत्वं |
| १६३ | २२ | इत्वेव ख० | इत्येव ख० |
| १६४ | १० | वाच्यवत् | वाच्यत्ववत् |
| १६७ | १२ | हैरम्बादि | हैरम्बादि |

| पृष्ठे । | पङ्क्तौ । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १७१ | २० | स्वरूपमेदापत्ति | स्वरूपभेदापत्ति |
| १७२ | १० | भिन्नावेव | ऽभिन्नावेव |
| १७३ | २३ | सम्बन्ध | सम्बन्ध |
| १७४ | ७ | तयोर्मेदाभेदौ | तयोर्भेदाभेदौ |
| १७८ | १४ | सद्भावो आत्मा | सद्भाव आत्मा |
| १८२ | ८ | ऐन्द्रिजालिक | ऐन्द्रजालिक |
| १८५ | १० | ब्रह्मातिरक्तस्य | ब्रह्मातिरिक्तस्य |
| १८७ | २१ | काय आकाशादि | कार्यं आकाशादि |
| १८९ | २० | विज्म्भणत्वाच्च | विज्म्भणत्वाच्च |
| १९१ | १७ | ग्टहीतु | ग्रहीतु |
| १९८ | २ | प्यप्रामाणिकमेव | प्यप्रामाणिकमेव |
| १९९ | ४ | तत्कार्य | सत्कार्य |
| ,, | ७ | उत्पत्यान्नि | उत्पत्त्यादि |
| २०१ | ३ | रज्वां | रज्ज्वां |
| ,, | ८ | त्तेर्दुर्निरूपत्व | त्तेर्दुर्निरूपत्व |
| २०५ | ८ | उत्पत्यन्ताभावेन | उत्पत्त्यन्ताभावेन |
| २०७ | २३ | आत्मा विज्ञय' | आत्मा विज्ञेय' |
| २०९ | १७ | वृत्त्यथ | वृत्त्यर्थं |
| २१० | २२ | सभ्यक् दर्शनं | सम्यक्दर्शनं |
| २११ | १८ | सम्बन्धेन | सम्बन्धेन |
| २१२ | १४ | सन् | स न |
| ,, | २४ | सौषप्तचतन्य | सौषुप्तचैतन्य |
| २१४ | ९ | वपामुदखिनत् | वपामुदखिदत् |
| ,, | १८ | वाप्यनिर्मोचनं | बाष्पनिर्मोचनं |
| ,, | २४ | पर्ववर्णा | पूर्ववर्णन |
| २१७ | १४ | रननुष्ठानात् | रननुष्ठानात् |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ,, | २१ | रङ्गाङ्गो | रङ्गाङ्गी |
| २२१ | २१ | कारणाण्यनाश्रित्य | कारणान्यनाश्रित्य |
| २२३ | २३ | एवम्मतं | एवंभूतं |
| २२४ | ६ | सर्वंकर्माखिलं | सर्वं कर्माखिलं |
| २२७ | १२ | उद्दालकः | उद्दालकः |
| ,, | १३ | यन्विदं | यद्विदं |
| २३० | १५ | भाकारा | भाकरा |
| २३३ | २४ | सर्वकाय | सर्वकार्य |
| २३६ | २४ | उत्तरा | आरा |
| २४३ | १६ | लच्चणाय | चच्चणाय |
| २४४ | ३ | सनावनः | सनातनः |
| २४७ | १७ | दिव्यतीति | दीव्यतीति |
| २५१ | २० | रज्वां | रज्ज्वां |
| २५२ | ७ | दृंष्ठे विष | दृंष्ट्रेर्विष |
| ,, | ६ | स्पृश्येत् | स्पृशेत् |
| २५७ | १३ | विप्सा | वीप्सा |
| ,, | १४ | णब्रह्मः | ब्रह्मणः |
| २६० | ६ | विंघ्नौ | वेघ्नौ |
| ,, | २० | कार्यविरु | कारणविरु |
| २६१ | १२ | प्रवंस्था | सर्वस्था |
| २६४ | १६ | न रूपस्य | नीरूपस्य |
| २६६ | १५ | तथ अन्तः | तथा अन्तः |
| २६७ | १७ | चैतन्यस्ये | चैतनस्ये |
| २६८ | ४ | चिच्चेत्य | चिच्चैत्य |
| ,, | १६ | प्रमासान्यक- | प्रमासामान्यक |
| २७३ | २ | पुरुरू | पुरुरू |

| पृष्ठे। | पङ्क्तौ। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| २७३ .. | १४ .. | ब्रह्मज्ञानाबाध्य .. | ब्रह्मज्ञानाबाध्य |
| २७६ .. | २३ .. | धावति .. | धावति |
| २७७ .. | ७ .. | विंशति शुखः .. | विंशतिमुखः |
| २७८ .. | २ .. | जाग्टदवस्था .. | जाग्रदवस्था |
| २८० .. | ६ .. | रण्याप .. | रण्योप |
| २८२ .. | २ .. | वनाभ्यास .. | वनाभ्यास |
| २८६ .. | ७ .. | जलत्वा .. | जडत्वा |
| २८७ .. | १० .. | रज्वां .. | रज्ज्वां |
| २९८ .. | १६ .. | इत्यभिमुखाय .. | इत्यमभिमुखाय |
| ३०० .. | २ .. | किञ्च .. | किञ्च |
| ,, .. | २५ .. | वृत्त्यपूर्णा .. | वृत्त्या पूर्णा |
| ३०५ .. | ८ .. | समानखभाव .. | समानखभाव |
| ३०९ .. | १५ .. | द्रष्टत्वासम्भवेन .. | द्रष्टृत्वासंभवेन |
| ,, .. | १६ .. | चेता .. | चेत्ता |
| ३१५ .. | २३ .. | भान्तिहेतुः .. | भ्रान्तिहेतुः |
| ३३१ .. | ६ .. | चिदासासौ .. | चिदाभासौ |
| ,, .. | २३ .. | प्रबिबिम्बित .. | प्रतिबिम्बित |
| ३३३ .. | १८ .. | अप्राण्यस्वीकारात्.. | अप्रामाण्यस्वीकारात् |
| ३३५ .. | १६ .. | अव्याचिर व्यासु .. | अव्याचिरव्यासु |
| ३४२ .. | १४ .. | प्राद्वेतरोद्भूत .. | प्राब्देतरोद्भूत |
| ३४९ .. | ९ .. | सावयमज्ञानं .. | सावयवमज्ञानं |
| ३५० .. | ४ .. | हिंसानुवन्धि .. | हिंसानुब |
| ३५२ .. | ३२ .. | मवति .. | भवति |
| ३५३ .. | २० .. | वदत् .. | वदेत् |

---

ओं नमः श्रीगणेशाय ।



# अद्वैतब्रह्मसिद्धिः ।

नमामि सद्गुरुं[1] शान्तं ब्रह्मानन्दं मुनीश्वरम् ।
यत्कृपालवलेशेन[2] सत्तर्कस्फुरणं मम ॥ १ ॥
श्रीमन्नारायणाचार्यं सनातनशिवं[3] सदा ।
वन्दे ऽहं वाङ्मनःकायैर्द्वैतध्वान्तनिवृत्तये ॥ २ ॥
श्रुतिसिद्धं च यद्ब्रह्म सच्चिदानन्दमद्वयम् ।
तदत्र चिन्त्यते तर्कैर्मनोमलनिवृत्तये[4] ॥ ३ ॥

इह खलु श्रुतिस्मृतीतिहासपुराणाद्यखिलवाङ्मयसिद्धमप्यद्वयं ब्रह्म जन्मान्तरीयदुरितप्राबल्येन द्वैतसत्यत्वाभिनिवेशवशात् केचिन्मन्दमतयः श्रुतितात्पर्यानभिज्ञाः नरकप्राप्तिहेतून् बहून् गुरुशास्त्रं मिथ्या सत्यं वा-इत्याद्यसत्तर्कानुद्भावयन्ति । तद्दूषयितुं, तैस्तैरुद्भावितैरपक्वज्ञाननिष्ठानामसम्भावनादिदोषाः मनसि प्ररोहन्ति । तथा च मुमुक्षूणामसम्भावनादिदोषध्वंसार्थं दुर्दुरूढवादिमुखध्वंसार्थं[5]

१ तं गुरुं, सच्चिदानन्दब्रह्मरूपमित्यपि ख. चिह्नितपुस्तकपाठः ।
२ लेशमात्रेणेति ख. ग. चिह्नितपुस्तकपाठः ।
३ गुरुमिति ग. पुस्तकपाठः ।
४ विशुद्धये इति ख. ग. पुस्तकपाठः ।
५ इदं ख. पुस्तके नास्ति ।

च मुद्गरप्रहाररूपाः सत्तर्काः* प्राधान्येन चिन्त्यन्ते। तथा हि। गुरुशास्त्रं मिथ्या सत्यं वा? इति वदन्वादी प्रष्टव्यः। किं गुरुशब्देन देहो ऽभिधीयते उत देही? यद्वा सच्चिदानन्दाद्वयं ब्रह्म? आद्ये स किमसत्कार्यवादाभिप्रायेणावयवैरारभ्यते उत सत्कार्यवादाभिप्रायेण प्रधानमहदादिक्रमेण पञ्चमहाभूतानि परिणमन्ते[१]? यद्वा सत्कारणवादाभिप्रायेणाद्वयं ब्रह्मैव विवर्तते? आस्तिकनास्तिकद्वादशदर्शनेषु वक्ष्यमाणेषु त्रिविधप्रस्थानभेदातिरिक्तप्रस्थानभेदस्याप्रसिद्धत्वात्। तत्र न तावदाद्यः। निर्युक्तिकत्वाच्छ्रुतिविरुद्धत्वाच्च। तथा हि। किमिदमसत्कार्यत्वं नाम देवानां प्रियस्य? अथ सतः परमाणुद्वयसकाशादुत्पत्तेः पूर्वमसत्द्व्यणुकादेरुत्पत्तिरिति चेत् न। तत्र हि परमाणुद्वयं द्व्यणुकसमवायिकारणम्। द्व्यणुकं च शशशृङ्गादिवदसदित्यसत्वाविशेषाच्छशशृङ्गादिकारणतापि स्यात्। तच्च विरुद्धम्। सदसतोस्समवायासम्भवात्। नन्वसत्वं प्रागभावप्रतियोगित्वं ब्रूमः। न तु वायुरूपादिवत्कालत्रये ऽप्यसत्वमिति चेत्। भ्रान्तो ऽसि। किमिदं प्रागभावप्रतियोगित्वमसत्वं नाम? किं प्रागभावप्रतियोगित्वादसत्वम् उत असत्वात्प्रागभावप्रतियोगित्वम्? नाद्यः। सर्वेषां कार्यपदार्थानामसत्वावि-

---

* तर्कस्तावद्द्विविधः सत्तर्क असत्तर्कश्चेति। तर्काप्रतिष्ठानादित्येतस्मिन् सूत्रे भगवता भाष्यकृता असत्तर्कस्यैव निषिद्धत्वात्। विद्यारण्यगुरुभिरपि "श्रुतियुक्त्यनुसारेण तर्क्यतां माकुतर्क्यताम्" इत्युक्तत्वात् श्रुतियुक्त्यनुकूलस्य सत्तर्कस्य सर्वैरादृतत्वात्।

---

१ विपरिणमन्ते इति ख. पुस्तके वर्तते।

शेषेण खपुष्पादीनामपि सत्त्वेनैव व्यवहारः स्यात् । कार्यत्वावच्छेदेन प्रागभावप्रतियोगित्वनियमात् । नचेष्टापत्तिरिति वाच्यम् । कार्यपदार्थगतगुणसामान्याद्युच्छेदप्रसङ्गात् । तेषां भवन्मते भावधर्मत्वेन स्वीकारात् । न च शशविषाणकूर्मलोमादेरस्यासतो[1] विशेषः स्वीक्रियत इति वाच्यम् । सामान्याद्यभावेन भेदकधर्माभावात् । नापि द्वितीयः । असत्त्वात्प्रागभावप्रतियोगित्वे तु नरशृङ्गादीनामपि[2] प्रागभावप्रतियोगित्वं स्यात् । प्रागभावस्य च प्रतियोग्युत्पादकत्वनियमेन सर्वेषामसतां सत्त्वं स्यात् । नचेष्टापत्तिः । सदसद्विभागयोर्दत्तजलाञ्जलिप्रसङ्गः स्यात् । ननु[3] परमाणुषु शशशृङ्गस्य वायौ रूपादेरिवात्यन्ताभावेनैव प्रागभावाभावः । वायौ रूपं नास्तीत्यादिप्रतीतिगम्यात्यन्ताभावस्यैव तत्र स्वीकारात् । प्रागभावात्यन्ताभावयोश्च विरोधात् । इति चेत् न । अभावसामान्यस्य समवायनिराकरणप्रस्तावे प्रागभावप्रध्वंसयोश्च तृतीयमुद्गरे विस्तरेण निराकार्यमाणत्वाच्च । यच्चोक्तं परमाणुभ्यां द्व्यणुकोत्पत्तिरिति सा उत्पत्तिः किं सती उत असती ? आद्ये कारणव्यापारवैयर्थ्यम् । द्वितीये तु असदुत्पत्तिरुत्पद्यत इति तदुत्पत्तेरप्युत्पत्त्यन्तरं तत्रा-

---

१ रिवास्यासतो इति ख. पुस्तके ।

२ शशशृङ्गादीनां इति ख. ग. पुस्तकयोः ।

३ नन्वित्यारभ्य निराकार्यमाणत्वादित्यन्तं ख. ग. पुस्तकयोर्नास्ति । क. पुस्तके ऽस्यैव पाठान्तरं-ननु परमाणुषु शशशृङ्गवायुरूपादेः प्रागभावाभावादेव सत्वाप्रतीतिः । वायौ रूपं नास्तीतिप्रतीतिगम्यात्यन्ताभावस्यैव तत्र ग्रहणात् इति ।

ष्यन्यदिति स्फुटैवानवस्था। अथ पटात्तदुत्पत्तिर्नातिरिच्यत इति चेत् न। तदा पट इत्युक्ते पुनरुत्पद्यत इति वक्तुमशक्यम्। पौनरुक्त्यदोषात्। तस्मात्स्वसत्तासमवायो वा स्वकारणसमवायो वा द्व्यणुकाद्युत्पत्तिः। सा च न सम्भवति। समुदायस्य नित्यत्वात् कारणव्यापारो व्यर्थः। अग्रे समवायस्य विस्तरेण निराकार्यमाणत्वाच्च। ननु द्व्यणुकाद्युत्पत्तिर्नानुपपन्ना। तथा हि। वैशेषिकाणां परमाणुसमर्थकमनुमानं। सर्वं कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवस्वसमानजातीयानेकद्रव्यारब्धं भवितुमर्हति। सावयवत्वात्। यत्सावयवं तत्स्वपरिमाणादणुतरपरिमाणसंयोगसचिवस्वसमानजातीयानेक द्रव्यारब्धं दृष्टम्। यथा तन्त्वारब्धः पट इति। एवं यत्किञ्चित्सावयवं द्व्यणुकादिकार्यं तत्सर्वमेवंविधद्रव्यारब्धमिति। अतो ऽत्यन्ताणुपरिमाणा निरवयवाः संयोगसचिवाः कार्येण पार्थिवत्वादिना समानजातीया नित्या बहवश्च परमाणवः सावयवद्रव्याणामारम्भकाः सिद्धाः। न च 'न कदाचिदनीदृशं जगत्। किन्त्वीदृशमेव[१]' इत्यादिन्यायेन अनाद्यनन्तत्वाज्जगतो हेत्वाकाङ्क्षाभावान्न परमाण्वपेक्षेति वाच्यम्। विमतमाद्यन्तवत्। सावयवत्वात्पटवदित्यनुमित्या जगदाद्यन्तवत्त्वनिश्चयात्। न च स्वभावादेवोत्पत्तेर्न कारणाकाङ्क्षेति वाच्यम्। विमतं सकारणकम् कार्यत्वात्सम्मतवत् इति कार्यस्य सकारणकत्वनिश्चयात्। न च कार्यत्वे ऽपि ब्रह्मण एवास्तु कारणतेति वाच्यम्। तस्य निर्गुणत्वान्निरवयत्वाच्चारम्भकसंयोगासम्भवात्। न च परमाणवो ऽप्यनित्याः मूर्त्तत्वात् घटवत् इति

१ क. ग. पुस्तकयोरिदं नास्ति।

वाच्यम्। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवत् । इत्यनुमानान्महत्त्वापकर्षविश्रान्तिभूमित्वेनाणूनां परतो विभागासम्भवात्। कारणविभागात्कारणविनाशाद्वा कार्यद्रव्यस्य नाशाभ्युपगमात्। अणूनामपि सकारणत्वकल्पने अनवस्थानात्सृष्टिप्रलयाद्यभावप्रसङ्गः । तस्मात् कार्यद्रव्यस्य परमाणुपर्यन्तो विभाग एव प्रलयः । न चानेकद्रव्यशेषे स कथमिति वाच्यम्। कार्यद्रव्यमात्रस्य युगपन्नाशो ऽवान्तरप्रलय इत्यभ्युपगमात् । सर्वकार्यध्वंसो[1] महाप्रलय इति। भावकार्यं तु चतुर्विधपरमाणुक्रिया । यतो ऽवान्तरप्रलये दोधूयमानाः परमाणवस्तिष्ठन्तीति स्वीकारात्। सृष्टिक्रमस्तु प्रनष्टे जगति परमेश्वरस्य सिसृक्षायां सत्यां प्राणिनां कर्मवशात् निखिलेषु परमाणुष्वाद्यं कर्मोत्पद्यते । तस्मात्कर्मण एकः परमाणुः परमाण्वन्तरेण संयुज्यते। तस्माच्च संयोगाद्व्यणुकमारभ्यते । तेभ्यस्त्रिभ्यो द्व्यणुकेभ्यस्त्र्यणुकमित्यादिक्रमेण वाय्वादिसकलं जगज्जायते। अणुगतेभ्यस्तु रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि सम्भवन्ति तन्तुपटन्यायेन इति किमनुपपन्नम्। इति चेत् नैतत्सारम्। तथा हि। परमाणूनामाद्यस्यान्यस्य च कर्मणो निमित्तमस्ति न वा? नान्त्यः। आकस्मिकत्वापत्तेः। आद्ये तन्निमित्तं दृष्टमदृष्टं वा? दृष्टमपि किं यत्नः? यथा शरीरचेष्टायाम् । किं वा अभिघातः? क्रियाविषयद्रव्यस्य द्रव्यान्तरेण संयोगात्मकः। यथोद्यमितमुशलस्योलूखलेन । यथा वा तरुषु पवनस्य। अथ वा संयुक्तस्य विशेषाक्षेपः स एव संयोगो नो-

१ सर्वं इत्यारभ्य स्वीकारादित्यन्तं क. पुस्तके नास्ति।

दनाख्यः। यथा आक्षेपानुकूलयत्नापेक्षः मन्नद्धः करशरसंयोगः। यद्वा नोदनेन तुल्ययोगक्षेमः संस्कारो वेगः स्थितस्थापको वा? गुरुत्वं वा? तत्र नाद्य उपपन्नः। तदानीमात्ममनःसंयोगस्य निरूपयितुमशक्यत्वात्। नचात्ममनसोर्नित्यत्वात्तत्संयोगाख्यः प्रयत्नो ऽस्तीति वाच्यम्। शरीरप्रतिष्ठितयोरेवात्ममनसोः संयोगे सत्यात्मगुणप्रयत्नाद्यभ्युपगमात्। प्रलये च शरीराद्यभावात्। अन्यथा मुक्तावपि बुद्ध्यादिविशेषगुणोत्पत्त्या संसारापत्तेर्दुर्वारत्वात्। नापि द्वितीयादयः। अभिघातादीनां प्रयत्नसापेक्षत्वात्। अथास्त्वदृष्टमेव निमित्तमिति चेत्। न। तत्किमात्मसमवेतं परमाणुसमवेतं वा? न कर्मनिमित्तम् *। अचेतनत्वात्। न चाचेतनमेवादृष्टं लोष्टस्याश्मेव कर्म निमित्तमस्तु इति वाच्यम्। चेतनानधिष्ठितस्य परमाणोरदृष्टसान्निध्यस्य सदातनत्वे प्रलयाद्यभावः। असान्निध्ये च सृष्ट्यभावप्रसङ्गात्। अथ चेतनाधिष्ठितमेव कर्म † निमित्तमदृष्टमिति चेत्। तर्हि जीवाधिष्ठितमीश्वराधिष्ठितं वा? नाद्यः। प्रलये जीवानां त्वन्मते चैतन्याभावात्। न द्वितीयः। ईश्वरस्य नित्यसन्निहिततया कादाचित्कप्रवृत्तिहेतुत्वायोगात्। किञ्च तव मते ईश्वरस्य प्रवृत्तिरेव न सम्भवति। यतः सा हि सुखे दुःखाभावे तत्साधने च दृश्यते। ईश्वरस्य च तृप्तकामत्वेन तदभावस्य स्वतः सिद्धत्वात्। "आत्मकामस्य का स्पृहा" इति श्रुतेः। किञ्च परमाण्वधिष्ठाता ईश्वरः परमाणुक्रियां प्रति निमित्तमात्रं प्रत्यक्षसिद्धः अनुमानसिद्धो

---

* परमाणोराद्यक्रियानिमित्तमित्यर्थः।

† अत्र कर्मशब्देन प्रथमा क्रियैवेति ज्ञेयम्।

वा ? नाद्यः । तस्य परोक्षत्वात् । न द्वितीयः । लिङ्गाभावात् । न च आद्यकार्यं सकर्तृकं कार्यत्वात् घटवत्-इति लिङ्गसम्भव इति वाच्यम् । आद्यकार्यं नानाकर्तृजन्यं कार्यत्वात् प्रासादादिवत्-इति सत्प्रतिपक्षादाभासत्वम् । यदि तु क्षितिः स कर्तृकेत्येव पक्षः तदापि परमाणुषु अंशतो ऽसिद्धिः घटादिषु सिद्धसाधनं च दोषः । घटस्य हि कपालिकाद्वयसंयोगानन्तरं सिद्धत्वेन कुलालस्य तत्पितृवदन्यथा सिद्धत्वात् दृष्टान्तासम्भवः । तथा च श्रुतिः—

निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिं च यत् ज्ञात्वा मुच्यते बुधः ॥

इति । न च श्रुतिसिद्धस्यानुमानविषयत्वम् । सिद्धसाधनात् । न चास्तिकं प्रत्यनुमानोपन्यासस्य व्यर्थत्वे ऽपि नास्तिकं प्रति सार्थकत्वादिति वाच्यम् । इष्टापत्तेः । तृतीये तु । वक्ष्यमाणअभिन्ननिमित्तोपादानस्यैव श्रुत्या प्रतिपादनात् । न निमित्तमात्रत्वस्य । तस्य च मायाद्वारैव सिद्धत्वात्कुत्र परमाण्वाद्यपेक्षा । तथाच श्रुतिः—

मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम् ।
स मायी सृजते विश्वं-

इत्यादि । किञ्च । तददृष्टं विपाकानपेक्षमेव कर्म निमित्तं तदपेक्षं वा ? नाद्यः । सृष्टेः प्रागपि कर्मोत्पादसम्भवेन प्रलयाद्यभावप्रसङ्गात् । न द्वितीयः । अदृष्टकृतकादाचित्काणुगतकर्मासम्भवात् । तथा हि । विपाको नाम ह्यदृष्टं गतः कश्चिद्धर्मो न जायते । किन्तु कर्मविधिना कालविशेषनियतफलदातृत्वं यस्य कर्मणस्तोदितं तस्य कालागम एव विपाकः । अनियतकालविशेषाणां कर्मणां प्रबल-

कर्मान्तरप्रतिबन्धाभावो वा विपाकः। अदृष्टानि हि तत्तत्काल-कृतकर्मानुगुणफलदायित्वेन विविधकालफलदानस्वभावानि *। अतो ऽनन्तैरात्मभिः विविधकालफलदायित्वेनानुष्ठितानां कर्मणामेक-दैकरूपविपाको न सम्भवति। एवं परमाणुसमवेतत्वमप्यदृष्टस्य न।

दृष्टादीनामात्मन्येव समवायाङ्गीकारात्। न च समवायाभावे ऽप्यणुसंयुक्तात्मसमवेतत्वाददृष्टस्याणुभिः संयुक्तसमवायो ऽस्तीति वाच्यम्। आत्मनः सर्वगतत्वेन सदाणुसम्बधादणुप्रवृत्तेरविच्छित्तेः अण्वात्मनोः संयोगस्याणुकर्मजत्वे ऽपि तत्प्रवाहसातत्यात्प्रवृत्तिसातत्यमेव न द्व्यणुकाद्युत्पत्तिः। न चागन्तुकसंयुक्तसमवाय इति वाच्यम्।

---

* ननु नित्यानां कर्मणां कुत्रोपयोगः. इति चेत्। उच्यते। इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानीति चेत् न। अकरणे प्रत्यवायश्रवणात्। प्रत्यवायशब्दो हि अनिष्टविषयः। नित्याकरणनिमित्तस्य प्रत्यवायस्य दुःखरूपस्यागामिनः परिहारार्थानि नित्यानीत्यभ्युपगमात् नानारब्धकर्मफलक्षयार्थानि। यदि नामानारब्धकर्मक्षयार्थानि नित्यानि कर्माणि स्वीक्रियेरन् तर्ह्यशुद्धमेव क्षयेयुर्न तु शुद्धं कर्म। विरोधाभावात्। नह्यीष्टफलस्य कर्मणः शुद्धरूपत्वान्नित्यैर्विरोधः सम्भवतीति वाच्यम्। अनात्मविदो हि कामो अनात्मविषय एव स्यात्। आत्मनि च कामनानुपपत्तेर्नित्यत्वात्। "स्वयञ्चात्मा परं ब्रह्म" इत्युक्तम्। नित्यादीनां चाकरणासम्भवः। यतः प्रत्यवायानुपपत्तिः। अतः पूर्वोपचितदुरितेभ्यः प्राप्यमाणायाः प्रत्यवायक्रियायाः नित्याकरणं लक्षणं इति शतुर्नानुपपत्तिः। अन्यथा ह्यभावाद्भावोत्पत्तिरिति सर्वप्रमाणकोपः स्यात्। अतो ऽयत्नतः आत्मन्यवस्थानानुपपन्नमिति तैत्तिरीयोपनिषद्भाष्यम्।

अदृष्टादागन्तुकः संयुक्तसमवायः। आगन्तुकसंयुक्तसमवायाच्चादृष्टपरिकल्पनमित्यन्योन्याश्रयात्। किञ्च न केवलं हेत्वभावादणुसंयोगानुपपत्तिः। किन्तु परमाणुषु संयोगस्वरूपानुपपत्तिरपि। तथा हि। परमाण्वोः परस्परसंयोगो व्याप्यवृत्ति[1]र्वा अव्याप्यवृत्तिर्वा? आद्ये एकस्यापरेण बाह्याभ्यन्तरेण व्याप्तौ परमाणुमात्रतापत्तेरुपचयानुपपत्तिः। प्रदेशवद्द्रव्ययोरेव संयोगदर्शनात्। कर्णशष्कुलीसंयोगस्याकाशे व्याप्यवृत्तौ देशान्तरीयशब्दग्रहणप्रसङ्गात् च। न द्वितीयः। निर्विभागे तस्मिन्निन्द्रियाद्यगोचरे दृष्टानुसारेण स्वात्यन्ताभावसमानाधिकरणसंयोगासम्भवात्। सावयवत्वेन जन्यत्वादिप्रसङ्गाच्च। किञ्च दिग्देशकालावच्छेदोऽपि तस्यास्ति न वा? आद्ये निरवयवस्यावच्छेदकत्वे व्याघातः। अन्त्ये तु। परमाण्वोर्व्योम्नोर्निष्प्रदेशत्वाविशेषात्तुल्यपरिमाणतापत्तिः। तथा च व्योम्नोऽणुत्वं अणोर्विभुत्वं चापद्येत। एतेन निरवयवतया समवाय्यसमवायिकारणाभावात् व्योमादीनामणूनां च अनुत्पत्तिर्निरस्ता। न च त्रुटावेवास्तु विश्रान्तिरिति वाच्यम्। गौतमकाणादाभ्यामनङ्गीकारात्। परिच्छिन्नस्योपादानं विना महत्वायोगात्। मध्यमपरिमाणस्यानित्यत्वनियमाच्च। एतेन यत् पदार्थखण्डने शिरोमणिना—

परमाणुसद्भावे मानाभावात् त्रुटावेव विश्रान्तिः। न च योगजप्रत्यक्षं मानमिति वाच्यम्। तर्हि योगिन एव गत्वा प्रष्टव्याः।

इत्यादि वल्गितं तदप्यपास्तम्। अपसिद्धान्तत्वात्। किञ्च परमाणवः किं प्रवृत्तिस्वभावा निवृत्तिस्वभावा वा? उभयस्वभावा

---

[1] क. पुस्तके 'व्याप्यवृत्तिरव्याप्यो वा'? इति वर्तते।

अनुभयस्वभावा वा? आद्ये नित्यमेव प्रवृत्तेर्भावात् प्रलयाभावप्रसङ्गः। द्वितीये नित्यमेव निवृत्तेर्भावात्सर्गाभावप्रसङ्गः। न तृतीयः। असम्भवात्। चतुर्थे तु—निमित्तवशात्प्रवृत्तिः तद्वशान्निवृत्तिश्च। निमित्तन्तु पूर्वमेव निराकृतमस्माभिः। यच्च परमाणोरणुत्वं निरवयवत्वं नित्यत्वं स्पर्शवत्त्वं चाभ्युपगम्यते तत्र अणूनां स्पर्शवत्त्वेनैव स्थूलत्वं सावयवत्वमनित्यत्वं च प्रसज्येत। एकधर्माभ्युपगमे धर्मान्तरस्यापि नियतत्वात्। घटादौ तथा दर्शनात्। न च परमाणवो नित्याः सत्वे सत्यकारणवत्त्वादिति वाच्यम्। स्पर्शवत्त्वेन कारणवत्त्वोपपत्तेः। न च—कार्यनित्यत्वनिषेधः तत्प्रतियोगिवस्तुपूर्वकः। निषेधत्वात् घटनिषेधत्ववत्—इत्यणूनां नित्यत्वमिति वाच्यम्। निषेधस्यात्मनित्यत्वेनाप्युपपत्तेः। ननु जन्यद्रव्यं प्रति संयोगस्यान्यथानुपपत्त्यारम्भकतया क्लृप्तत्वात्सर्गाद्यवच्छिन्नो ऽनवच्छिन्न एव वास्त्विति चेत्। न। अन्यथानुपपत्तेरभावात्।

तथा हि। किं संयोगस्य संयोगत्वसामान्येन कारणता उत संयोगविशेषत्वेन? नाद्यः। घटकारणीभूते एकस्मिन्नेव मृत्कपाले तत्तत्प्रदेशावच्छिन्नसंयोगेभ्यः शरावाद्युत्पत्तेरसम्भवात्। संयोगसामान्येन संयोगैक्ये एकस्य घटकार्यस्यैव सम्भवात्। न द्वितीयः। घटादिस्थले ऽवयवसंयोगविशेषस्य सत्यपि कारणत्वे दुग्धजलघृतादेर्दधिहिमरूपेण परिणामस्थले ऽवयवक्रियादिष्वेव कारणत्वकल्पनात्। तत्र संयोगपरम्पराधीनावयवपरम्परोत्पत्तिक्रमेण द्रव्योत्पत्तिकल्पने गौरवात्। तथा ऽननुभवाच्च। न हि तावद्देशव्यापिदीपप्रभादेरवयवपरम्परोत्पत्तिक्रमेणोत्पत्तिः केनाप्यनुभूयते। एतदभिप्रेत्यैव भगवता भाष्यकारेणाप्युक्तम्॥

कार्यारम्भो ऽपि न केवलावयवसंयोगेनैव भवति। क्षीरजलादीनां अन्तरेणाप्यवयवसंयोगान्तरं दधिहिमादिकार्यारम्भदर्शनात् ॥

इति। अत्रानन्दगिरिस्वामिव्याख्या। आदिशब्देन लवणादि-ग्टह्यते। क्षीराद्यनुगुणादवयवसंयोगादतिरिक्तो दध्याद्यनुगुणः संयोगो ऽवयवसंयोगान्तरं विनेत्यर्थः। दध्यादिषु सत्यपि कार्यद्रव्यत्वे विशिष्टा-नेकद्रव्यारब्धाऽसिद्धेरनैकान्त्यात्। एतेन कार्यद्रव्यं स्वपरिमाणादणु-तरपरिमाणारब्धं कार्यद्रव्यत्वादित्यपास्तम्। ननु—जालसूर्यमरीचिस्थं यत्सूक्ष्मं रजो दृश्यते त्रुट्याख्यं तत्कार्यं भवितुमर्हति सावयवत्वात्—इत्यनुमानेन त्रुटिकारणीभूतं द्व्यणुकं सिद्ध्यति। एवं—द्व्यणुकमपि सावयवं भवितुमर्हति आद्यकार्यत्वात्। तदारम्भकौ च परमाणू। तयोरपि कार्यत्वे ऽवयवानन्त्यात् सुमेरुराजसर्षपयोः समपरिमाणा-पात इत्येवं परमाणवः निरवयवाः सिद्ध्यन्ति। तेषां संयोगो ऽपि कार्यान्यथानुपपत्त्या सिद्ध्यति। तत्र च संयोगो व्याप्यवृत्तिरव्याप्य-वृत्तिरित्यादिविकल्पानवकाशः। "न हि दृष्टे ऽनुपपन्नं नाम" इति न्यायात्-इति चेत्। न। त्रुटेरन्यथाप्युपपत्तिसम्भवात्।

तथा हि। आदौ वक्ष्यमाणपञ्चीकरणानुसारेणाकाशादिक्रमे-णाविद्यायां महापृथ्वी जायते। तदनन्तरं पृथिव्युपादानीभूताया-मविद्यायां घटो जायते। घटोपादानीभूतायामविद्यायां दण्डा-द्यभिघातजक्रियया कपालिका उत्पद्यन्ते। कपालिकोपादानी-भूतायामविद्यायां अभिघातक्रियया चूर्णरजो[१] जायते। चूर्णरज

१ 'चूर्णं रजः' इति क. पुस्तके। रजः शब्दस्य पुंस्त्वमपि। यथाहामर-सिंहः। "पांसुर्ना न द्वयोरजः"। इति।

उपादानीभूतायां पूर्वं त्रुटिर्जायते । अभिघातरूपक्रियाया अप्युपादानीभूता अविद्यैव * । सिद्धान्ते जगत्सर्गे अविद्यातिरिक्तसामग्र्यनङ्गीकारात् । तदुक्तं विष्णुपुराणे—

मही घटत्वं घटतः कपालिकाः कपालिकाचूर्णरजस्ततो ऽणुः ।
जनैः स्वकर्मास्तमितात्मदर्शनैरालक्ष्यते ब्रूहि किमत्र तत्वम् ॥

इति । अणुश्च त्रुटिः । एवं त्रुटेरप्यतिरिक्तं किञ्चन सूक्ष्मतरं वस्तु परमाणुरस्तु । स च विनष्टुमर्हति । पृथिव्यादिजातीयत्वात् । तवाभीष्टद्व्यणुकवत् । न चैतावन्मात्रेण परमाणवो नित्याः तैर्जगदखिलमुत्पद्यते पूर्वोक्तयुक्तिविरोधात् श्रुतिविरोधाच्च । तथा हि ।

एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी [तै० उ० ब्रह्मानन्दवल्ली] ।

---

* न्यायकुसुमाञ्जलौ प्रथमस्तबके—

इत्येषा[1] सहकारिशक्तिरसमा मायादुरुन्नीतितो ।
मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ॥
देवो[2] ऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः ।
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥

इत्युक्तम् । द्वितीयस्तबके ऽपि—

कारं कारमलौकिकाद्भुतमयं मायावशात्संहरन् ।
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत्क्रीडति ॥
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवम् ।
विश्वासैकभुवं शिवं प्रतिनमन् भूयासमन्तेष्वपि ॥

इति स्तबकार्थसङ्ग्राहकं श्लोकद्वयम् ।

---

१ प्रकृतपुस्तके 'इत्येतत्सहकारि०' इति पाठः ।
२ 'देहो' इति च पाठः ।

इति। अत्र चाकाशम्प्रति प्रथममायापरिणामविशेषस्येचणस्यैव कारणत्वमुक्तम् ॥

"तदैचत बहुस्यां प्रजायेयं" इति श्रुतेः। एवं वाय्वादिकं प्रति आकाशस्यैवेत्यादिक्रमेण बोद्धव्यम्। तस्मात्कार्यद्रव्यं प्रति संयोगस्य कारणत्वमपास्तम्। ननु परमाणूनां निरवयवानामपि संयोगार्थमवयवाः कल्प्यन्ते—इति चेत्। न। अवयवानां कल्पितत्वे संयोगद्व्यणुकादीनामपि कल्पितत्वापातात्। कल्पितानां चावस्तुत्वात्। वस्तुतः संयोगस्यासमवायिकारणत्वाभावात्। न चासमवायिकारणमन्तरेणापि कल्पितसंयोगेन कार्यकारणभावसिद्धिरिष्टेति वाच्यम्। तथा सति स्वप्नदृष्टेष्टकादिभिरपि सत्यगृहारम्भापत्तेः। भावरूपकार्यं नासमवायिकारणं विनेति तव सिद्धान्तविरोधाच्च। अनुमानानि चात्रानुकूलानि। न संयोगसचिवाः परमाणवः। स्वातन्त्र्ये सति तद्धेतुकर्मशून्यत्वात् आकाशादिवत्। कर्मशून्याः परमाणवः। तद्धेतु प्रयत्नाभिघातादिशून्यत्वात् आकाशवत्। परमाणवो द्रव्यानारम्भकाः। निरवयवत्वेन संयोगप्रचयहीनत्वात् आत्माकाशादिवदिति।

## इति परमाणुखण्डनम्।

एवं संयोगासिद्धिवत्संयोगसिद्धिसम्पादकसमवायाङ्गीकारस्यापि दुर्निरूपत्वम्। तथा हि। समवायिभ्यामत्यन्तभिन्नः समवायिनोर्यः* घटकः समवायः स समवायिभ्यामसम्बद्धः सम्बद्धो वा? नाद्यः। हिमवद्विन्ध्ययोरपि घटकत्वप्रसङ्गात्। न द्वितीयः। तत्रापि सम्बन्धान्तरमित्यनवस्थाप्रसङ्गात्। न च समवायः स्वरूपसम्बन्धेनैव सम्बन्धान्तरानपेक्षेण सम्बद्ध इति वाच्यम्। स्वरूपस्य निरूपणानर्हत्वात्।

---

* अत्र च समवायो विद्यते ययोस्तौ समवायिनाविति व्याख्येयम्।

यथास्वरूपं किमधिकरणं उत आधेयम् ? यद्वा प्रतीतिकालः किं वा प्रतीतिरेव? उतावच्छेदकदेशो वेत्यत्र विनिगमनाविरहात् 'तुष्यतु दुर्जन'न्यायेन* स्वीकारेऽपि न निर्वाहः[१]।

तथा हि। स्वरूपसम्बन्धः किं समवायस्वरूपस्तदतिरिक्तो वा? आद्ये आत्माश्रयः। स्वं न स्वीयमित्यनुभवेन बाधश्च। द्वितीये तु अनवस्था स्फुटैव। ननु† किमप्रामाणिकत्वेन समवायस्यायुक्तत्वमुच्यते अनवस्थया वा? नाद्यः। द्विविधो हि लोके सम्बन्धः। संयोगः समवायश्च। तत्र संयोगो नाम युतसिद्धयोः सम्बन्धः। स च प्रत्यक्षेणैवावगम्यते। यथा घटरज्जुसम्बन्धः। समवायः पुनरयुतसिद्धानामेव। ते चावयवावयविनौ क्रिया क्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति। सचैतेषु‡ 'इह प्रत्ययलिङ्गगम्य' इति वैशेषिकाः§। 'प्र-

१ 'स्वरूपस्य' इत्यारभ्य 'निर्वाहः' इत्यन्तो ग्रन्थः ख. पुस्तके नास्ति। ग. पुस्तके तु 'निरूपणानर्हत्वात्' इत्येतदेव वर्त्तते।

* यत्र प्रतिपक्षिप्रतिपादितं पक्षं दुष्टमपि वादी प्रौढिवादेनाङ्गीकृत्याप्यन्यथाभङ्ग्या दूषयति तत्रास्य न्यायस्य प्रवृत्तिः।

† अत्र प्रमाणसिद्धत्वाभावेनेत्यर्थोऽवगन्तव्यः।

‡ इह तन्तुषु पट इत्यादि प्रत्ययो ज्ञानं हेतुर्ज्ञापकं लिङ्गं यस्य स समवायोऽनुमेय एव न तु प्रत्यक्ष इत्यर्थः।

§ वैशेषिकास्तु-न प्रत्यक्षः समवायः। यावदाश्रयप्रत्यक्षं विना सम्बन्धप्रत्यक्षासम्भवात्। सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षं हेतुः। अन्यथा घटौ संयुक्तावितिवत् घटाकाशौ संयुक्ताविति। घटे रूपसमवाय इति वदाकाशे शब्दसमवाय इत्यपि प्रत्यक्षापत्तेः। अत एव संयोगप्रत्यक्ष एव यावदाश्रयप्रत्यक्षं हेतुः। लाघवात्। न तु सम्बन्धमात्रप्रत्यक्षे संयोगसमवायान्यतरत्वरूपसम्बन्धत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवात्—इति यदाहुः तत् परास्तम्। घटाकाशसंयोगादिप्रत्यक्षापत्तेर्वारणायानुमेयसमवायस्यावश्यकत्वादिति सुधियो विदां कुर्वन्तु।

त्यक्षसिद्ध एव' इति च तार्किकाः*—इत्यन्यदेतत्। तथा हि। इह तन्तुषु† पट—इति प्रत्ययो धर्मिसम्बन्धपूर्वको भवितुमर्हति। अबाधितेहप्रत्ययत्वात्। यदित्थं तत्तथा। यथा—कुण्डे बदराणि—इत्यादिप्रत्ययः। अत एव न द्वितीयोऽपि। प्रमाणसम्बद्धकार्यान्यथानुपपत्तिसिद्धस्य चासत्तर्कानवस्थादिदोषानवकाशात्—इति चेत्। भ्रान्तोऽसि।

तथा हि। न तावत्—इह तन्तुषु पट—इत्यादिप्रतीतिः। अपि तु—इमे‡ तन्तवः पट—इति[1]—मृदयं घट—इत्याद्यभेदविषया प्रतीतिः। एवं सर्वत्र। न हि—शाखासु वृक्ष—इति प्रतीतिः।

---

* अयुतसिद्धानां सम्बन्धः समवायः। विशेषणतान्यसम्बन्धेन यावदुभयसत्वं ययोराश्रयाश्रयिभावः तावयुतसिद्धौ। यथा गुणगुणिनौ। पटोत्पत्तेः पूर्वं तन्तुसत्वादव्याप्तेर्वारणायोभयेति। वायुरूपाभावकालघटादेरयुतसिद्धत्ववारणाय विशेषणतान्येति। अभावस्य च विशेषणतयैव सम्बन्धस्वीकारात्। कालो ऽपि विशेषणतयैव जगदाधारः। इदानीं घटः—इदानीं जगत्—इति प्रतीत्या आधाराधेयभावः। 'प्रथमान्ते मुख्यविशेष्यकः शाब्दबोध' इति स्वीकारात्। प्राचीनास्तु। विनाशक्षणपर्यन्तं ययोराश्रयाश्रयिभावः तावयुतसिद्धौ। ते चावयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेष्यनित्यद्रव्ये चेति। तन्तुपटादयः अवयवावयविनौ। आश्रयनाशजन्यपटादिनाशस्थले नाशसमये पटादेरनाश्रितत्वाभ्युपगमाद्विनाशपर्यन्तमिति। तदसङ्गतमेव। नित्यगुणतदाश्रययो रात्मात्मत्वजात्योर्विशेषनित्यद्रव्ययोरव्याप्तेः। सो ऽयं समवायो—इह तन्तुषु पटः समवेत—इत्यादिप्रत्यक्षसिद्ध एव। इति नैय्यायिकाः।

मीमांसकास्तु—गुणगुण्यादीनां तादात्म्यमेव प्रतीयते। नीलो घटस्वच्छलः अपृथक् स्फुट—इत्यभेदानुभवान्निःप्रमाणकमेव समवायाङ्गीकार—इत्याहुः।

† तन्त्वधिकरणकः पट इत्यर्थः।

‡ तन्तुरूपः पट इत्येव वक्तुमुचितम्।

---

१ क. पुस्तके 'वत्' इत्यधिकं वर्तते।



किन्तु—वृक्षे शाखा—इति प्रतीतिः। तथा—पटे तन्तव—इति[1] चानुभूयते। तस्मादबाधितेहप्रत्ययस्य बाधितत्वादसिद्धो हेतुः[2]।

किञ्चायं समवायः सम्बन्धिभ्यामन्योऽनन्यो वा? अथान्य इति चेत् स्वतन्त्रः परतन्त्रो वा? अथ स्वतन्त्र इति चेत् तर्हि तथैवोपलभ्येत[3] आत्माकाशादिवत्। अथ परतन्त्र इति चेत् यत्तन्त्रोऽसौ तेन सम्बन्धो वक्तव्यः। गुणादिषु तथा दर्शनात्! न चासौ सम्बन्धत्वात्सम्बन्धान्तरानपेक्ष—इत्युच्चैर्वाच्यम्। संयोगे व्यभिचारात्। अथ संयोगस्य सम्बन्धत्वेऽपि गुणत्वात्सम्बन्धान्तरापेक्षा। सामान्यादीनां तु परतन्त्राणामसम्बन्धरूपत्वादेव तदपेक्षा। समवायः पुनः सम्बन्धरूपो न गुणश्चेति वैषम्यमिति चेत्। तर्हि सम्बन्धत्वादस्य संयोगवदेव गुणत्वमनुमीयताम्। अथ—द्रव्यवृत्तिर्गुणः[4]। समवायस्तु गुणादिष्वपि वर्तते। ततश्च गुणः—इति चेत्। तर्हि 'तुष्यतु दुर्जन' न्यायेनास्तां तावद्गुणादिषु समवायः। कार्यकारणसमवायस्य तु गुणत्वमनुमीयताम्। द्रव्ययोः सम्बन्धत्वात्संयोगवत्। अथ—संयोगस्य युतसिद्धसम्बन्धत्वात् केवलद्रव्यवृत्तित्वाच्च गुणत्वम्। समवायः पुनरयुतसिद्धसम्बन्धो न द्रव्यमात्रवृत्तिश्चेत्यगुणत्वमिति चेत्। तर्हि ब्रूहि केयमयुतसिद्धिः? अपृथग्देशत्वं वा अपृथक्कालत्वं वा अपृथक् स्वभावत्वं वा? आद्येऽपि सम्बन्धिनोर्द्वयोरपृथग्देशत्वं वा एकतरस्य वा? प्रथमे पटस्य तन्तुसमवेतत्वेन तन्तुदेशत्वम् पटगत शुक्लत्वस्य पटे समवेतत्वेन पटदेशत्वमि-

१ ख. ग. पुस्तकयोः 'वृक्षानु०' इति अधिकम्।
२ 'तस्मात्' इत्यारभ्य 'हेतुः' इत्यन्तं ग. पुस्तके नास्ति।
३ '०त्वोपलब्धः स्यात्' इति ख. पुस्तके।
४ क. पुस्तके तु 'सर्वद्रव्यवृत्तिः' इति वर्तते।

त्येवं द्रव्यगुणयोर्भिन्नदेशत्वस्य त्वयैव स्वीकारात्। अन्ये तु घटाकाशसंयोगेन घटाकाशयोरप्ययुतसिद्धत्वापत्तेः। सत्यपि घटस्य मृद्देशत्वे आकाशस्य नित्यद्रव्यत्वेनान्यत्र समवायाभावेन पृथग्देशत्वाभावात्। नापि द्वितीयः। सव्यदक्षिणयोर्गोविषाणयोरयुतसिद्धत्व*प्रसङ्गात्[१]। न तृतीयः। द्रव्यगुणयोरात्मभेदस्य तव मते ऽसम्भवात्। न च द्रव्यगुणयोः समवायस्वीकारेण स्वरूपभेदसम्भवेनात्मभेदः सम्भवतीति वाच्यम्। समवायस्याव्याप्यनिरूपणत्वात्। तस्माद्गुणस्य द्रव्यतादात्म्येनैव प्रतीयमानत्वादयुतसिद्धा सिद्धिः। अपि च। अयुतसिद्धशब्दो ऽपृथगुत्पत्तौ मुख्यः।

"यु मिश्रणामिश्रणयोः"।

इति पाणिनिस्मरणात्। अमिश्रणार्थक धातुग्रहणात्[२]। सा च अपृथगुत्पत्तिर्भवन्मते न द्रव्यगुणयोरस्ति। द्रव्यस्य प्राक् सिद्धेः गुणस्य पश्चादुत्पत्तेश्च†। अथ—सम्बन्धितयैव कार्यस्य कारणे सिद्धिरयुतसिद्धिः—इति चेत् तर्हि कार्यं किं सिद्धं सत् कारणे समवैति? समवेतं वा सिद्ध्येत्? युगपदुभयमिति वा? आद्ये कार्यस्य पूर्व-

१ 'प्रसङ्गो दुर्वारः स्यात्' इति ख. पुस्तके।

२ 'अमिश्रणार्थकस्यैव धातोरत्रेष्टार्थसम्पादकत्वात्' इति ख. ग. पुस्तकयोः।

* कार्यकारणभावसिद्ध्यनन्तरमपृथक्स्वभावत्वमित्यर्थः।

† अत्र प्रथमं द्रव्यस्य सिद्धिः अनन्तरं तत्र गुणस्योत्पत्तिरिति यदुक्तं तन्न सर्वे स्वाद्रियन्ते। वस्तुतस्तु द्रव्यसिद्धिसमकालमेव गुणोत्पत्तिरिति वक्तव्यम्।

सिद्धत्वादयुतसिद्धत्वहानिः[१]। द्वितीये तु। उत्पत्तेः पूर्वमसतः कार्यस्य कथं कारणे समवायः। अथ—असतो ऽपि कार्यस्य कारणे समवायः कल्प्यत—इति चेत्। तर्हि येनात्मना कार्यस्य कारणे समवायः कल्प्यते तत् किमसिद्धकार्यकं? उत सिद्धकार्यकं? असिद्धकार्यकं चेत्। तर्हि कार्यं सदसदात्मकं* स्यात्। तच्च विरुद्धम्। बाधात्। सिद्धकार्यकं† चेत्। तर्हि समवायेन सह तादृूप्येण निर्वृत्तेः‡। सिद्धरूपस्य न स्यात् कारणे समवायः। अथ सम्बन्धः स्वरूपसिद्धिश्च कार्यस्य युगपदेवास्तु इति चेत्। तत्सिद्धावस्थं कार्यं सद्वा? असद्वा? उभयविलक्षणं वा? आद्ये सिद्धस्यैव सम्बन्ध इत्ययुतसिद्धत्वहानिः। द्वितीये न कार्यस्य समवायः। तस्य अद्याप्यसिद्धत्वात्। तृतीये तु। अनिर्वचनीयवादप्रसङ्गेन आगतो ऽसि मार्गे। वेदान्तमतप्रवेशात्। एतेन गुणादिष्वपि समवायो निरस्तः।

तस्मात् समवायः सम्बन्धिभ्यामन्यश्चेत्। तर्हि तस्यापि सम्बन्धान्तरं वक्तव्यम्। अथ—अस्त्येव तस्यापि सम्बन्धान्तरं विशेषण-

---

१ 'सिद्धत्वस्यैव हानिः' इति ख. पुस्तके।

---

* सत्त्वं कालत्रये ऽपि सत्त्वेन प्रतीत्यर्हम्। आत्मवत्। असत्त्वं तु कालत्रये ऽपि सत्त्वेन प्रतीत्यनर्हत्वम्। शशविषाणादिवत्। एतदुभयं आत्मा-स्वरूपं यस्य तत्सदसदात्मकम्।

† सिद्धमेव कार्यं यस्मिन् तत्सिद्धकार्यकम्। कारणमित्यर्थः।

‡ निर्वृत्तिशब्देनात्र सिद्धेर्ग्रहणं कर्तव्यम्।

विशेष्यलक्षणमिति चेत्। तदपि दुर्वचम्*। दण्डदेवदत्तयोर्विशेषण-विशेष्यभावस्य सम्बन्धान्तरप्रयुक्तत्वान्न‡ विशेषणविशेष्यभाव एव सम्बन्धः। सम्बन्धान्तराभ्युपगमे च अनवस्थैव दुर्वारा§। अथ—प्रतीत्यनवस्थैव व्यवहारविरोधिनी। न सत्तानवस्था। इयं तु सत्तान-वस्था—इति चेत्। न। प्रतीतेरप्यनवस्थानात्। तथा हि। समवायः स्वयं विशेषणत्वात् स्वसिद्धौ सम्बन्धान्तरमपेक्षत एव। तदपि सम्बन्धान्तरमिति प्रतीतावप्यनवस्था सिद्धैवेति। तस्मान्न समवायः सम्बन्धिभ्यामन्य इति सिद्धम्। न च—ताभ्यामभिन्न एवास्त्विति वाच्यम्। समवायासिद्धेः। न च—का गतिस्तर्हि सामानाधिकरण्य-स्येति|| चेत्। कारणे कार्यस्य वक्ष्यमाणमायिकाध्यासिकसम्बन्धे-

---

* दुःखेनापि वक्तुमशक्यम्।

† संयोगाख्यसम्बन्धान्तरेणेत्यर्थः।

‡ सम्बन्धान्तरकारणकत्वात् सम्बन्धान्तरेण जन्यत्वादिति यावत्।

§ तुष्यतु दुर्जन न्यायेन विशेषणविशेष्याख्यसम्बन्धस्य विशेषणताविशेष्याख्यत्वरूपसम्बन्धाङ्गीकारेणानवस्थाविरहे ऽपि समवायमङ्गीकृत्य तुल्य-युक्त्या तद्विशेषणविशेष्याख्यस्याप्यङ्गीकारे द्वयोः कल्पने गौरवात्। लाघवाद्विशेषणताविशेष्याख्य एवाङ्गीक्रियताम्। अलं समवायेनान्तर्गडुनेति तात्पर्यम्।

|| चतुर्धा सामानाधिकरण्यं भवति। तच्च एकविभक्त्यन्तपदवाच्यत्वम्। कुत्रचिद्बाधायाम्। यथा—यश्चोरः स स्थाणुरेव। तदुक्तं नैष्कर्म्यसिद्धौ।

यो ऽयं स्थाणुः पुमानेष पुन्धिया स्थाणुधीरिव।

ब्रह्मास्मीति धियाशेषा ह्यहम्बुद्धिर्निवर्त्यते॥ १॥

कुत्रचित् अध्यासे। यथा—शुक्तौ रजतं इत्यादिस्थले। कुत्रचिद्विशेषण-

नाप्युपपत्तेः। नन्वत्र तथा बाधादर्शनात् कथमध्यासनिबन्धनं सामानाधिकरण्यमिति चेत्। अहं मनुष्यवदिति ब्रूमः। श्रौतस्य बाधः प्रसिद्ध एव।

वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्।

इत्यादिः। किं च समवायस्य न नित्यत्वं सम्भवति। सम्बन्ध्यधीनसद्भावात्। सम्बन्धिनस्त्वेकस्य द्वयोर्वा विनाशेन नाशस्यावश्यकत्वात्। न ह्यस्ति सम्भवो गुणो वा। गुणगुणिनौ वा स्तः। अस्ति च तयोः सम्बन्ध इति। तस्मात्कार्यः समवायसम्बन्धो निमित्तकारणोत्पत्तिमात्राधीनः। संयोगवत्। इत्यलं मृतमारणेन। इति दिक्*।

## इति समवायखण्डनम्।

तस्मादुपपत्त्यनुभवाभ्यां न कार्यस्य कारणादन्यत्वम्। अपि तु कारणस्यैवायमनिर्वाच्यः परिणामभेद इति। तथा च कार्यस्य कारणा ऽनतिरेकात् किं केन सम्बद्धम्। संयोगस्य च संयोगिभ्यामनतिरेकान्न तयोः संयोग इति। न च सम्बन्धः सम्बन्धिभ्यां

---

विशेष्यभावे। यथा—नीलो घटः इत्यादि। कुत्रचित् अभेदे। यथा—सो ऽयं देवदत्तः इत्यादि।

* एतेन यत्पुनर्गुणदीधितिव्याख्यायां मथुरानाथभट्टाचार्यैरुक्तम्। "कालिकसम्बन्धेन विद्यमानानन्तगुरुत्वानामवनतिविशेषे प्रयोजकत्वाभाववत् समवायेन सामग्रीबलेनावयविगलविद्यमानगुरुत्वस्यापि प्रयोजकत्वात् स्वाश्रयसमवेतत्वसम्बन्धेन कारणगतगुरुत्वस्यैव अवयविगतमात्रप्रयोजकत्वात् द्विगुण गुरुत्वेनावनतिविशेषासम्भवात्" इति तदपि निरस्तम्। 'स्वाश्रय' कपालः तद्गतं गुरुत्वमित्यर्थः।

वस्त्वन्तरम् सम्बन्धिशब्दधीव्यतिरेकेण समवायशब्दधीदर्शनात्-इति वाच्यम्। तत्तदनिर्वचनीयानेकविशेषावस्थापेक्षया एकस्मिन्नपि नानाशब्दधियोरुपपत्तेः। यथा एको देवदत्तः स्वगतविशेषापेक्षया मनुष्यो ब्राह्मणो ऽवदातः*। स्वगतावस्थापेक्षया[१] बालो युवा स्थविरः। स्वक्रियाभेदापेक्षया श्रोत्रियः पाचकः। परापेक्षया तु पिता पुत्रः पौत्रो भ्राता जामाता इति। यथा चैकापि सति रेखा स्थानान्यत्वेन निविश्यमाना एकशत-सहस्रादिशब्दधीभेदयुता भवति। तथा सम्बन्धिनोरेव सम्बन्धिशब्दधीव्यतिरेकेण संयोग-समवायशब्दधीयोग्यत्वं न व्यतिरिक्तं वस्तु इति। तस्मात् कार्त्स्न्यैक-देशाभ्यामन्तरालदेशशून्यावस्थार्थौ संयोगसमवायशब्दधीगम्याविति। अङ्गुल्योर्नैरन्तर्यसंयोगः। दधिकुण्डयोरौत्तराधर्यसंयोगः इत्या-द्यूह्यम्। तदेवं द्रव्याभिन्ना गुणकर्मसामान्यविशेषसमवायाः इति सिद्धम्।

किञ्च गुणादीनां द्रव्याभिन्नत्वे सिद्धे ऽपि द्रव्यव्यवहारकल्पनं व्यर्थमेव। तथा हि। तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनसां द्रव्यत्वोपपादनं किं लोकव्यवहारार्थं अथवा तेषां द्रव्यत्वज्ञानेन मोक्षार्थं वा? नाद्यः। न हि-द्रव्यमानय-इत्यादिव्यवहारो लोके दृश्यते। द्रव्यशब्देन सुवर्णादेरेव प्रत्ययात्। नापि द्वितीयः। पृथि-व्यादीनां द्रव्यत्वे ज्ञाते ऽपि दुःखध्वंसलक्षणमोक्षसाधनीभूत मिथ्या-

---

* अवदातः सितः गौरवर्णः इत्यर्थः।

---

१ '०स्थामपेक्ष्य' इति ग. पुस्तके।

ज्ञाननाशासम्भवात्। प्रत्युत लोकसिद्ध-पृथिवी-इत्यादिनामभिर्व्यवहारे सिद्धे ऽपि पृथिव्यादयो द्रव्याणीति पृथिव्यादीनामलौकिकं निष्प्रयोजननामान्तरस्थापनेन[१] मिथ्याज्ञानमेव प्रतन्यते। तस्मान्न द्रव्यपदार्थः कश्चिदस्ति। किन्तु पृथिव्यादिषु सर्वेषु नाम्नो ऽनुगतिदर्शनात् नामपदार्थ एवायम्।

नापि गुणपदार्थः। श्यामगुणो घटः-इति व्यवहाराभावात्। किन्तु—श्यामो घटः—इति प्रत्ययात् घटनामपदार्थः। श्यामत्वादिना रूप्यत इति रूपपदार्थ एव श्यामादिः। कर्मपदार्थस्तु[२] क्रियारूप* एक एव। न उत्क्षेपणादिना पञ्चविधः। सर्वत्र क्रियाया एव दर्शनात्। इत्थं च वक्ष्यमाणं यावदविद्याकार्यं परिदृश्यमानो नामरूपक्रियात्मको दृश्यपदार्थ† एवा ऽयम्। दृक्पदार्थस्तु‡ आत्मा। इति पदार्थद्वयं सिद्ध्यति व्यवहारे।

---

१ 'नामान्तरकरणेन' इति ग. पुस्तके वर्त्तते। ख. पुस्तके तु 'नामान्तरेण' इत्येव वर्तते। परमिदं पाठद्वयमप्यसङ्गतमिव प्रतिभाति।

२ 'कर्मपदार्थस्त्वेक एव' इति क० पुस्तके। तदशुद्धमिति प्रतिभाति।

---

* उत्क्षेपणापक्षेपणादिसर्वमपि क्रियाशब्दवाच्यमेव भवितुमर्हति। यतः उत्क्षेपणादि सर्वं क्रियैव इत्यभिप्रायः।

† दर्शनयोग्य इत्यर्थः। एतदुपलक्षणमात्रम्। अत एव श्रोत्रादिग्राह्यविषयाणामपि दृश्यपदार्थत्वं सम्भवति।

‡ 'दृक्पदार्थः' द्रष्टा इति यावत्। एतेन इन्द्रियैरर्थग्राहक आत्मा दृक्पदार्थ इति सिद्धम्।

परमार्थतस्तु अविद्यातत्कार्यनाशादात्मैव एकः इति चतुर्थमुद्गरे स्पष्टं भविष्यति इति ।

द्रव्यादेरभावाच्च द्रव्यत्वगुणत्वाद्यपरसत्तापि न सिद्ध्यति । वक्ष्यमाणब्रह्मसत्तयोपपत्तेः[१] । परसत्तासामान्यमपि न । नित्यद्रव्यस्य स्वत एव व्यावर्तकत्वसम्भवात् भवन्मते ऽपि न विशेषसिद्धिः । अस्मन्मते तु आत्मेतरस्य नित्यस्याभावान्न व्यावर्तकापेक्षा । समवायासिद्धिरुक्तैव । अभावस्तु प्रतियोग्यभावादेव न सिद्ध्यति । तस्मात् सद्रूपे ब्रह्मणि सर्वस्यापि प्रतीयमानस्य जगतः वक्ष्यमाणरीत्या कल्पितत्वं सिद्धम् । तथा च श्रुतिः,—

एवमेव खलु सौम्य अन्नेन शुङ्गे[२]नापोमूलमन्विच्छ ।
अद्भिः सौम्य शुङ्गेन तेजोमूलमन्विच्छ ।
तेजसः सौम्य शुङ्गेन सन्मूलमन्विच्छ ।
सन्मूलाः सौम्येमाः प्रजाः सदायतनाः
सत्प्रतिष्ठाः[३] * ।

* उद्दालक आह हे सौम्य श्वेतकेतो । अद्भिः रसादिभावेन नीतेनाशितेनान्नेन निष्पादितमिदं शरीरं शुङ्गः अङ्कुरोत्पत्तित उद्गतः । तमिमं शुङ्गं कार्यं शरीराख्यं वटादिशुङ्गवदुत्पतितं विजानीहि । किं तत्र विज्ञेयमिति चेत् शृणु । इदं शरीरं शुङ्गवत् कार्यत्वात् नामूलं भविष्यति । तर्हि तस्य क्व मूलं स्यात् ? इति पृष्ट आह पिता । अन्नादन्यत्र तस्य क्व मूलं

१ 'ब्रह्मणः सत्तया उपपत्तेः' इति ग० पुस्तके ।
२ 'शुगेन' इति ख. पुस्तके ।
३ 'प्रतिष्ठिताः' इति क. पुस्तके पाठः ।

इति सर्वेषामपि कार्याणां सति ब्रह्मणि कल्पितत्वं दर्शयति। न चात्र सत्त्वं सामान्यम्। पूर्वमेव दूषितत्वात् मानाभावाच्च। न चानुगतप्रतीतिरेव तत्र मानं—इति वाच्यम्। तस्याः पदार्थमात्र-साधारण्यात्। अन्यथा सत्ताजात्या[1] द्रव्यगुणकर्ममात्रवृत्या—सत्ता

स्यात्। अन्नमेव तस्य मूलम्। कथमिति चेत्। अशितं ह्यन्नमद्भिर्द्रवीकृतं जाठरेणाग्निना पच्यमानं रसादिभावेन परिणमते रसात् शोणितं, शोणितान्मांसं, मांसान्मेदः, मेदसो ऽस्थीनि, अस्थिभ्यो मज्जा, मज्जातः शुक्रम्। तथा योषिद्भुक्तं चान्नं रसादिक्रमेणैवं परिणतं लोहितं भवति। ताभ्यां शुक्रशोणिताभ्यां अन्नकार्याभ्यां संयुक्ताभ्यां प्रत्यहं भुज्यमानेनान्नेनैवमापूर्यमाणाभ्यां मृत्पिण्डः कुड्यमिव प्रत्यहमुपचीयमानो ऽन्नमूलो देहशुङ्गः परिनिष्पन्न इत्यर्थः।

यत्तु देहशुङ्गस्य मूलमन्नं निर्दिष्टं तदपि देहवद्विनाशोत्पत्तिमत्वात् कस्माच्चित् मूलादुत्पन्नम्। यथा देहशुङ्गो ऽन्नमूलः 'एव मेव खलु सौम्य अन्नेन शुङ्गेन' कार्यभूतेन अन्नस्य शुङ्गस्य 'आपो मूलमन्विच्छ' प्रतिपद्यस्व। एवमेव 'अद्भिः सौम्य शुङ्गेन' कार्येण कारणं 'तेजो मूलमन्विच्छ'। तस्यापि विनाशोत्पत्तिमत्वात् शुङ्गत्वम्। 'तेजसा सौम्य शुङ्गेन सन्मूलं अन्विच्छ' एकमेवाद्वितीयं परमार्थसत्यम्। यस्मिन् सर्वमिदं वाचारम्भणं विकारो नामधेयमनृतं रज्वामिव सर्पादि विकल्पजातमध्यस्तमविद्यया। तदस्य जगतो मूलम्। अतः हे 'सौम्य इमाः सर्वाः प्रजाः सन्मूलाः' सत्कारणाः। न केवलं सन्मूला एव। इदानीमपि स्थितिकाले 'सदायतनाः' सदाश्रया एव। न हि मृदमनाश्रित्य घटादेः सत्वं स्थितिर्वास्ति। अन्ते च 'सत्प्रतिष्ठाः' सदेव प्रतिष्ठा लयः समाप्तिरवसानं परिशेषे यासान्ताः। अतः सर्वेषां कार्याणां ब्रह्मणि कल्पितत्वं सिद्धमित्यलं पल्लवितेन।

१ 'सत्ताजातिद्रव्यगुणे'ति ख. ग. पुस्तकयोः।

सती-जातिः सती-ध्वंसः सन्-इत्यादिप्रत्ययानिर्वाहात्। अत एव सत्सदितिप्रतीत्या द्रव्यगुणकर्ममात्रवृत्तिसत्त्वस्य स्वानुपपादकस्य अस्मन्मते ऽकल्पनम्। वैपरीत्यस्यापि सुवचत्वाच्च। न च—चरमत्रिके[1] एकार्थसमवायेन—सत्ता सती—एवं कालिकसम्बन्धेन—ध्वंसः सन्—इत्यादि प्रमा भविष्यतीति किमनुपपन्नम्? इति वाच्यम्। एकरूपप्रतीतेरेकरूपविषयनिर्वाह्यत्वेन सम्बन्धभेदस्य स्वरूपसत्त्वस्य च कल्पयितुमनुचितत्वात्। विषयस्याननुगमे ऽपि प्रतीत्यनुगमे जातिमात्रोच्छेदप्रसङ्गात्। तस्मादेकमेव सद्रूपं ब्रह्म स्वतः स्फुरणरूपं ज्ञाताज्ञातावस्थाभासकं कथ्यमानेन स्वतादात्म्याध्यासेन सर्वत्र सद्व्यवहारोपपादकम्। सन् घटः—इति तावत् प्रतीत्या सद्व्यक्तिमात्राभिन्नत्वं घटे विषयीकृतम्। न तु सत्तासमवायित्वम्। अभेदप्रतीतेर्भेदघटितसम्बन्धानिर्वाह्यत्वात्। एवं-सत् द्रव्यं-सन् गुणः-सत् कर्म-सत् सामान्यं-सन् विशेषः-सन् समवायः-सन् अभावः-इत्यादिप्रतीत्या सर्वाभिन्नत्वं सतः सिद्धम्। द्रव्यगुणादिभेदासिद्ध्या च नैतेषु धर्मिषु सत्त्वं नाम धर्मः कल्प्यते। किं तु ब्रह्मरूपिणि सति धर्मिणि द्रव्याद्यभिन्नत्वम्। लाघवात्। तच्च वास्तवं न सम्भवतीत्याध्यात्मिकमित्येतत्प्रतिपादनस्य वक्ष्यमाणत्वात्। तदुक्तं वार्तिके।

---

१ 'न च चरमत्रिके एकाश्रयत्वसम्बन्धेन तथात्वप्रतीतिरिति वाच्यम्। सत्सदिति प्रतीत्या द्रव्यगुणकर्ममात्रवृत्तिसत्त्वस्य स्वानुपपादकस्या ऽकल्पनात्। वैपरीत्यस्यापि सुवचत्वाच्च। एकरूपप्रतीतेरेकरूपनिर्वाहात् तथैव वक्तुमुचितम्'। एतावान् ग्रन्थः ख. पुस्तके अधिको दृश्यते।

सत्तातो ऽपि न भेदः स्यात् द्रव्यत्वादेः कुतो ऽन्यतः।
एकाकारा हि संवित्तिः सद्द्रव्यं सन्गुणस्तथा॥

इति। अत एव-घटाद्भिन्नः पट—इत्यादिप्रतीतिरपि न भेदसाधिका। घट-पट-तद्भेदानां सद्भेदेनैक्यात्। अत एव महाभाष्यटीकाकारेण कय्यटेन काश्मीरधुरन्धरेण स्वमतोपष्टम्भार्थं भर्तृहरिकारिकोपन्यस्ता।

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥
शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
समारम्भस्तु भावानां अनादिब्रह्मणस्तु तम्॥

इति। एतेनैव सद्रूपस्य ब्रह्मणः सर्वेन्द्रियग्राह्यत्वमपि सिद्धम्। ननु कथं चक्षुरादिज्ञानविषयत्वं ब्रह्मणः?। रूपादिहीनत्वात्। न च—स्वरूपतो ऽयोग्यत्वे ऽपि चन्द्रावच्छिन्नत्वेन राहोरिव घटावच्छिन्नत्वेन योग्यता—इति वाच्यम्। शब्दाद्यवच्छिन्नत्वेन गगनादेरपि योग्यताप्रसङ्गात्। राहोस्तु नीलस्य स्वतो योग्यस्य दूरदोषेणायोग्यस्य शुक्लभास्वरचन्द्रसम्बन्धाच्चाक्षुषत्वम्। न च—

न सो ऽस्ति प्रत्ययो लोके यत्र कालो न भासते।

इति मीमांसकोक्तरीत्या कालस्येव ब्रह्मणो ऽपि भविष्यतीति—वाच्यम्। तस्याप्यतएवानङ्गीकारात्। न चानुभवविरोधः। परमाणुवानयं देशः—इत्याद्यनुमानरूपज्ञानलक्षणयाप्युपपत्तेः—इति चेत्।

न। इदानीं घटः—इति स्वाधिकरणावच्छिन्नत्वेनानुभवस्य सार्वजनीनस्यापलापापत्तेः। न च—रूपादिसामग्रीबाधात्[१] कथमनुभवः? इति वाच्यम्। प्रतिनियतेन्द्रियग्राह्यप्रत्यक्षत्वावच्छिन्नं प्रत्येव रूपादेः हेतुत्वात्। सर्वेन्द्रियग्राह्यं तु ब्रह्म कालश्च। अतो न रूपादिहीनत्वे ऽपि चाक्षुषत्वानुपपत्तिः। वस्तुतस्तु। द्रव्यप्रत्यक्षम्प्रत्येव रूपादेः कारणत्वात् न ब्रह्मणः कालस्य वा प्रत्यक्षानुपपत्तिः। तयोः सिद्धान्ते द्रव्यत्वाङ्गीकारात्। ब्रह्मणः स्वप्रकाशसच्चिदानन्दरूपस्य स्वतन्त्रपदार्थत्वात्। कालस्य च अविद्यात्मकत्वस्वीकारात्। इति दिक्।

ननु महाकालसद्भावे इदं सर्वं सङ्गच्छते। तत्रैव तु मानं न पश्यामः। न च—इदानीं—इत्यादिरूपबुद्धिनियामकतया तत्सिद्धिः इति पूर्वमेव दर्शितं—इति वाच्यम्। जन्यमात्ररूपखण्डकालमादायैव तत्प्रतीत्युपपत्तेः—इति चेत्। मैवम्। तथापि-इदानीं घटः-इति प्रतीतिनियामकसम्बन्धघटकतया महाकालस्यावश्यकत्वात्।

तथा हि। इदानीं-इत्यंशविषयो घटो वा? उत भूतलादिर्वा? यद्वा सूर्यादिपरिस्पन्दो वा? नाद्यः। तस्य आधारत्वानुपपत्तेः। स्वस्य स्वाधारत्वाभावात्। न द्वितीयः। अननुगतत्वात्। एकत्र गतस्यान्यत्र नयने ऽपि इदानीमिदं-इति प्रत्ययाच्च। नापि तृतीयः। तस्य साक्षाद्घटेन सम्बन्धाभावात्। स्वाश्रयसंयुक्तसंयुक्तत्वादिरूपसम्बन्धाङ्गीकारे तु सम्बन्धघटको ऽनुस्यूतो जन्यमात्रातिरिक्तावश्यकः। तथा च तस्यैवाश्रयत्वमुचितम्। "स च पदार्थः

१ 'त्वाभात्' इति ख. पुस्तके।

परमात्मातिरिक्तः। न मायान्तर्भूतः। जीवादृष्टतत्संस्कारातिरिक्तायास्तस्या अनङ्गीकारात्" इतिजरन्नैयायिकाः। "निखिलजगदाधारत्वरूपकालतायाः ईशे ऽप्यावश्यकत्वात् स एव कालपदार्थः" इति शिरोमणिभट्टाचार्यादयः। "जीवा[1]दृष्टतत्संस्कारातिरिक्तायाः मायायाः श्रुतिस्मृतिसिद्धत्वान्मायैव कालः" इति वेदान्तिनः। "मायाचित्सम्बन्ध एव काल" इति तदेकदेशिनः। इति सङ्क्षेपः। तस्मादसत्कार्यवादस्य श्रुतियुक्तिबाधितत्वान्न गुरुशब्दाभिधेयसिद्धिरिति अलं मृतमारणेन इति दिक्।

इति सत्ताखण्डनपूर्वकासत्कार्यवादखण्डनम्।

अथास्तु तर्हि प्रधानमहदहङ्कारादिक्रमेण पञ्चमहाभूतपरिणामो देह एव गुरुशब्दाभिधेयो द्वितीयः सत्कार्यवादपक्षः। तस्य साङ्ख्य-पातञ्जल-पाशुपत-वैष्णवादिभिरत्यादरेण स्वीकृ[2]तत्वात्। तच्च प्रधानमनुमानसिद्धम्। विषयमात्रं सुखदुःखमोहात्मकं य एव एकस्य सुखतया भासते स एवान्यस्य दुःखतया। अन्यस्य मोहतया च। एवं तदुपादानपरम्परापि दुःखाद्यात्मिका। तदुक्तं वाचस्पतिमिश्रैः।

सर्वे भावा हि पद्मावत्या व्याख्याताः।

इति। तथा च प्रधानं सुखदुःखमोहात्मकं सत्वरजस्तमोरूपं जगदुपादानं भवतु। न ब्रह्म न वा परमाण्वादि। निर्गुणत्वान्निरवयत्वाच्च इति चेत्। नैतत्सारम्। तथा हि। 'प्रधानमहदहङ्कारादिक्रमेण पञ्चमहाभूतानि देहाकारेण परिणमन्ते' इति वदन्प्रष्टव्यः। किं परिणा-

१ ग. पुस्तके इदं नास्ति। केवलं 'मायायाः श्रुतिस्मृती'त्येव वर्तते।
२ 'स्वीकारात्' इति ख' पुस्तके।

मशब्देन व्यवह्रियते? अथ तात्त्विको ऽन्यथाभावो यथा दुग्धस्य दधिरूपेण, सुवर्णस्य कुण्डलरूपेण—इति चेत्। तर्हि एतद्विचारणीयम्। किं अन्यथाभावो ऽप्युत्पद्यते न वा? आद्ये असत्कार्यवादप्रवेशेन पूर्वोक्तदूषणग्रासात्। अपसिद्धान्ताच्चाप्रयोजकत्वम्। द्वितीये तु। उत्पद्यते नश्यति चेति व्यवहारो न स्यात्-इति चेत्। नैवम्। सत्कार्यवादापरिज्ञानात्। न हि सत्कार्यवादिना उत्पत्तिविनाशावङ्गीक्रियेते। अपि त्वाविर्भावतिरोभावमात्रमुत्पत्तिविनाशशब्दाभ्यामभिलप्यते। अथैतदपि विवेचनीयम्। किं आविर्भावः कारणव्यापारात्प्राक् सन्नसन्वा? आद्ये कारणव्यापारवैयर्थ्यम्। अधिकानर्जनात्। द्वितीये तु असत्कार्यवादापत्तेः। ननु सत्कार्यवादपक्षे आविर्भावार्थं सामग्र्यपेक्ष्यते—इति चेत्। न। आविर्भावस्यापि सदसद्विकल्पग्रासदोषतादवस्थ्यात्। न च—ताम्रादौ विद्यमानसुवर्णभावस्यैव कालिमांशव्यावृत्त्या स्वर्णभावसम्पादनवदसत्वांशव्यावृत्त्या वर्तमानभावसम्पादकत्वेन सामग्रीसफलेति वाच्यम्। सत्वासत्वयोर्वर्तमानत्वावर्तमानत्वरूपयोरेकस्मिन्विरोधात्। न च—धर्मभेदेनाविरोध—इति वाच्यम्। विरुद्धार्थसमावेशप्रयोजकयोर्धर्मयोरपि समावेशायोगात्। धर्मान्तरानुसरणे त्वनवस्था स्फुटैव। नन्वाविर्भावो उद्रिक्तं सत्वं तिरोभावश्च उद्रिक्तं तम एव। तथा च सामग्रीकाले विद्यमानमपि तमः मण्यादिवन्न प्रतिबन्धकं सम्भवतीति सामग्री उत्तेजिका। न जनका इति न सत्कार्यवादपक्षे दोषगन्धो ऽपि—इति चेत्। न। परिणामवादस्य श्रुतियुक्तिविरोधात्। तथा हि-

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः।

आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी *। [तै. उ. ब्र. व. २]

इत्यादौ परिणामाङ्गीकारे परमात्मविजातीय आकाशः कथं प्रकृतिपरिणामो भवति? एवं आकाशविजातीयो वायुः, वायुविजातीयं तेजः,[१] तेजविजातीयं जलं, जलविजातीया पृथिवी च कथं स्यात्? मृत्परिणामस्य घटशरावादेर्मृद्विजातीयादर्शनात्। साजात्ये च जातिसाङ्कर्यापत्त्या भूतविभागो न स्यात्। तथा च तेज अनुष्णाशीतं, जलमुष्णं, पृथिवी शीतला इत्यपि स्यात्। दुग्धत्यागेन दधित्यागोऽपि प्रसज्ज्येत। तथा च धर्मशास्त्रविप्लवः स्यात्। तस्मात्सत्कार्यवादो न युक्तिसहः। तद्वरं परिणा[२]मवाद एवास्तु। युक्तिसहत्वात्।

---

* तस्मादेतस्मादात्मनः आत्मशब्दवाच्यात्। "आत्मा हि तत्सर्वस्य। तत्सत्यं स आत्मा" इति श्रुत्यन्तरात्। अतो ब्रह्म आत्मा। तस्मादेतस्माद्ब्रह्मणः आत्मस्वरूपात् आकाशः सम्भूतः समुत्पन्नः। आकाशो नाम शब्दगुणो ऽवकाशकरो मूर्तद्रव्याणाम्। तस्मादाकाशात् स्वेन स्पर्शगुणेन पूर्वेण च आकाशगुणेन शब्देन द्विगुणो वायुः 'सम्भूतः' इत्यनुवर्तते। वायोश्च स्वेन रूपगुणेन पूर्वाभ्यां च त्रिगुणोऽग्निः सम्भूतः। अग्नेश्च स्वेन रसगुणेन पूर्वैश्च त्रिभिः चतुर्गुणा आपः सम्भूताः। अद्भ्यः स्वेन गन्धगुणेन पूर्वैश्चतुर्भिः पञ्चगुणा पृथिवी सम्भूता।

---

१ क. पुस्तके 'अग्निः' इति वर्तते। यद्यपि इमौ द्वावपि पर्यायशब्दौ, तथापि सूक्ष्मार्थग्रहणे अस्त्यल्पीयान् भेदः। ततश्च अर्थभेदोऽपि भवत्येव।

२ ख. पुस्तके ऽत्र 'वरमारम्भवाद एवास्तु' इति वर्तते।

तथा हि। आत्माकाशादीनां न परिणाम्या[1]कारता। किन्तु। यदीयसूक्ष्मांशाः यत्राविभक्ताः येनोपष्टब्धाः कार्यमुत्पादयन्ति तदधिष्ठानकारणत्वम् निमित्तकारणताविशेषः। उपादानकारणत्वं तु स्वस्वसूक्ष्मावयवानामेव। अतो न भूतसाङ्कर्यमपि। विजातीयत्वात्। तस्मान्न परिणामवादोऽपि युक्तिसहः। आरम्भवाद एवास्तु प्रामाणिकः—इति चेत्। भ्रान्तोऽसि। पूर्वमेव विस्तरेण दूषितत्वात्। तस्मान्न सतो जनिर्नाप्यसतो जनिः। किन्त्वाकाशादिप्रपञ्चस्यानिर्वाच्यत्वेन मायिकत्वम्। प्रपञ्चो मायिकः। परिणामारम्भयोः साङ्ख्यवैशेषिकसम्मतयोरनन्तर्भावे सति जन्यत्वात्। शुक्तिरजतादिवदित्यनुमानाच्च। उक्तं च वेदान्तमुक्तावलीकृद्भिः।

यथा[2] सतो जनिर्नैवमसतोऽपि जनिर्न च।
जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकम्॥

इति सङ्क्षेपः। एतेन यच्चात्र[3] साङ्ख्यभाष्यकृता विज्ञानभिक्षुणा समाधानत्वेन प्रलपितं तदप्यसङ्गतमेव।

तथा हि। अथैवं सत्कार्यवादनिराकरणपराः प्रष्टव्याः। आविर्भावः किं ज्ञानं उत अन्यदेवाभिप्रेतम्? तत्राद्ये दूषणमबोधादेव। "न हि साक्षात्कारत्वं दण्डचक्रादिकार्यतावच्छेदकं" इति भग-

---

१ ख. ग. पुस्तकयोः 'परिणामिकारता' इति वर्तते। परन्त्विदमशुद्धमिति प्रतिभाति।

२ 'यथा सन्नैव भवति तथा सदपि न क्वचित्'। इति ग. पुस्तके वर्तते. तात्पर्ये न कश्चिद्विशेषः।

३ ग. पुस्तके 'तथाच' इति वर्त्तते।

वान्कपिलो मुनिर्ब्रूते। तथा वदतो भ्रान्तत्वमेव प्रसज्ज्येत। दण्डादिकं विनापि इन्द्रियादिना साक्षात्कारोपपत्तेर्व्यभिचारात्। तस्माद्द्वितीयः पक्षः परिगृह्यते।

तथा हि। तत्र पदार्थानामवस्थाद्वयं भवति। एकानागतावस्था अपरा वर्तमानावस्था। सामग्रीतः प्राक् प्रथमा। पश्चाद्द्वितीया। सैव च सामग्र्या निर्वर्त्यते। न च तामादायैव सदसद्विकल्पो ऽस्तीति वाच्यम्। तस्याः सदसदात्मकत्वस्वीकारात्। न चैवं विरोध—इति वाच्यम्। विभिन्नरूपेणैव तत्स्वीकारात्। अनागता[1]वस्थात्वेनासत्वं वर्तमानावस्थतद्व्यक्तित्वेन च सत्वम्। सत्वं च कालसम्बन्ध एव। तदभावो ह्यसत्वम्। इत्यादि स्वयमेवोद्भावनीयमिति तत्स[2]र्वमपास्तम्। विभिन्नरूपेण सत्वासत्वनिर्वाहे विभिन्नधर्मयोः सत्वासत्वनिर्वाहो ऽपि धर्मान्तरानुसरणेनैव। तत्राप्युत्तरोत्तरं तथैवेत्यनवस्था स्फुटैव[3]। स्वरूपेण तु धर्मसत्ता निर्वक्तुमशक्यैव। स्वस्य सम्बन्धरूपत्वासम्भवात्[4]। अतो सम्बन्धान्तरेण धर्मसत्ता सम्बन्धान्तरप्रयुक्तधर्मसत्ताप्रयुक्तैव इति भवति सम्बन्धानवस्थापि। इति दिक्। तथा च विभिन्नधर्मयोः

---

१ 'वर्त्तमानावस्थत्वेनासत्वम्। तद्व्यक्तित्वेन सत्वम्' इति ख. ग. पुस्तकयोः। वर्तमानावस्था नाम अनागता। प्रथमेत्यर्थः।

२ 'साटोपमाहेलि चेत्' इति ग. पुस्तके वर्तते। 'स्वबुद्धिपरिपाकविलम्बनमेवैतत्' एतावदधिकं ख. पुस्तके दृश्यते। 'तथा हि' इति ख. ग. पुस्तकयोः।

३ 'स्फुटैव' एतन्नास्ति ख. ग. पुस्तकयोः।

४ 'स्वसम्बन्धः' इति ग. पुस्तके।

सत्त्वासत्त्वस्य वक्तुमशक्यत्वात्। तत्प्रयुक्तावस्थयोः सदसद्रूपत्वमपि सुतरां निर्वक्तुमशक्यमेव इत्यलमसम्भाव्यसम्भाषणेन इति। विस्तरस्त्वग्रे तृतीयमुद्गरे भेदाभेदवादिनं प्रति प्रतिपादनीयमेव इति इहोपरम्यते।

किञ्च स्वीकृत्यापि तव न निर्वाहः। तथा हि। प्रधानं किं निरवयवं आकाशादिवत्? सावयवं वा वाय्वादिवत्? नाद्यः। परिणामासम्भवात्। न च-तवापि निरवयवस्य ब्रह्मणः कथं जगद्रूपेण परिणामः-इति वाच्यम्। जगतो वक्ष्यमाणब्रह्मविवर्तत्वेन अङ्गीकारात्। न द्वितीयः। सावयवत्वे ऽनित्यत्वेन "अजामेकां लोहित-शुक्ल-कृष्णाम्" इत्यादिश्रुतिविरोधात्। अथ कृत्स्नस्य परिणामो एकदेशस्य वा? आद्ये अनित्यत्वप्रसङ्गः। द्वितीये तु निरवयवस्यैकदेशासम्भवः। किं च प्रधानस्य महदादिरूपेण परिणामित्वं किं चेतनाधिष्ठितस्य अनधिष्ठितस्य वा? अन्त्ये अचेतनत्वेन विचित्र जगद्रचनानुपपत्तिः। "ईक्षतेर्नाशब्दम्" इति न्यायात्। *प्रथमे तु किं चैतन्यस्य परिणामः उत शुद्धस्य† वा? आहो विशिष्टस्य?

* अत्रेदमनुसन्धेयम्। ननु—प्रधानस्यापि सत्त्वांशमादाय उपादानगोचरज्ञानचीकीर्षाकृतिमत्त्वादिसम्भवः सुवचः—इति चेत् न। तदानीं साम्यावस्थायां विषमावस्थात्मकज्ञानकृत्यादिपरिणामायोगात्। विषमावस्थायां प्रधानस्वरूपभङ्गप्रसङ्गाच्च। साम्यावस्थापन्नगुणत्रयस्यैव प्रधानत्वाङ्गीकारात्। न च—साम्यावस्थोपलक्षितं गुणत्रयं तदिति वाच्यम्। साम्यावस्थायाः सदातनत्वे विशेषणत्वप्रसङ्गात्। कादाचित्कत्वे त्वसत्कार्यवादप्रसङ्गो दुर्वारः।

† 'शुद्धस्य' प्रधानस्येत्यवसेयम्।

नाद्यः। चैतन्यस्य निर्विकारकूटस्थत्वेन तथाऽङ्गीकारे वक्ष्यमाणानेक श्रुति-स्मृति-युक्तिविरोधात्। न द्वितीयः। पूर्वमेव दूषितत्वात्। नापि तृतीयः। प्रकृतिवैशिष्ट्यं किं जीवस्य उत ईश्वरस्य वा? नाद्यः। किञ्चिज्ज्ञत्वाज्जगत्सर्गाद्यनुपपत्तेः। न द्वितीयः। ईश्वरानङ्गीकारात्। अथ-सेश्वरसाङ्ख्यमते भवतु प्रकृतिविशिष्टस्य महदादिपरिणामित्वम्-इति चेत्। न। प्रकृतिशब्देन किं माया उच्यते? मायेश्वराभ्यां अन्यदेव किञ्चिद्वा? नान्त्यः। अप्रसिद्धत्वात्। आद्येत्विष्टापत्तेः।

मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम्।

इति श्रुतेः। किं च सा माया सती वा ईश्वरवत्? उत असती? नरशृङ्गवत् अनिर्वाच्या वा? नाद्यः। वक्ष्यमाणाद्वैतश्रुति-विरोधात्। न द्वितीयः। असतः प्रमाणाविषयत्वात्[1]। सदसदात्म-कत्वेन विरोधाच्च। न तृतीयः। सदसद्भ्यामनिर्वाच्यत्वाङ्गीकारेत्व-द्वैतवादप्रसङ्गात्। किं च ईश्वरे प्रकृतिवैशिष्ट्यं किं संयोगेन? किं वा समवायेन? आहो तादात्म्येन? यद्वामायिकेन? नाद्यः। संयोगस्य समवायाधीनत्वात्। तस्य च द्व्यणुकखण्डनेनैव निराकृत-त्वात्। अतएव न द्वितीयो ऽपि। तृतीये तु तादात्म्यमपि किं भेदसहिष्णु* उत अभेदरूपमेव वा? आद्ये समवायनिरासेनैव निरासः। द्वितीये त्वीश्वरातिरिक्तप्रकृत्यसिद्धेश्च। चतुर्थे त्वद्वैतवाद-प्रवेशः। अथ प्रलये विलोमपरिणामपरम्पराप्यस्ति न वा? नाद्यः।

---

१ इदं ख. पुस्तके नास्ति।

---

* भेदो विकल्पः तं सहते इति भेदसहिष्णु विकल्पसहमित्यर्थः।

'गुणानां साम्यावस्थाप्रकृतिः प्रलयः' इति प्रलयलक्षणविरोधात्। नापि द्वितीयः। कदाचित्परिणमते कदाचिन्नेतिविनिगमकाभावात्। ननु—तृणादेरन्यानपेक्षस्यैव कदाचित् क्षीररूपेण परिणामः कदाचिन्न इत्यादिवत्तत्रापि सम्भवति—इति चेत्। न। तत्रापि धेन्वादिजठर-सम्बन्धस्यैव नियमात्। बलीवर्दादावभावाच्च। ननु—यथा पङ्गुपुरुषो ऽन्धं प्रवर्तयति यथा वाऽयस्कान्तो लोहं एवं पुरुषः प्रकृतिशक्ति-हीनो ऽपि दृक्शक्तिहीनं प्रधानं—इति चेन्न। वागादिना पङ्गोः सान्निध्येनाऽयस्कान्तस्य प्रवर्तकत्वात्। पुरुषस्य वागाद्यभावात्। नित्य-सन्निधानेन नित्यं प्रवर्तकत्वापत्तेश्च। न च—स्वत एव परिणामः सम्भवतीति वाच्यम्। प्रयोजनाभावात्। न च पुरुषभोगः प्रयो-जनम्। त्वन्मते पुष्करपलाशवत्पुरुषस्य निर्लेपत्वस्वीकारात्। अन्यताख्यात्यनिर्वचनीयख्यात्यनङ्गीकारेण भोगारोपस्याप्यऽसम्भवात्। ननु—वस्तुतो निर्लेपत्वेऽपि कर्तृत्वाद्याश्रयबुद्ध्यविवेकेन भोक्तृत्वादि-सम्भवात्। तद्विवेकेन च कर्तृत्वनिवृत्त्यामोक्षस्यापि सम्भवादिति चेत्। न। तव मते ऽविवेकपदार्थस्यैवालीकत्वात्। तथा हि। अवि-वेको नाम किं विवेकाभावः? यद्वा तदन्यः? उत तद्विरोधी? नाद्यः। अभावाद्भावोत्पत्त्यनङ्गीकारात्। न द्वितीयः। विवेकादन्यस्य घटादेः कर्तृत्वादिसङ्गहेतुत्वदर्शनात्। तृतीये तु भावरूपमज्ञानमेव तदिति वाच्यम्। तथा चागतो ऽसि मार्गे। मायावादप्रवेशात्। तदुक्तम्।

अविवेककृतःसङ्गो नियमस्येतिचेत्तदा।
बलादापतितो मायावादः साङ्ख्यस्य दुर्मतेः॥

इति। किं च प्रकृतिपुरुषविवेकस्य षट्पदार्थषोडशपदार्थविवेकस्य

वा मोक्षहेतुत्वे न किमपि प्रमाणं पश्यामः। अलौकिकफल-साधनतायाः आगमैक[1]वेद्यत्वात्। न च—कणाद-कपिलादिवाक्यमेव मन्वादिवाक्यवदेव प्रमाणमिति वाच्यम्। युक्तिशास्त्रत्वेनाऽऽगम-विधया प्रामाण्याभावात्। अन्यथा प्रतिज्ञामात्रेणैव वस्तुसिद्धेरुद्देश-लक्षण-परीक्षादिप्रयासो न स्यात्।

ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि[2] यन्ति*।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति†।

इत्यादि श्रुतिबोधितत्वाच्च। कीदृशं च तज्ज्ञानं मोक्षहेतुः। सामान्याकारेण वा विशेषाकारेण? आद्ये प्रमेयत्वादिरूपेण सर्वेषामस्त्येव तज्ज्ञानम्। द्वितीये तु। सर्वेषां पदार्थानां तेन तेन

---

१ 'आगमैक्य०' इति क. पुस्तके।

२ ग. पुस्तके 'य एतद्विदु ०मेवोपयन्ति' इति पाठः।

---

* ब्रह्मविद आहुः। यथा वयं ब्रह्म विदित्वा अस्माद्विनाशनात् 'मुक्ताः एवं 'ये तत् ब्रह्म विदुः' ज्ञातवन्तः 'ते अमृता' मुक्ता 'भवन्ति'। ये पुनरेवं ब्रह्म न विदुः ते 'इतरे' ब्रह्मविद्भ्यो ऽन्ये अब्रह्मविद इत्यर्थः। 'दुःखं' जन्ममरणादिलक्षणमेवापि 'यन्ति' प्रतिपद्यन्ते। अविदुषां न कदाचिदपि दुःखनिवृत्तिः। ते हि दुःखमेव आत्मत्वेनोप च्छन्ति इति भावः।

† परमार्थज्ञानसंस्कृतेन मनसैव आचार्योपदेशपूर्वकं चानुद्रष्टव्यम्। तत्र च दर्शनविषये ब्रह्मणि न इह नानास्ति किञ्चन। न किञ्चिदप्यसति नानात्वे नानात्वमध्यारोपयत्यविद्या। एवं सति 'यः इह नानेव पश्यति' 'स मृत्योः मृत्युं' मरणान्मरणं 'आप्नोति'। अविद्याध्यारोपणव्यतिरेकेण नास्ति परमार्थतो द्वितीयमित्यर्थः।

रूपेण ज्ञानं ब्रह्मणोऽप्यशक्यम्। अनन्तत्वात्। अथ—द्रव्यत्वादिना ज्ञानं कारणमिति चेत्। तर्हि तद्विभागवचनादेव तल्लाभात्पृथिवीत्यादिरूपेण तदुत्पादनं व्यर्थम्। एवं प्रकृतिपुरुषविवेकेऽपि विकल्पनीयम्। तत्रापि सामान्याकारेण ज्ञानस्यातिसुलभत्वात्। विशेष्याकारेण-चाशक्यत्वात्तस्यैवानुपपत्तिः। अथात्मतत्त्वज्ञानं कारणमिति चेत् न। तत्र तार्किकादिपक्षे—अहं जानामि—इत्यात्मज्ञानं वर्तत एव सार्वजनीनम्। न चास्य पारोक्ष्यत्वं भ्रान्तित्वं वा शक्यं वक्तुम्। अथैतस्यापरोक्षप्रमात्वेऽपि मिथ्याज्ञानवासनावशीकृतत्वान्न मिथ्याऽज्ञाननिवर्तकता। किन्तु पदार्थतत्त्वविवेकोत्तरकालीनश्रवणादिपरिपाकजनितज्ञानान्तरस्यैव सवासनमिथ्याज्ञाननिवर्तकत्वम्—इति चेत्। न। आत्मापरोक्ष प्रमात्वेन वासनानिवर्तकताभावस्य तत्रापि समानत्वात्। तन्निष्ठवैजात्ये प्रमाणाभावाच्च। विस्तरेण चैतस्य तृतीयमुद्गरे नैय्यायिकमोक्षखण्डने प्रतिपाद्यमानत्वाच्चेहोपरम्यते।

प्राभाकराणां तु अख्यात्यङ्गीकारेण भ्रान्तित्वानभ्युपगमात्तत्त्वज्ञानस्य कोपयोगः? अथ—"क्षीयन्ते चास्य कर्माणि" इति श्रुतेः कर्मक्षय एव ज्ञानेन क्रियते—इति चेत्। तर्हि आत्मतत्त्वज्ञानस्य सर्वदा विद्यमानत्वात् कुतो न कर्मक्षयः?। त्वया तु गुणगतजातेरनङ्गीकाराद्वैजात्यांशमपि न शक्यते वक्तुमित्यधिकम्। अथ—ब्रह्मचर्य्यादिशम-दमाद्यङ्गोपबृंहितमपुनरावृत्तिफलकं विहितं ज्ञानं तन्निवर्तकमिति चेत्। न। ज्ञानस्य कर्तुमकर्तुमन्यथाकर्तुमशक्यत्वेन विधेयत्वानुपपत्तेः। कीदृशं च ज्ञानं विधीयते। ज्ञानादिविशिष्टात्मविषयं वा केवलात्मविषयं वा? आद्ये संसारिज्ञानान्न विशेषः

आत्मतज्ज्ञानयोर्गुणगुणिभावस्य आत्मनानात्वस्वीकारस्य च विस्तरेण तार्किकं प्रति श्रुतियुक्त्यनुभवबाधितत्वस्य प्रतिपाद्यमानत्वाच्च । द्वितीये तु । मोक्षहेत्वात्मतत्त्वज्ञानविषयस्य शुद्धात्मविषयत्वम् । तच्च सजातीय-विजातीय-स्वगत-भेदरहितत्वमेवायातम् । तथा च ब्रह्मवादिमतप्रवेशः । प्रत्यक्षादीनां चान्यथोपपत्तिं वक्ष्यामः । उदाहृतश्रुतेश्च कर्मकारणीभूतमिथ्याज्ञानस्य तत्त्वज्ञाननिवर्त्यत्वात् तद्द्वारा कर्मक्षयप्रतिपादने तात्पर्यम् । न तु साक्षाद्विरोधः इत्युपरम्यते ।

साङ्ख्य-पातञ्जलमते ऽपि आत्मनो नित्यानुमेयत्वान्न तत्साक्षात्कारसम्भवः* । परोक्षज्ञानं तु अद्याप्यस्तीति न तत्साधनम् । न च—परोक्षस्वभावस्याप्यात्मनो योगजधर्मप्रभावात् साक्षात्कारसम्भव—इति वाच्यम् । योगजधर्मस्यापि पदार्थसामर्थ्यानुसारेणैवातिशयहेतुत्वात् । तदुक्तं भट्टैः ।

> यत्राऽप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
> दूर-सूक्ष्मादिदृष्टौ[१] स्यान्न रूपे श्रोत्रवृत्तिता ॥

इति । तस्मात्प्रकृतिपुरुषविवेकस्य दुर्निरूप्यत्वेन तत्साध्यमोक्षस्याप्यसिद्ध्यापातेन प्रयोजनत्वाभावेन च न प्रधानस्य महदादिरूपेण परिणामित्वसिद्धिः । एतेन प्रकृतिपुरुषविवेकादनाद्य-[२] विवेकनिवृत्तौ तं पुरुषं प्रति च निरधिकाराया: प्रकृतेः न पुन-

---

१ ०'सूक्ष्मादिदृष्टौ' इति क. पुस्तके ।
२ 'अविद्या' इति ख. पुस्तके ।

---

* वक्ष्यमाणचतुर्थमुद्गरे निर्विकल्पकसमाधिनैव साक्षात्काराङ्गीकारात् ।

स्तद्भोगार्था प्रवृत्तिः इति त्रिविधदुःखस्यैकान्तात्यन्त*विरोध एव। स्वभावतः केवलस्यापि पुरुषस्य कैवल्यमित्यङ्गीकृतमप्यपास्तम्। वक्ष्यमाणचतुर्थमुद्गरे महावाक्यार्थविरोधाच्च इत्यन्यत्र विस्तर इति दिक्। प्रकृतमनुसरामः। ननु—यथा जलमचेतनं स्वभावत एव निम्नाभिमुखं चलति तथा प्रधानं परिणमते इति न सहकार्यपेक्षा—इति चेत्। भ्रान्तो ऽसि। जलादावधिष्ठातृदेवतायाः श्रुतिसिद्धत्वात्। श्रुतिश्च।

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ† तिष्ठतः।

एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते‡ तिष्ठतः।

---

* साधनान्तरभावित्वमैकान्तिकत्वम्। साधनेन सिद्धस्य वस्तुनो ऽविनाशित्वमात्यन्तिकत्वमित्यर्थो ऽवगन्तव्यः।

† 'प्रशासने' उत्पादनपालनादौ 'तिष्ठतः' स्थितौ भवत इत्यर्थः। यथा राज्ञः प्रशासने राज्यमस्फुटितं नियतं वर्तत एवं 'एतस्य अक्षरस्य प्रशासने हे गार्गि सूर्याचन्द्रमसौ' सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ अहोरात्रयोर्लोकप्रदीपौ तादर्थ्येन प्रशासित्रा ताभ्यां निर्वर्त्यमानलोकप्रयोजनविज्ञानवता निर्मितौ 'विधृतौ' च स्याताम्। साधारणसर्वप्राणिप्रकाशोपकारकत्वात् लौकिकप्रदीपवत्। तस्मादस्ति तत् येन विधृतावीश्वरौ स्वतन्त्रौ सन्तौ सूर्याचन्द्रमसौ निर्मितौ तिष्ठतः। नियतदेशकालनिमित्तोदयास्तमनवृद्धिक्षयाभ्यां च वर्तेते। तदस्तु एवमेतयोः प्रकाशयितृ अक्षरं प्रदीपकर्तृ विधारयितृवत्।

‡ विधृते नियमिते। द्यावापृथिव्योर्विधृतत्वं गुरुत्वे सति पतनशून्यत्वम्। द्यौश्च पृथिवी च 'द्यावापृथिव्यौ' तौ सावयवत्वात् स्फुटनस्वभावे अपि सत्यौ, गुरुत्वात्पतनस्वभावे, संयुक्तत्वाद्वियोगस्वभावे चेतनावदभिमानिदेवताधिष्ठितत्वात् स्वतन्त्रे अपि एतस्य 'अक्षरस्य' प्रशासने वर्तेते विधृते तिष्ठतः। एतद्धि अक्षरं सर्वव्यवस्थासेतुः! सर्वमर्यादाविधारणं अतो नास्याक्षरस्य प्रशासनं द्यावापृथिव्यौ अतिक्रामतः। तत्सिद्धमस्यास्तित्वमक्षरस्येति सङ्क्षेपः।

इति।

यो वा एतदक्षरं गार्गि विदित्वा ऽस्माल्लोकात्प्रैति स ब्राह्मणः।

यो वा एतदक्षरं गार्ग्यविदित्वा ऽस्माल्लोकात्प्रैति स कृपणः*।

इति। अन्तर्यामिब्राह्मणं च।

यः पृथिव्यां तिष्ठन्पृथिव्यामन्तरो। यं पृथिवी न वेद†।

यस्य पृथिवी शरीरम्‡ यः पृथिवीमन्तरो यमयति§।

एवं यो ऽप्सु तिष्ठन्, यस्तेजसि, यो वायौ, यो ऽन्तरिक्षे, यः प्राणे, यो वाचि, यश्चक्षुषि, यः श्रोत्रे, यो मनसि, यस्त्वचि, यो

---

* यो वा एतदक्षरमविदित्वा अस्मिँल्लोके जुहोति यजते वा बहूनि वर्षसहस्राणि अन्तवदेवास्य तत्फलं भवति। फलभोगान्ते क्षीयन्त एवास्य कर्माणि। अपि च हे 'गार्गि यो वा एतदक्षरमविदित्वा अस्मात् लोकात् प्रैति' म्रियते परलोकं गच्छति वा स 'कृपणः' कृतफलस्यैवोपभोक्ता जननमरणप्रबन्धारूढः संसरति। अथवा कृपणः पणक्रीतो दासादिरिवेत्यर्थः। अथ य एतदक्षरं विदित्वा ऽस्माल्लोकात् प्रैति स ब्राह्मणः ब्रह्मवित् अक्षयफलोपभोक्ता जननादिरहितः ब्राह्मण इव स्वतन्त्र इति वा भवतीत्यर्थः।

† पृथिवी स्वाधिष्ठातृदेवता तादात्म्यमापन्नापि यं न वेद न जानातीत्यर्थः।

‡ स्वशरीरमिति। पृथिव्यादेः शरीरप्रयत्नेन साक्षाज्जनितक्रियाश्रयत्वादीशशरीरत्वम्। जीवप्रयत्नसाक्षाज्जनितक्रियाश्रयस्यैव जीवशरीरत्वात्।

§ 'यमयति' नियमयतीत्यर्थः। नियम्यत्वं केवलस्य पृथिव्यादेर्देशकालविशेष एव स्थाप्यमानत्वचाल्यमानत्वादिकम्। एव मन्यत्रापि बोध्यम्।

विज्ञाने, यो रेतसि, अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, नान्यो ऽतो ऽस्ति द्रष्टा। नान्यो ऽतो ऽस्ति श्रोता। नान्यो ऽतो ऽस्ति मन्ता* नान्यो ऽतो ऽस्ति विज्ञाता† एष आत्मान्तर्याम्यमृतो‡ ऽन्यदार्तम्§।

इत्यादि। यच्चोक्तं "विषयमात्रं सुखाद्यात्मकं पद्मावतीन्यायेन" इति तदप्यप्रामाणिकमेव।

तथा हि। विषयमात्रस्य सुखाद्यात्मकत्वे सर्वान्प्रत्यविशेषापत्तेः। सुखं नष्टमुत्पन्नं विषयसत्त्वे ऽप्यनुभवाच्च। अथ—ब्रह्मवादिमते ऽपि मायायां ब्रह्माधिष्ठानमीक्षणरूपमपेक्ष्य परिणामाङ्गीकारे ईक्षणरूपे मायापरिणामे ईक्षणान्तरं वाच्यमित्यनवस्था। सन्निधिमात्रं चेद्-धिष्ठानं तदा सर्वदा परिणाम इति वाच्यम्—इति चेत्। न। ईक्षणरूपपरिणामस्य ईक्षणाधिष्ठाननैरपेक्ष्यस्य—

सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्।

इत्यनन्तरं।

स ऐक्षत। बहुस्याम्। प्रजायेयम्।

इति श्रुत्यैव बोधितत्वेन परिणामान्तरस्यैव ईक्षणाङ्गीकारात्। कदाचिदेव 'ऐक्षत' इत्यस्य ईश्वरस्वातन्त्र्यस्यापि श्रुत्यैव बोधितत्वान्न दोषावकाशः। अव्याप्यवृत्तिशक्तिसम्भवाच्च। वस्तुतस्तु वक्ष्यमाण-

* 'मन्ता' सङ्कल्पयिता। कार्यसङ्कल्पकर्तेत्यर्थः।

† 'विज्ञाता' निश्चेता। निश्चयस्य विज्ञानत्वात्।

‡ 'अमृतः' संसारधर्मरहितः। जन्म-जरादिधर्मशून्य इत्यर्थः।

§ 'आर्तं' विनाशि। बाधेन पीडितं मिथ्येति यावत्।

निर्वचनीयजगत्कर्तृत्वस्यातर्क्यस्य तर्कानवसराच्च। तथा च श्रुतिः।

नैषा तर्केण मतिरापनेया* [कठोपनिषत् अ. १ व. २ कं.]

इति। प्रधानस्य चाचेतनत्वेन तदसम्भवात्। माया-तदीक्षण-हिरण्यगर्भाणामेव प्रधान-महदहङ्कारनामस्थापने ऽपि ईक्षणे ऽस्मत्-सम्मताध्यात्मिकसम्बन्धानङ्गीकारेण त्वया तस्य स्वातन्त्र्यं वक्तुमशक्यत्वात्। अहङ्कारसृष्ट्यनन्तरं भूतसृष्टेर्वक्ष्यमाणश्रौतसृष्टिविरुद्धत्वाच्च। अद्वैतवादस्य श्रुति-स्मृतिसिद्धत्वाच्च। तथा च श्रुतिः।

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।

इत्यादि। मनुश्च।

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति† ॥

[अ. १२ श्लो. ९१।]

---

* अस्याः श्रुतेरियं व्याख्या। अतः अनन्यप्रोक्ते आत्मनि उत्पन्ना येयमागमप्रतिपाद्यात्मनि 'मतिः' 'नैषा तर्केण' स्वबुद्ध्यभ्यूहमात्रेण 'आपनेया'। न प्रापणीयेत्यर्थः। नापनेतव्या न हन्तव्या। तार्किको ह्यनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किञ्चिदेव कथयति। इति शङ्करभगवत्पूज्यपादाः। रामानुजाचार्यास्तु 'एषा' आत्मविषयिणी 'मतिः' 'तर्केण न' प्रापणीया। अतः तर्ककुशलेनापि स्वयं ज्ञातुं न शक्येत्यर्थः।

† सर्वभूतेष्वधिष्ठानतया अनुस्यूतः सर्वभूतानि चाधिष्ठेयतया तस्मिन्नेवारोपितानि इति समं पश्यन् इति योजना। "सर्वं खल्विदं ब्रह्म" इति श्रुतेः। 'आत्मा' अन्तःकरणं तच्छुद्ध्यर्थं यः कर्मकरोति स 'आत्मयाजी'। तदधिकारिकं ज्ञानमित्यधिकारिनिर्देशः। 'स्वाराज्यं' मुक्तिरिति फलनिर्देशः। स्वेनैव राजते इति स्वराट् स्वप्रकाशं ब्रह्म तस्य भावः स्वाराज्यम्।

इति। न च—

ऋषिं प्रसूतं कपिलं यस्तमग्रे।

ज्ञानैर्बिभर्त्ति जायमानं च पश्येत् *।

इत्यादिश्रुत्युक्तमाहात्म्यात् कपिलः प्रबलः—इति वाच्यम्।

यद्वै किञ्चन मनुरवदत्तद्भेषजम्।

इत्यादि श्रुत्या च मन्वादिस्मृतीनामेव प्रामाण्योक्तेः। यद्यपि वक्ष्यमाणप्रत्यक्षाद्वैतश्रुतिविरोधो ऽस्ति। तथापि स्मृत्या प्रत्यवस्थाने स्मृत्यैव समाहितम्। अथास्तु कपिलस्मृतेरप्रामाण्यम्। न तु योग स्मृतेः।

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।

बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥

तां योग इति मन्यन्ते स्थिरामिन्द्रियधारणाम् †।

---

'अधिगच्छति' प्राप्नोति इत्यर्थः। सर्वज्ञनारायणास्तु—सर्वेषु ईज्यमानदेवतासु आत्मानमीज्यत्वेन पश्यन् सर्वभूतात्मन्यात्मनि आत्मनि ईज्यमानेन सर्वभूतानीज्यन्ते इति सममुभयत्र। आत्मानमीज्यमानं पश्यन् आत्मयाजी भवति। स च स्वाराज्यं स्वतः सर्वाधिपत्यमधिगच्छति इति व्याचख्यौ।

* अस्या श्रुतेः व्याख्यानपरः श्लोकः।

आदौ यो जायमानं च कपिलं जनयेदृषिम्।

प्रसूतं बिभृयात् ज्ञानैस्तं पश्येत्परमेश्वरम्॥

इति। उत्तानार्थो ऽयम्।

† 'हृदा तदधिगच्छति' इत्युक्तम्। तत्र सा हृत् कथं प्राप्यत इति तदर्थो योग उच्यते। ज्ञानार्थत्वात् श्रोत्रादीनि पञ्च इन्द्रियाणि 'ज्ञानानि'

त्रिरुन्नतं स्थाप्य समं शरीरम्।

इत्यादिश्रुत्युक्ताष्टाङ्गयोगप्रतिपादकत्वात्—इति चेत्। सत्यम्। प्रयोजनवदद्वैतसाक्षात्कारोपयोगियोगप्रतिपादनार्थं अनादिपूर्वपक्षकक्षान्यायाभाससिद्धा प्रधानादिप्रक्रिया तैरनूदिता। न तु तत्र कापिल-पातञ्जलादिस्मृतेस्तात्पर्यम्। एवं न्याय-मीमांसादिशास्त्राणामप्यद्वैतानुकूलपूर्वपक्षकक्षापूरणार्थत्वं बोद्धव्यम्। ननु अस्तु प्रकृति-पुरुषविवेकस्य दुर्निरूपत्वेनाप्रामाण्यम्। अद्वितीये ब्रह्मणि मायाशक्तेरप्यनिर्वाच्यत्वेन तुल्यमेव दुर्निरूपत्वम्।

तथा हि। मायाशक्तिः किमधिष्ठानरूपा? यद्वा कार्यरूपा? उत तदुभयभिन्ना? आद्ये दृष्टान्ताभावः। न हि दाहशक्तिर्दहनरूपा सम्भवति। प्रतिबन्धके सति दाहासम्भवात्। द्वितीये तु। कार्यस्योत्पत्तेः पूर्वमभावादसत्वापत्तिः। तृतीये तु। सापि सती असती वा? आद्ये अद्वैतहानिः। द्वितीये शून्यत्वापत्त्या जगत्कारणत्वासम्भवः। किं च तत्रापि प्रमाणमस्ति न वा? आद्ये किं

---

इत्युच्यन्ते। तानि ज्ञानशब्दवाच्यानीन्द्रियाणि 'यदा' यस्मिन्काले स्वस्वविषयेभ्यो निवर्तितानि आत्मन्येव 'अवतिष्ठन्ते' 'सह मनसा' यदनुगतानि भवन्ति। तेन सङ्कल्पादिव्यावृत्तेन अन्तःकरणेन। 'बुद्धिश्च'ाध्यवसायलक्षणा 'न विचेष्टते' न व्याप्रियते 'तां आहुः परमां गतिम्'

तामीदृशीं तदवस्थां 'योगमिति' 'मन्यन्ते' वियोगमेव सन्तं। सर्वानर्थसंयोग-वियोगलक्षणा हीयमवस्था योगिनः। एतस्यां ह्यवस्थायां अविद्याद्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा। स्थिरामचलां इन्द्रियधारणां बाह्यान्तः करणानां धारणमित्यर्थः।

प्रत्यक्षं? उतानुमानम्? यद्वोपमानम्? आहो शब्दः? अथ वा अर्थापत्तिः? आहोस्वित् अनुपलब्धिः? इति। तत्र नाद्यः। अतीन्द्रियायास्तस्याः प्रत्यक्षप्रमाणाविषयत्वात्। सर्वसम्मतेन्द्रियगणवत्। अनुमानस्य चानिर्वाच्यत्वेनैव व्याप्तिज्ञानासम्भवात्। नापि शब्दः। जाति-गुण-क्रिया-सम्बन्धाद्यभावात्। नाप्यर्थापत्तिः। तां विना कस्यचिदर्थस्याप्यनुपपत्त्यसम्भवात्। नाप्यनुपलब्धिः। अभावाभावात्। नान्त्यः*। सर्वप्रमाणविरहिणो ऽलीकत्वस्यैव पर्यवसानात्-इति चेत्। उच्यते। यथा कार्यरूपात्स्फोटात्कारणरूपादग्नेश्च दाहशक्तिः, यथा वा पृथुबुध्नोदराकारात् घटकार्यात् कारणरूपायाश्च मृदः घटशक्तिरतिरिक्ताऽनिर्वाच्या कल्प्यते; तथा मायाशक्तिरपि कार्यान्यथानुपपत्तिगम्या सदसद्भ्यामनिर्वाच्या अतिरिक्तैवेति न पूर्वोक्तदोषावकाशः। तदुक्तम्।

का[1]र्यादाश्रयतश्चैषा भवेच्छक्तिर्विलक्षणा।
स्फोटाङ्गारौ दृश्यमानौ शक्तिस्तत्रानुमीयते॥
पृथुबुध्नोदराकारो घटः कार्योऽथ मृत्तिका।
शब्दादिभिः पञ्चगुणैर्युक्ता शक्तिस्ततद्विधा॥

---

* प्रमाणाभाव इत्यर्थः।

---

१ 'वस्तोराश्रयतः' इति क. पुस्तके पाठः। परं नैष साधीयानिति प्रतिभाति।

न पृथ्व्यादिर्न शब्दादिः शक्तावस्ति यथा तथा।
अत एव ह्यचिन्त्यैषा न निर्वचनमर्हति॥

इति। उक्तं च भगवता गीतायां चतुर्थेऽध्याये।

*अजो ऽपि सन्नव्ययात्मा भूतानामीश्वरो ऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥

इति। अनादिमायैव मदुपाधिभूता. यावत्कालस्थायित्वेन च नित्यजगत्कारणत्वसम्पादिका, मदिच्छयैव प्रवर्तमाना, विशुद्ध-सत्वमयत्वेन मम मूर्तिः। तद्विशिष्टस्य च अजत्वमव्ययत्वमीश्वरत्वं चोपपन्नम्। अतो ऽनेन नित्येन देहेन 'विवस्वन्तं' च त्वां च प्रति इमं 'योगं' उपदिष्टवानहम्† इत्युपपन्नम्। तथा च श्रुतिः। "आकाशशरीरं ब्रह्म" इति। आकाशोऽत्राऽव्याकृतम्‡। "आकाश एवतदोतं च प्रोतं च" इत्यादौ तथा दर्शनात्।

---

* 'अजो ऽपि' सन्निति अपूर्वदेहग्रहणम्, 'अव्ययात्मापि सन्' इति पूर्वदेहविच्छेदम्, 'भूतानां' भवनधर्मिणाम् सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां 'ईश्वरो ऽपि' सन् इति धर्माधर्मत्वं निवारयति। कथं तर्हि देहग्रहण मित्युत्तरार्धेनाह। 'प्रकृतिं स्वामधिष्ठाय सम्भवामि'। प्रकृतिं मायाख्याम् विचित्रां अनेकशक्तिं अघटमानघटनपटीयसीम्। स्वां स्वोपाधिभूताम्। अधिष्ठाय चिदाभासेन वशीकृत्य। सम्भवामि। तत्परिणामैरेव देह-वानिव जात इव च भवामि इति योजनीयम्।

† अस्य मूलं गीतायां चतुर्थे ऽध्याये "इमं विवस्वते योगं प्रोक्तवानह-मव्ययम्" इति।

‡ अव्याकृतशब्देन मायैवेति ग्राह्यम्।

आकाशस्तल्लिङ्गात्* ।

इति न्यायाच्च† । तर्हि भौतिकविग्रहाभावात्तद्धर्ममनुष्येत्यादि-प्रतीतिः कथं? इति चेत् । तत्राह । आत्ममाययेति । मन्माययैव मयि मनुष्यत्वादिप्रतीतिः । लोकानुग्रहाय : न तु वस्तुवृत्त्या इति भावः । तदुक्तम् मोक्षधर्मे ।

माया ह्येषा मया सृष्टा‡ मन्मां पश्यसि[1] नारद ।

---

१ 'पश्यती'ति क. पुस्तके ।

---

* छान्दोग्ये 'अस्य लोकस्य का गतिः ?' इति शालावत्येन पृष्टः प्रवाहणः 'आकाश इति होवाच' तत्र आकाशशब्देन किं परं ब्रह्म अभिधीयते उत भूताकाशं ? इति संशयः । उभयत्र प्रयोगदर्शनात् । भूतविशेषे तावत् सुप्रसिद्धो लोक-वेदयोराकाशशब्दो ब्रह्मण्यपि क्वचित् प्रयुज्यमानो दृश्यते । तथापि प्रसिद्धतरेण प्रयोगेण शीघ्रं बुद्ध्यारोहात् आकाशशब्देन भूताकाश एव ग्राह्य इति । नचायमाकाशशब्दः उभयोः साधारणः शक्यो विज्ञातुम् । अनेकार्थत्वप्रसङ्गात् । तस्मादाकाशशब्दो ब्रह्मणि गौणो भवितु मर्हति । न च मुख्यसम्भवे गौणार्थग्रहणं युक्तम् । इति प्राप्ते आह । 'आकाश' शब्देन इह ब्रह्मणो ग्रहणं युक्तम् । कुतः 'तल्लिङ्गात्' परस्य हि ब्रह्मण इदं लिङ्गम् । 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' । इति परस्माद्ब्रह्मणः सर्वभूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा । अतः प्रसिद्धिबलेन प्रथमतरं भूताकाशप्रतीतावपि ब्रह्मलिङ्गादाकाशशब्देन ब्रह्मैव ग्राह्यमिति सङ्क्षेपः ।

† न्यायो व्याससूत्राणि उत्तरमीमांसा वा ।

‡ एषा विचित्ररूपा मूर्त्तिर्मायाविज्ञतित्वान्माया मयैव ईश्वरेण सृष्टा निर्मितेत्यर्थः ।

सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसि[1] ॥

इति। 'सर्वभूतगुणैर्युक्तं' कारणोपाधिं मां चर्मचक्षुषा द्रष्टुं नार्हसीत्यर्थः। उक्तं च भवगता भाष्यकारेण।

"स च भगवान् ज्ञानै*श्वर्य-शक्ति-बल-वीर्य-तेजोभिः षड्गुणैः सदा† सम्पन्नः त्रिगुणात्मिकां वैष्णवीं स्वां मायां प्रकृतिं वशीकृत्य अजोऽव्ययो भूतानामीश्वरो नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते। स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया"।

इति। व्याख्यातृभिश्चोक्तम्। "स्वेच्छानिर्मितेन मायामयेन दिव्येन रूपेण सम्बभूव" इति।

नित्यो यः कारणोपाधिर् मायाख्योऽनेकशक्तिमान्।
स एव भगवद्देह इति भाष्यकृतां मतम् ॥

इति। अन्ये तु परमेश्वरे देहदेहिभावं न मन्यन्ते। किञ्च। यश्च नित्यो विभुः सच्चिदानन्दघनो भगवान् वासुदेवः परिपूर्णो निर्गुणः

१ '०मर्हती'ति क. ख. पुस्तकयोः।

* तत्र चेतनाचेतनात्मकसकलप्रपञ्चगोचरं ज्ञानमेव ज्ञानम्। अप्रतिहतेच्छत्वमैश्वर्यम्। जगत्प्रकृतिस्वभावः शक्तिः। जगत्सृजतो ऽस्य श्रमाभावः तिलकालकबन्धप्रयत्नेन स्वसृष्टसकलसंहरणं च बलम्। जगत्प्रकृतित्वे ऽपि पयोदधिभावेन विकारविरहो वीर्यम्। जगत्सृष्टौ सहकार्यनपेक्षत्वं पराभिभवसामर्थ्यं च तेजः इत्यनुसन्धेयम्।

† 'सदा' इत्यनेन यावत्कालस्थायित्वम्। न तु नित्यत्वम्। कालस्यापि स्वमते कल्पितत्वादित्यलं विस्तरेण।

परमात्मा स एव तद्विग्रहो नान्यः कश्चिद्भूत-भौतिको मायिको वा इति। अस्मिन्पक्षे इत्थं योजना—

आकाशवत्सर्वगतश्च नित्यः। अविनाशी वा अरे ऽयमात्मा। अनुच्छित्तिधर्मा।

इति श्रुतेः। वस्तुगत्या जन्म-विनाशरहितः सर्वभासकः। सर्वकारणमायाधिष्ठानत्वेन सर्वभूतेश्वरोऽपि सन्नहं प्रकृतिं स्वभावं सच्चिदानन्दघनैकरसम्। मायां व्यावर्तयति। स्वामिति। निजस्वरूपमित्यर्थः।

स भगवः कस्मिन्प्रतिष्ठितः? स्वे महिम्नि।

इति श्रुतेः। स्वस्वरूपमधिष्ठाय स्वरूपावस्थित एव सन्। सम्भवामि। देह-देहिभावमन्तरेणैव देहिवद्व्यवहरामि। कथं तर्हि अदेहे सच्चिदानन्दघने देहत्वप्रतीतिः? अत आह। आत्ममायया इति। निर्गुणे शुद्धे सच्चिदानन्दघने मयि भगवति वासुदेवे देह-देहिभावशून्ये तद्रूपेण प्रतीतिः मायामात्रमित्यर्थः। तदुक्तम्।

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सो ऽप्यत्र देहीवाभाति मायया॥

इति। सप्तमे ऽध्याये च।

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते*॥

---

* व्याख्यातं चैतत्। 'दैवी' देवस्य मम ईश्वरस्य विष्णोः स्वभावभूता। 'हि' यस्मात्। 'एषा' यथोक्ता 'गुणमयी'। 'मम माया दुरत्यया' दुःखेन

इति । 'दैवी' "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इति श्रुतिप्रतिपादिते स्वतो द्योतनवति देवे स्वप्रकाशचैतन्यानन्दे निर्विभागे तदाश्रयतया तद्विषया च कल्पिता । 'एषा' साक्षिप्रत्यक्षत्वेनापलापानर्हा । 'हि' शब्दाक्रमोपादानलाद्यर्थापत्तिसिद्धा च । 'गुणमयी' सत्व-रजस्तमोगुणात्मिका । त्रिगुणरज्जुरिवातिदृढ़त्वेन बन्धनहेतुः । 'मम' मायाविनः परमेश्वरस्य । स्वभूता स्वाधीनत्वेन जगत्सृष्ट्यादिनिर्वाहिका । 'माया' तत्वप्रतिभासप्रतिबन्धेन अतत्वप्रतिभासहेतुरावरण-विक्षेपशक्तिद्वयवत्यविद्या सर्वप्रपञ्चप्रकृतिः ।

मायां* तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।

---

अत्ययः अतिक्रमणं यस्याः सा । तत्र एवं सति 'सर्वधर्मान्परित्यज्य मामेव' मायाविनं स्वात्मभूतं सर्वात्मना 'ये प्रपद्यन्ते ते मायामेतां' सर्वभूतचित्तमोहिनीं 'तरन्ति' अतिक्रामन्ति । संसारबन्धनान्मुच्यन्त इत्यर्थः ।

* ननु केयं माया ? प्रकृतिः इति चेत् । सा किं साङ्ख्यसम्मतगुणत्रयसाम्यावस्था ? विकारावस्थायामव्याप्तेः । तदानीं साम्यावस्थाया अभावात् । न च अनादिभावत्वे सति ज्ञाननाश्यत्वं प्रकृतित्वम् । तथापि लक्ष्यतावच्छेदकस्यानिरूपणात् । उच्यते साम्यावस्थोपलक्षितगुणत्रयस्यैवावच्छेदकत्वस्वीकारात् लक्षणसमन्वयः । न च अव्याप्तेः तर्हि दूषणत्वानापत्तिः । लक्षणविघटकत्वेनैव तस्य दूषणत्वात्—इति वाच्यम् । क्वचिदेकत्रैव विशेषणत्वप्रतिक्षेपकत्वेन धर्म्यन्तरादौ च यथाश्रुतबोधकत्वेन दूषणत्वसम्भवात् । यथा चेष्टावत्वस्य शरीरलक्षणस्य मृत-सुषुप्तशरीरादौ अव्याप्तिदोषेण विशेषणत्वप्रतिक्षेपादुपलक्षणत्वम् । यथा च पृथिव्याः नैमित्तिकद्रवत्वस्य पृथिवीलक्षणस्य घटादावव्याप्तिदोषात् यथाश्रुतार्थबाधेन जातिघटितत्वम् । नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वम् । एवं प्रकृते ऽपीति दिक् ।

इति श्रुतेः। 'मामेव ये प्रपद्यन्ते' मामेव सर्वोपाधिरहितं चिदानन्द-सदात्मानमखण्डं प्रपद्यन्ते वेदान्तवाक्यजन्यया निर्विकल्पकसाक्षात्काररूपयाऽज्ञानतत्कार्यविरोधिन्या चेतोवृत्त्या विषयीकुर्वन्ति। 'ते' ये केचित्। 'एतां' दुरतिक्रमणीयाम्। मायां अखिलानर्थभुवम् अनायासेनैव। 'तरन्ति' अतिक्रामन्ति। इति व्याख्या। श्रुतयश्च अग्रे अभिन्ननिमित्तोपादानत्वप्रतिपादने वक्ष्यामः। तस्मात् श्रुतिस्मृत्यनुमानादिप्रमाणसिद्धाया मायायाः न प्रमाणाभावशङ्कापि इति सङ्क्षेपः।

## इति मायानिरूपणम्।

ननु—तर्हि द्वैतप्रतिपादनपराणां सर्वेषामपि प्रस्थानानां प्राप्तं निर्विषयत्वम्। न च इष्टापत्तिः। तत्कर्तृणां महर्षीणां त्रिकालदर्शित्वात्—इति चेत्। न। मुनीनामभिप्रायापरिज्ञानात्। सर्वेषां प्रस्थानकर्तृणां मुनीनां वक्ष्यमाणविवर्तवाद एव पर्यवसानेन अद्वितीये परमेश्वर एव वेदान्तप्रतिपाद्ये तात्पर्यम्। नहि ते मुनयो भ्रान्ताः। तेषां सर्वज्ञत्वात्। भ्रान्तत्वे वा विनिगमनाविरहात्। किन्तु। वहिर्मुखप्रवणानां आपाततः परमपुरुषार्थे ऽद्वैतमार्गे प्रवेशो न सम्भवतीति नास्तिक्यनिराकरणाय तैः प्रस्थानभेदाः प्रदर्शिताः। न तु तात्पर्येण*। तदुक्तम् साङ्ख्यवृद्धैः पातञ्जलभाष्ये चतुर्थचरणे।

---

* अत एव "एतेन योगः प्रत्युक्तः" इति एतत्सूत्रेणापि योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं न निराक्रियते। किन्तु जगदुपादान-स्वतन्त्रप्रधानवद्विकार-महदहङ्कार-पञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते। न च एतावता एषामप्रामाण्यं भवितु मर्हति। यत्पराणि

गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥

[यो. भा. पा. ४ सू. १३।]

आरम्भपरिणामाभ्यां पूर्वं सम्भावितं जगत्।
पश्चात्काणादसाङ्ख्याभ्यां युक्त्या मिथ्येति निश्चितम्॥

एतदभिप्रेत्यैव भगवता गौतमेनापि सूत्राणि सूचितानि।

स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः* ।३१

---

हि तानि तत्राप्रामाण्ये ऽप्रामाण्यमश्नुवीरन्। न च एतानि प्रधानादिपराणि। किन्तु योगस्वरूप-तत्साधन-तदवान्तरफल-विभूति-तत्परमफल-कैवल्यव्युत्पादनपराणि। तच्च किञ्चिन्निमित्तीकृत्य व्युत्पाद्यं इति प्रधानं सविकारं निमित्तीकृतम्। यथा पुराणेषु सर्ग प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितं तत्प्रतिपादनपरेषु। न तु तद्विवक्षितम्। अन्यपरादपि चान्यनिमित्ततः प्रतीयमानमभ्युपेयेत। यदि न मानान्तरेण विरुध्येत। अस्ति तु वेदान्तश्रुतिभिरस्य विरोध इत्युक्तम्। तस्मात् प्रमाणभूतादपि योगशास्त्रान्न प्रधानादिसिद्धिः। अत एव योगशास्त्रं व्युत्पादयिता आह स्म भगवान् वार्षगण्यः "गुणानां परमं रूपं" इति।

* अत्र वात्स्यायनभाष्यम्। यथा स्वप्ने न विषयाः सन्ति। अथ च अभिमानो भवति। एवं न प्रमाणानि प्रमेयाणि च सन्ति। अथ च प्रमाणप्रमेयाभिमानो भवति। ३१ स्वप्नान्ते विषयाभिमानवत् प्रमाणप्रमेयाभिमानः न पुनर्जागरितान्ते विषयोपलब्धिवत्—इत्यत्र हेतुर्नास्ति। हेत्वभावादसिद्धिः। स्वप्नान्ते चासन्तो विषया उपलभ्यन्ते इत्यत्रापि हेत्वभावः। प्रतिबोधे ऽनुपलम्भादिति चेत्। प्रतिबोधविषयोपलम्भादप्रतिषेधः। यदि प्रतिबोधे ऽनुपलम्भात् स्वप्ने विषया न सन्तीति। तर्हि य इमे प्रति-

माया-गन्धर्वनगर-मृगतृष्णिकावद्वा ।३ २

[अध्यायः ४, आह्निकं २ ।]

इति ।

कण्टकवदावरकमात्रमिदं शास्त्रम् । तत्त्वं तु बादरायणात् सिद्धम् ।

इत्युक्तम्* । साङ्ख्यभाष्यकृद्भिश्चोदाहृतम् ।

अक्षपादप्रणीते च काणादे साङ्ख्ययोगयोः ।
त्याज्यः श्रुतिविरुद्धोऽशः श्रुत्यैकशरणैर्नृभिः ॥

---

बुद्धेन विषया उपलभ्यन्ते उपलम्भात्सन्तीति विपर्यये हि हेतुसामर्थ्यम् । उपलम्भाभावे सति अनुपलम्भादभावः सिद्ध्यति । उभयथा त्वभावे नानुपलम्भस्य सामर्थ्यमस्ति । यथा प्रदीपस्याभावाद्रूपस्यादर्शनमिति । तत्र भावेनाभावः समर्थ्यत इति । स्वप्नान्तविकल्पे च हेतुवचनम् । स्वप्नविषयाभिमानवदिति ब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्यः । कश्चित् स्वप्नो-भयोपसंहितः । कश्चित् प्रमोदोपसंहितः । कश्चिदुभयविपरीतः । कदाचित् स्वप्नमेव न पश्यतीति । निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद्विकल्पोपपत्तिरिति । अत्र "हेत्वभावादसिद्धिः" एतदग्रिमं सूत्रमनुसन्धेयम् ।

* अत एव बौद्धाधिकारे उदयनाचार्यैर्विज्ञानवादिमतदूषणप्रस्तावे "आगतो ऽसि मार्गे । अद्वैतमतप्रवेशात् । ननु—अद्वैतवादस्यापि वैशेषिकादिप्रतिपक्षित्वात् तदपि त्वया निराकरणीयम्—इति चेत् । किमस्माकमार्द्रकवणिजां अन्यत्र बहित्रवृत्तिवित्तचिन्तया ?" इत्यद्वैतवादस्य पञ्चत्वं प्रतिपादितम् इति ।

जैमिनीये* च वैयासे विरुद्धोंऽशो न कश्चन।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ॥

इति पराशरोपपुराणादिभ्यो ऽपि ब्रह्ममीमांसाया ईश्वरांशे बलवत्त्वम् इति। साङ्ख्यशास्त्रस्य तु पुरुषार्थ-तत्साधन-प्रकृतिपुरुष-विवेकावेव मुख्यो विषय इति ईश्वरप्रतिषेधांशबाधे ऽपि नाप्रामाण्यम्। "यत्परः शब्दः स शब्दार्थः" इति न्यायादिति। नारद-पञ्चरात्रे प्रथमपटले जीव-ब्रह्मैक्यनिर्णये जगन्मिथ्यात्वप्रतिपादकः षण्णवतितमः श्लोक उदाहृतः।

अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमद्वयम्।
तत्र प्रमाणं वेदान्ताः गुरुः स्वानुभवस्तथा॥

इति। भट्टपादैरपि मीमांसकवार्तिके तर्कचरणे प्रतिपादितम्।

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन॥

इति। आत्मा निष्प्रपञ्चं ब्रह्मैव। तथापि कर्मसङ्गिने न तथा वाच्यम्।

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।

इति भगवद्वचनाच्चेति। भगवद्वसिष्ठेनाप्युक्तम्।

---

* अत्र 'जैमिनीये श्रुतिविरुद्धोंऽशो न कश्चनेत्युक्तं तत् केवलं वेदप्रामाण्यस्वीकारमात्रपरमेव। न तु सर्वत्र। न चेद्वेदान्तानामकिञ्चित्करत्वं न वदेन्मीमांसकः।

अज्ञस्यार्द्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्।
महानिरयजालेषु स तेन विनियोजितः॥

इति। किञ्च गौतमादिमुनीनां तत्तच्छास्त्रस्मारकत्वमेव श्रूयते। न तु बुद्धिपूर्वककर्तृत्वम्। तदुक्तम्।

ब्रह्माद्या ऋषिपर्यन्ताः स्मारका न तु तारकाः।

इति। उक्तं च न्यायभाष्ये।

यो ऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम्।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत्॥

इति। श्रुतिश्च।

अस्य महतो भूतस्य निःश्वसितमेतत् ऋग्वेदो यजुर्वेदः सामवेदो ऽथर्वाङ्गिरस इतिहासः पुराणं विद्याः श्लोकाः सूत्राणि व्याख्यानान्यनुव्याख्यानान्येतस्यैव निःश्वसितानि।

इति। अत एव सर्वतन्त्रस्वतन्त्रैर्वाचस्पतिमिश्रैः—

तर्काप्रतिष्ठानात्*।

---

* आगमगम्ये ऽर्थे केवलेन तर्केण न प्रत्यवस्थातव्यम्। यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्र निबन्धनास्तर्काः अप्रतिष्ठिता भवन्ति। उत्प्रेक्षाया निरङ्कुशत्वात्। न च महापुरुषपरिगृहीतत्वेन कस्यचित्तर्कस्य प्रतिष्ठा। महापुरुषाणामेव तार्किकाणां मिथो विप्रतिपत्तेः। अथोच्येत अन्यथा वयमनुमास्यामहे यथा नाप्रतिष्ठादोषो भवेदिति। न हि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम्। एतदपि तर्काणामप्रतिष्ठितत्व तर्केणैव प्रतिष्ठाप्यते। सर्वतर्काप्रतिष्ठायां च सर्वलोकव्यवहारोच्छेदप्रसङ्गः। अतीतवर्तमानाध्वसाम्येन अनागते ऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय

इति। बादरायणसूत्रभाष्यटीकायां सङ्ग्रहश्लोक उक्तः।

यत्नेनानुमितो ऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥

इति। वार्तिककृद्भिश्चोक्तम्।

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।
नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निर्णयः॥

इति।

---

लोकः प्रवर्तमानो दृश्यते। श्रुत्यर्थविप्रतिपत्तौ च अर्थाभासनिराकरणेन सम्यगर्थनिर्द्धारणं तर्केणैव क्रियते। मनुरपि चैवमेव मन्यते।

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥

इति। 'धर्मस्य शुद्धिः' अधर्मादभेदनिर्णयः। तस्मान्न तर्काप्रतिष्ठानं दोष—इति चेत्। एवमप्यविमोक्षप्रसङ्गः। क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वे ऽपि प्रकृते तावद्विषये अप्रतिष्ठितत्वादनिर्मोक्ष एव प्रसज्यते तर्कस्य। नहीदमतिगम्भीरं भावयाथात्म्यं युक्तिनिबन्धनं आगममन्तरेणोत्प्रेक्षितुमपि शक्यम्। रूप-लिङ्गाद्यभावाच्च नायमर्थः प्रत्यक्षादीनाम्। अपि च 'सम्यक्ज्ञानान्मोक्ष' इति सर्वेषां मोक्षवादिनामभ्युपगमः। तच्च वस्तुतन्त्रत्वादेकरूपम्। लोके हि एकरूपेणावस्थितो यो ऽर्थः स परमार्थः तद्विषयं ज्ञानं च सम्यक्ज्ञानमित्युच्यते। यथा "अग्निरुष्णः" इति। तादृग्ज्ञाने च विप्रतिपत्तिरनुपपन्ना। विप्रतिपद्यन्ते च सर्वे ऽपि तार्किकाः। न च तेषु कश्चिन्मुख्यः यस्य मतं प्रतिपद्येमहि। न च शक्यते त्रैकालिकास्तार्किका एकस्मिन्दिवसे काले च समाहर्तुम्। वेदस्य तु नित्यत्वं विज्ञानोत्पत्तिहेतुत्वं च प्रसिद्धमेव। अतः सिद्धमौपनिषदस्य ज्ञानस्य सम्यक्ज्ञानत्वम्। अत आगमानुसारितर्केणैव ब्रह्म वेदितव्यम्।

प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्।

इति वायुपुराणाच्च। ननु—किं तर्कमात्रमप्रतिष्ठितम्? तथा-सति अप्रतिष्ठानत्वसाधकतर्कस्यापि तथात्वापत्त्या तत्वनिर्णयाऽसिद्धेः—इति चेत्। न। श्रुतिस्मृत्यविरुद्धतर्कस्य तत्वनिर्णायकत्वेनोपादेयत्वात्। अत एव याज्ञवल्क्येनोक्तम्।

पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गविस्तरः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश* ॥

[याज्ञवल्क्यस्मृतिः अ. १ श्लो. ३]

---

* पुराणं ब्राह्मादि, न्यायः तर्कविद्या, मीमांसा वेदवाक्यविचारः, धर्मशास्त्रं मानवादि, अङ्गानि व्याकरणादीनि षट्, एतैरुपेताश्चत्वारो वेदाः विद्यानां पुरुषार्थसाधनज्ञानानां। एतानि चतुर्दश। धर्मस्य च चतुर्दश स्थानानि हेतव इत्यर्थः। इति विज्ञानेश्वरः। ननु—'न्याय' शब्देन तर्कविद्यायाः गौतम-कणादप्रतिपादितायाः ग्रहणे धर्मस्य विद्यायाश्च स्थानभूतत्वं तस्याः सिद्धमेव। तथा सति वक्ष्यमाणमनुवाक्ये वेदशास्त्रविरुद्धस्य तर्कस्य निषिद्धत्वात् शृगालगीतायां च तदध्ययनस्य शृगालत्वप्राप्तिफलकत्वाभिधानात् पूर्वापरविरोधो दुर्वारः स्यात्—इति चेत्। सत्यम्। तथापि तर्कविद्याया मुख्यो विषयस्तावत्पदार्थविचारः। व्याकरणशास्त्रेण पदव्युत्पत्तौ जातायां न्याय-वैशेषिकदर्शनाभ्यां पदार्थव्युत्पत्तिः। अनन्तरं मीमांसया वेदवाक्यार्थविचारः तस्माच्च धर्मस्वरूपज्ञानं तदनुष्ठानं च भविष्यति। एवं च अस्त्येव परम्परया तर्कविद्यायाः वेदार्थविचारोपयोगित्वम्। तथा सति "यत्परः शब्दः स शब्दार्थः" इति न्यायात् पदार्थविवेकमात्रे तर्कविद्यायाः स्वीकारेण न कोऽपि विरोध इति सर्वं समञ्जसम्।

इति। अन्यथा बृहस्पत्यादिमहानुभावनिर्मितनास्तिकशास्त्राङ्गतर्काणामप्युपादेयत्वापत्तेः। तदुक्तं मनुना।

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः* ॥
[म. स्मृ. अ. १२ श्लो. १०६]

इत्युपादेयत्वम्। श्रुतिविरुद्धस्य तु—

---

* ऋषिर्वेदः तत्र भवः आर्षः। अथवा आर्षो वेदः ऋषिभिः स्मृतत्वात्। तथा चाह भगवान्व्यासः,—

युगान्ते ऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥

इति। वैदिकं धर्मोपदेशं वेद-शास्त्राविरोधिना तर्केण ऊहापोहान्तर्यसिद्धिपूर्वकं युक्त्या अनुसन्धत्ते निरूपयति स धर्मं वेद इति योजना। 'मीमांसासंज्ञकस्तर्क' इत्युक्तेरिति राघवानन्दः। अत्रेदमूह्यम्। यदा सौर्ये कर्मणि निर्वापमन्त्रे—

"देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा जुष्टं निर्वपामि" इति प्रकृतितः प्राप्ते मन्त्रे ऽग्निपदस्यार्थसमवायादपोहः सूर्यपदस्य च क्षेपः। अयं तर्को न विरुध्यते वेदेन। यो ऽप्येवं मन्यते। सौर्ये कर्मण्यग्नेर्देवताया अभावात् अर्थेन च मन्त्राणां प्रयोज्यत्वात् एकदेशोपघ्नमे च मन्त्रत्वाभावात् कृत्स्नस्य वै मन्त्रस्य लोपः। एष वेदार्थविरोधी तर्कः। सतु त्याज्य एव।

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

इति च। धर्मस्य शुद्धिः अधर्माद्भेदनिर्णयः।

पाषण्डिनो विकर्मस्थान् बैडालव्रतिकाञ्छठान् ।
हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्* ॥

इति । मोक्षधर्मे सृगालगीतायाम्† ।

---

१ 'वामाचाररतांस्तथा' इति ख. पुस्तके ग. पुस्तके तु 'वामाचारान्म-हाशठान्' इति पाठः ।

---

* तत्र 'पाखण्डिनो' वेद बाह्यव्रतलिङ्गिनः रक्तपटनग्नचरकादयः बौद्धादिपाषण्डदर्शनान्तःपातिनो वा । अनापदि ये वर्णान्तरवृत्त्या जीवन्ति ते 'विकर्मस्थाः' प्रतिषिद्धवृत्तिजीविनो वा तान् । 'बैडालव्रतिकान्' दाम्भिकान् लोकावर्जनार्थमग्निहोत्राद्यनुतिष्ठतः । 'शठान्' येषामन्यद्धृदये ऽन्यद्वाचि ते । "वेदेष्वश्रद्दधाना" इति कुल्लूकभट्टः । 'हैतुकान्' हेतुशास्त्रावलम्बिनः वेदविरुद्धेन हेतुमात्रेण परलोकसाधनोन्नायकान्-नास्ति दत्तं नास्ति हुतं—इत्येवं स्थितप्रज्ञाः तान् । 'बकवृत्तीन्' दाम्भिकानेवैषद्भेदभिन्नान् 'वाङ्मात्रेणापि नार्चयेत्' तिष्ठतु तावदासनादिकं । स्वागतमास्यतामित्यपि वक्तुमयोग्या एते इत्यभिप्रायः ।

† महाभारते शान्तिपर्वणि मोक्षधर्मेषु अशीत्यधिकशततमे ऽध्याये ऽस्य मितिहासः । धनमदेनोन्मत्तः कश्चन वैश्यः पथि व्रजन्तं काश्यपं हेलया रथघातेन पातयामास, दरिद्रत्वादनेनाहमवज्ञात इति मत्वा—

आर्तः स पतितः क्रुद्धः त्यक्त्वात्मानमथाब्रवीत् ।
मरिष्याम्यधनस्येह जीवतो ऽर्थो न विद्यते ॥
तथा मुमूर्षुमासीनमकूजन्तमचेतनम् ।
इन्द्रः सृगालरूपेण बभाषे लुब्धमानसम् ॥

"मनुष्ययोनिमिच्छन्ति" इत्यादिभिर्द्विचत्वारिंशद्भिः श्लोकैः । सैवेयं सृगालगीता ।

अन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्* ।
तस्येयं फलनिर्वृत्तिः शृगालत्वं वने[1] मम† ॥

इत्यादिभिर्हेयत्वं प्रतिपादितम्। विस्तरस्त्वाकरे ज्ञेयः। तस्मान्न सत्कार्यवादिनामपि सेश्वर-निरीश्वरसाङ्ख्यानां परिणामवादसिद्धिः। इत्यलं मृतमारणेनेति दिक्।

## इति प्रधानखण्डनेन सत्कार्यवादखण्डनम्।

नचेश्वरस्य निमित्तकारणमात्रत्वम्। किन्त्वभिन्ननिमित्तोपादानकत्वमेव। श्रुतिसिद्धत्वात्। तस्य च मायाद्वारैव सिद्धत्वान्न प्रधान-परमाण्वाद्यपेक्षा। तथा च श्रुतयः।

अपाणिपादो जवनो ऽग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं नच तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम् ॥

---

१ 'मम द्विज' इति मुम्बईमुद्रितमहाभारतपुस्तके पाठः।

---

* ईक्षा प्रत्यक्षं तां अनुप्रवृत्ता ईक्षा अन्वीक्षा धूमादिदर्शनेन वह्न्याद्यनुमानम्। न प्रधानामान्वीक्षिकीं तर्कविद्यां। कणभक्षाऽक्षचरणादिप्रणीतं शास्त्रम्।

'निरर्थिकां' पुरुषार्थचतुष्टयशून्याम् श्रुत्यैकगम्यस्य वस्तुतत्वस्य निर्णयानुपयोगिनीमित्यर्थः। [अ. १८० श्लो. ४७ उत्तरार्द्धम्।]

† "अधीत्य गौतमीं विद्यां शृगालीं योनिमाप्नुयात्" इत्यादिवचनैरपि तर्कविद्याध्ययनस्य शृगालत्वप्राप्तिरूपं फलमुक्तम्। तदेतत्सर्वमपि तत्सिद्धान्तस्यैव मुख्यत्वेन स्वीकारे सतीत्यवगन्तव्यम्। पदार्थविवेकरूपैकदेश एव तस्यादरे तु न कश्चिद्दोष इत्यनवद्यम्।

न तस्य कार्यं करणं च विद्यते पराख्य शक्तिर्विविधैव श्रूयते* ॥
स्वाभाविकी ज्ञान-बल-क्रिया च ॥

इति ।

बहुरूप इवाभाति मायया बहुरूपया।
मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम् ।
स मायी सृजते विश्वम् ।
इन्द्रो† मायाभिः पुरुरूप इयते ।

इत्यादयो ऽन्या अपि । स्मृतिश्च।

निरुपमनिर्गुणे ऽप्यखण्डे मयि चिति सर्वविकल्पनातिशून्ये ।
घटयति जगदीश-जीवभेदानघटनघटनापटीयसी माया ॥

इति । अभिन्ननिमित्तोपादानत्वे च—

सर्वं खल्विदं ब्रह्म । तज्जलानीति‡ शान्त उपासीत । यतो वा इमानि भूतानि जायन्ते§ । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्ब्रह्म विजिज्ञासस्व ।

---

* 'जवनः' पादकार्यकारी। 'गृहीता' हस्तकार्यकारी। 'कार्यम्' शरीरम्। 'करणं' इन्द्रियाणि। 'सर्वं' कार्यं ब्रह्म। इत्यादि यथायथमूह्यम्।

† 'इदि' दीप्तौ इत्यस्माद्धातोः इन्दति प्रकाशते ऽसौ इन्द्रः परमात्मा।

‡ 'तज्जलान्' जायत इति जः लीयत इति लः 'अन्' इति सत्तास्फूर्त्यादिजीवनवत् जश्च लश्च अन् च तज्जलान् इति व्याख्येयम्।

§ 'यतः' यस्मात्। 'भूतानि' कार्याणि। एतेन पञ्चभूतान्यस्य गुणक्रियादेर्वच्यमाणदृग्दृश्यतादात्म्येच्छणादेश्च ब्रह्महेतुकत्वलाभः। 'जायन्ते' उत्पद्यन्ते। 'जातानि' दृश्यतया प्रादुर्भूतानि। 'जीवन्ति' सत्ता-स्फूर्ति-मर्यादादिकं

इति कोटिशः प्रमाणानि । अत्र च पञ्चमीतृतीययोः* हेतु-सामान्यार्थकत्वे ऽपि लीयमानकार्याधारत्वोक्त्या उपादानत्वं लभ्यते । तथा सति अभिन्ननिमित्तोपादानं ब्रह्म इति सिद्धं भवति । एतेन । 'ब्रह्मपरिणामो जगत्' इति भिन्नाभिन्नवादिभट्टभास्करमतानुयायि-वैष्णवमतं अथ च केवलं निमित्तकारणेश्वरवादिनां नैय्यायिक-वैशेषिक-साङ्ख्य-पातञ्जल-पाशुपतादीनां यो ऽयमाशयः—चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणमात्रत्वं दृष्टम् । नतूपादानत्वमपि । एकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधात् । अनुमानं च—ईश्वरो न द्रव्यस्यत्युपादानम् । चेतनत्वात् । कुम्भकार-वत्—इति । कुलालस्यापि सुखाद्युपादानत्वात्साध्यवैकल्यं स्यात् । तद्वारणाय द्रव्यपदम् । उपादानकारणं तु परमाणवः प्रधानं वा ?—इत्यादि जल्पितमपास्तम्† । तस्मात् सत्कार्यवादाभिप्रायेणापि

---

प्राप्नुवन्ति । 'प्रयन्ति' इति शतृप्रत्ययान्तम् । 'या' प्रापणे । प्रयाति गच्छतीति प्रयत् । प्रयन्तीति प्रथमाबहुवचनम् । लयं लभमानानीत्यर्थः ।

* "यतो वा" इति श्रुतौ 'यतः' इयं पञ्चमी "येन जातानि" इति वाक्ये 'येन' इति तृतीया च इदं विभक्तिद्वयमत्र समानार्थकम् ।

† अत्रेदमनुसन्धेयं विपश्चिद्भिः । किंच ईश्वरो 'न द्रव्योपादानं' इति येन चेतनत्वहेतुना अनुमीयते तेनैव तस्य रागादिमत्वमप्यनुमातुं शक्यम् । उभयत्रापि मूलभूतव्याप्तेरनुकूलतर्कसद्भावाऽसद्भावाभ्यां विशेषाभावात् । प्रत्युत रागाद्यनुमान एव अनुकूलः तर्कः सम्भवति । संसारिणां रागाद्यु-पादानतायामात्मत्वमेव प्रयोजकम् । न तु संसार्यात्मत्वम् । गौरवात् । न च—सिद्धान्ते श्रुतिगम्येश्वरस्यापि पुरुषत्वाद्रागादिमत्वानुमानं दुर्वारम्

गुरुशब्दाभिधेयसिद्धिः । अथास्तु तर्हि—सत्कारणवादाभिप्रायेण अद्वितीयब्रह्मविवर्त एव भूतभौतिको मायिको वा भक्तवात्सल्येन स्वीकृतदेहविशेषो गुरुशब्दाभिधेयः—इति चेत् । तत्त्वागतो ऽसि मार्गे घट्टकुटीप्रभातवृत्तान्तन्यायेन* । ब्रह्मातिरिक्तत्वेन प्रतीतस्य मिथ्यात्वस्वीकारात् । मिथ्यात्वप्रतिपादनस्य चाग्रे वक्ष्यमाणत्वात् इति दिक् ।

---

—इति वाच्यम् । आगमादीश्वरसिद्धौ दृष्टाननुसरणात् । न हि स्वर्गापूर्वदेवतादिष्वागमादवगम्यमानेषु किञ्चिदस्ति दृष्टं साधनम् । न ह्यागमो दृष्टसाधर्म्यात्प्रवर्तते । अपि तु श्रुतिप्रतिपादितार्थसिद्ध्यर्थमदृष्टानि दृष्टानि दृष्टान्तविपरीतस्वभावानि सुबहून्यपि कल्प्यमानानि न कलङ्कगन्धिमावहन्ति । श्रुतिप्रमाणत्वात् । व्याप्त्यपेक्षं ह्यनुमानं व्याप्त्युपनीतं सर्वमपेक्षते । स्वागमस्तु स्वतन्त्रत्वादेवान्यानपेक्षो भवति । न च—कथं तर्हि श्रुतावपि मानान्तरानुसारेणापूर्वादिकल्पनं?—इति शङ्क्यम् । सुहृद्भावमात्रेण दृष्टानुसारात् । यद्यागमश्चिरातीतान्निर्व्यापाराद्यागात्स्वर्ग इति बोधयेत् तर्हि तथैवानुमन्येमहि । नत्वागमः तथा बोधयति । किन्तु 'कालान्तरहतयागात्स्वर्गः' इत्येतावन्मात्रं बोधयति । तत्तु मध्ये व्यापारकल्पनायामपि न विरुध्यते इत्यविरोधात् । तत्र लोकानुसारेण'नन्तरपूर्वक्षणवर्तिनः कारणत्वं' इत्यनुभवमनुरुध्यापूर्वकल्पनम् । नत्विह तथा रागादिमत्वकल्पनं प्रवर्तते । निरवद्यत्वात् सकामत्वादिश्रुतिविरोधादित्यलमतिविड़म्बनेनेति शिवम् ।

* घट्टं शुल्कग्रहणस्थानं तत्रस्था कुटी घट्टकुटी, तत्र प्रभातं, तस्य यो वृत्तान्तः स एव न्यायः । शुल्कादानभिया विपथेन रात्रौ पलायमानस्य चौरवणिजः घट्टस्थकुटीसमीपे एव प्रभातम् । तेन यथा तस्याभीष्टसिद्ध्यभावः ।

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीब्रह्मानन्दसरस्वती श्रीपाद-शिष्य काश्मीरक[1] श्रीसदानन्दयति[2]विरचितायामद्वैतब्रह्मसिद्धौ गुरुशब्दाभिधेयविचारे जगत्तत्वनिरूपणव्याजेन दुर्दुरूढवादिशिरसि प्रथमो मुद्गरप्रहारः ॥ १ ॥



एवं विपर्येन धावमानस्यापि वादिनः तद्दोषतादवस्थ्यं एवं रूपो हि न्याय-भेदः । एष एव घट्टकुटीप्रभातवृत्तान्तन्यायः ।

१ इदं क. पुस्तके नास्ति ।

२ ग. पुस्तके 'यति' पदं नास्ति ।

# अथ द्वितीयो मुद्गरप्रहारः।

प्रथमे मुद्गरे देहतत्वं सम्यग्विचारितम्।
द्वितीये ऽस्मिन्जीवतत्वं सत्तर्कैः प्रोच्यते ऽधुना ॥ १ ॥

ननु नायं घट्टकुटीप्रभातवृत्तान्तन्यायेन[१] शिरसि[२] मुद्गरप्रहार उचितः। कुत इति चेत्। देहेन्द्रियाद्यतिरिक्तस्य नास्ति*

---

१ 'द्वितीयाद्येर्जीवतत्वं' इति क. पुस्तके।
२ 'वादिनः' इत्यधिकं ग. पुस्तके।

---

* नास्ति परलोकः तत्साधनमदृष्टं तत्साक्षी ईश्वरो वा इति मतिर्यस्य स नास्तिकः। परलोक-तत्साधनाभाववादी ईश्वरासत्ववादी च नास्तिक इत्युच्यते। वास्तवस्त्वयमेवार्थः। परं विभिन्ना वादिनः स्वाभीष्टमताग्रहग्रहगृहीता भूत्वा मतान्तराश्रयिणः सर्वानपि नास्तिकानिति वदन्तो न सहन्ते। यथा वा वैदिकाः "नास्तिको वेदनिन्दकः" इति वदन्ति। एवं "लिङ्गार्चनपराः शैवा नास्तिकाः सम्प्रकीर्तिताः" इति माध्वाः। "तप्तमुद्राङ्कितततनुर्नास्तिकं धर्ममाश्रितः। पशुतुल्यः स विज्ञेयः सर्वकर्मसु गर्हितः" इति शैवादयश्च स्वयमास्तिका भूत्वा इतरान् नास्तिकत्वेन प्रहरन्तो दृश्यन्ते। तत्तद्दर्शनान्यपि नास्तीकदर्शनानीति प्रतिपादयन्तो न कम्पन्ते। वस्तुतस्तु ये हि परलोक-तत्साधन-तत्साक्षिणामसत्वं वदन्तो ऐहिकमेव सत्यतया प्रतिपद्यन्ते चार्वाक-माध्यमिक-सौत्रान्तिकादयः त एव नास्तिकाः। ते च परलोकाद्यसत्वं स्पष्टतया उद्घोषयन्ति। ये पुनर्वेदस्य स्वतः प्रामाण्यं नाद्रियन्ते नैय्यायिकादयः ते सर्वे ऽप्यास्तिका एव। शैवादीनां तु परस्परं निन्दामात्रमित्यलं पल्लवितेन।

कास्तिक* सर्वदर्शनकर्तृसम्मतस्य इहलोक-परलोकसम्बन्धिकर्मफलभो-क्तृजीवात्मन एव गुरुशब्दाभिधेयस्य सिद्धत्वात्। हन्त तर्हि कोऽयं जीवात्मा व्यवह्रियते? यत् सत् तत्क्षणिकं यथा घनः। इति न्यायेन क्षणिकं विज्ञानमेव वा? बुद्धमुनिशिष्यैः मुक्तकच्छैर्वैभाषिक-सौत्रा-न्तिक-योगाचार-माध्यमिकैः स्वीकारात्। देहेन्द्रियाद्यतिरिक्तोऽपि देहपरिमाणेन परिमितः सावयवश्चेति वा? आर्हतमतानुयायि-भिर्मुक्तवसनैः स्वीकृतत्वात्। मध्यमपरिमाणस्यानित्यत्वशङ्कया नित्यो

---

* अस्ति परलोक इति मतिर्यस्य स आस्तिकः। परलोक-तत्साधन-तत्साध्यिक्रियाणामस्तित्ववादीत्यर्थः।

† पुराणादिग्रन्थेषु भगवतः श्रीविष्णोः दशावतारेषु नवमोऽवतारो बुद्धः द्वाविंशत्यवतारेषु एकविंशतितम इति प्रसिद्धम्। स च—

ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम्।
बुद्धो नाम्नाऽजनसुतः कीकटेषु भविष्यति॥
[भा. स्कं १ अ. ३ श्लो. २५]

इत्युक्तत्वात्कीकटेषु प्रादुर्बभूवेति ज्ञायते। कीकटदेशस्तु—

चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे।
तावत्कीकटदेशः स्यात् तदन्तर्मगधो भवेत्॥

इति तल्लक्षणाच्चरणाद्रि-गृध्रकूटयोर्मध्यगतः प्रदेशः कीकटः। स च सम्प्रति 'बहार' इति नाम्ना प्रसिद्धः। ललितविस्तरादिबौद्धग्रन्थेषु तु—श्रावस्त्यादि-नगरीषु भगवान् बोधिसत्वः सृष्टेः प्रथमकालमारभ्य सदैव विहरत्येव। स च धर्मस्थापनार्थं काले कालेऽवतरति लोकानुजिघृक्षया। 'कपिलवस्तु' नाम्नि नगरे शुद्धोदनस्य राज्ञः गृहे ब्रह्मादिसर्वश्रावकजनप्रार्थनया माया-देव्याः 'सर्वार्थसिद्ध' नाम्ना प्रादुर्बभूवेति। तस्यैव शाक्यसिंहसर्वज्ञादीनि नामान्तराणि—इत्याद्युक्तम्। स एव गौतमबुद्ध इत्यर्वाचीनानां मतम्।

ऽणुरिति तदेकदेशिसम्मतं वा? लाघवात्प्रत्यक्षसिद्धत्वाच्च देह एव वा? चार्वाकादिधुरन्धरैः स्वीकारात्। अथ वा वैशेषिकतार्किक-प्राभाकरसम्मतदेहेन्द्रियाद्यतिरिक्तो ऽपि ज्ञान-सुखाद्यष्टविशेषगुणा*श्रयः कर्ता भोक्ता विभुः प्रतिशरीरं भिन्नश्चेति वा? उत मीमांसकसम्मतश्चिदचिद्रूपांशद्वयात्मको वा? यद्वा साङ्ख्य-पातञ्जलादिसम्मतः नित्यज्ञानरूपो ऽपि भोक्तैव नतु कर्ता? आहो ब्रह्मवादिसम्मतः सर्वोपनिषत्प्रतिपाद्यः सच्चिदानन्दाद्वयमनादिमायया जीवभावापन्नं ब्रह्मैव वा? तत्र क्षणिकविज्ञानात्मवादमारभ्य केवलभोक्तृपर्यन्तात्मवादे ऽपि न गुरुशब्दाभिधेयसिद्धिः। युक्त्यनुभवविरोधात्। आस्तिकं प्रतिवक्ष्यमाणश्रुति-स्मृतिविरोधाच्च।

तथा हि। तत्र बुद्धमुनेः चत्वारः शिष्याः। वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकाः। तत्र वक्ष्यमाणः बाह्यः सर्वो ऽप्यर्थो—यत्सत् तत् क्षणिकं[1] यथा जलधरपटलं†—इति न्यायेन प्रत्यक्षं

---

* आत्मनो ऽष्टगुणा गौतमेनोक्ताः। दया सर्वभूतेषु, क्षान्तिः, अनसूया, शौचं, अनायासः, मङ्गलं, अकार्पण्यम्, अस्पृहा चेति।

† एतदेवोक्तं ज्ञानश्रिया माधवाचार्यप्रणीते सर्वदर्शनसङ्ग्रहे।

यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा अमी।
सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा॥
नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत्।
द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति॥

इति।

---

१ क. पुस्तके 'दीपज्वाला' इति वर्तते।

अनुमेयश्चेति वैभाषिकः। बुद्धिवैचित्र्यात्क्षणिको ऽप्यर्थो ऽनुमेय एव इति सौत्रान्तिकः। घटाकारे हि ज्ञाने घटादीनां प्रतिबिम्ब-सम्भवात्। तथा हि। तत्प्रतिबिम्बं बिम्बपूर्वकम्, प्रतिबिम्बत्वात्। मुखादिप्रतिबिम्बवत्। 'सर्वं विज्ञानमात्रं क्षणिकं' इति योगाचारः। बाह्यानङ्गीकारात् 'तदपि शून्यमेव' इति माध्यमिकः। न च-एते-षामेक एव गुरुः तत् कथं शिष्याणां मतिभेदः?—इति वाच्यम्। तेषां हीन-मध्यमोत्कृष्टमतित्वाद्वैचित्र्योपपत्तेः।

तथा हि, ये हीनमतयः ते सर्वास्तित्ववादेन क्षणिकत्वोक्त्या तदाशयानुरोधेन शून्यतायामवतार्यन्ते। ये तु मध्यमाः ते ज्ञान-मात्रास्तित्वेन शून्यतायामवतार्यन्ते। ये तु प्रकृष्टमतयस्तेभ्यः साक्षा-देव शून्यतातत्त्वं प्रतिपाद्यते इति किमनुपपन्नम्? तत्र[1] प्रथमं वैभाषिक-सौत्रान्तिकयोर्मतं प्रतिपाद्य निराक्रियते।

तथा हि, बाह्यसर्वास्तित्ववादिनौ मन्येते द्वौ समुदायौ। बाह्य आभ्यन्तरश्चेति। तत्र भूतं भौतिकं च आद्यः। भूतं हि पृथिव्यप्तेजो-वाय्वाकाश-रूतवः। भौतिकं च रूपादिविषयाणि तद्ग्राहकाणि चक्षुरादीन्द्रियाणि च। कठिनस्वभावाः पृथिवी-परमाणवः। स्नेहस्वभावा जलपरमाणवः। उष्णस्वभावास्तैजसाः। चलनस्वभावा वायवीयाः। एषां चतुर्विधानां सर्गकाले सङ्घातेन परमाणुपुञ्जा एवावयवभूताः पृथिव्यादयो जायन्ते। नत्ववयवाति-रिक्तो ऽवयवी। मानाभावात्। द्विगुणगुरुत्वाद्युपलब्धिप्रसङ्गाच्च। आभ्यन्तरस्य समुदायः चित्त-चैत्तात्मकः। तस्य च कारणं स्कन्ध-

१ 'अत्र' इति ग. पुस्तके।

पञ्चकम्। रूपस्कन्धः, विज्ञानस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धश्चेति। तत्र रूप्यते एभिरिति रूपम्—इति व्युत्पत्त्या सविषयाणि इन्द्रियाणि रूपस्कन्धः। यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्याः तथापि रूप्यमाणतादशायां कायस्थत्वादिन्द्रियसम्बन्धाद्वा भवन्त्याध्यात्मिकाः। विज्ञानस्कन्धो द्विविधः। अहमितिप्रत्ययाकार आलयविज्ञानाख्यः आद्यः। अयमेवात्मा। 'इदं' इति इन्द्रियादिजन्यो विषयप्रत्ययो दृश्यमानः प्रवृत्तिविज्ञानाख्यः द्वितीयः। स चेन्द्रियभेदेन षड्विधः। एतावुभावपि निर्विकल्पकौ क्षणिकौ च। सत्वात्। क्षणिकत्वं च द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। तथा च पूर्वपूर्वालयविज्ञानेनो*त्तरोत्तरं जन्यत इति चानाद्यनन्तः प्रवाहः। न च—क्षणिकस्यात्मनः कालान्तरभाविभोगार्थं प्रवृत्त्यनुपपत्तिः—इति वाच्यम्। प्रवृत्त्यभावः किं तत्वज्ञानात् प्रागापाद्यते ? ऊर्ध्वं वा ?। नाद्यः। क्षणिकत्वभावनापरिपाकं विना स्थिरत्वगोच[1]रानादिदृढवासनानुच्छेदात्प्रवृत्त्युपपत्तेः। क्षणिकत्वभावना च चतुर्विधा। स्वलक्षणभावना क्षणिकत्वभावना दुःखभावना शून्यभावना चेति। तत्र शुद्धं वस्तु स्वलक्षणम्। अनेन धर्म-धर्मि-

---

१ 'स्थिरत्वविषयिण्याः दृढवासनायाः अनुच्छेदात्' इति क. पुस्तके।

---

* आ—लयं लयपर्यन्तं स्थायि विज्ञानं आलयविज्ञानमित्यभिधीयते। अत्र तु अहमास्पदं विज्ञानमेव। तदुक्तम्।

तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्।

इति।

भावनिरासः । क्षणिकत्वभावनया स्थायित्वनिरासः । नापि द्वितीयः । चतुर्विधक्षणिकत्वभावनापरिपाके तु सोपप्लवालयविज्ञानसन्तानस्योपरमाद्वा निरुपप्लवसर्वज्ञेश्वरसन्तानान्तर्भावरूपमोक्षप्राप्त्या वा प्रवृत्त्यभावस्येष्टत्वात् । एतेन बन्ध-मोक्षौ प्रदर्शितौ । पूर्वोक्तज्ञानजन्यः सुख-दुःखादिप्रत्ययो वेदनास्कन्धः । गौरश्व इत्यादिशब्दजल्पितप्रत्ययः सविकल्पकः संज्ञास्कन्धः । एतेषां वासनारूपा रागादयः क्लेशाः उपक्लेशाश्च मदमानादयो धर्माधर्मौ चेति संस्कारस्कन्धः ।

अत्र विज्ञानस्कन्धश्चित्तम् । इतरे चैत्ताः । चैत्तत्वं तु रूपस्कन्धादिकं चित्ते प्रवाहान्तर्गतमपि चित्तस्य विषयविशेषोपरागे सति भवति । असति नेतीति कादाचित्कत्वाद्बोध्यम् । एषां समुदायः पञ्चस्कन्धी सैवाभ्यन्तरसमुदायहेतुः । तच्च समुदायद्वयं प्रत्यक्षानुमानाभ्यां क्षणिकमेव सिध्यति । प्रत्यक्षेण हि वर्तमानार्थपरिच्छेदिना स्वविषयस्यावर्तमानाद्व्यावृत्तिः क्रियते । यथा नीलपरिच्छेदिना स्वविषयस्यानीलात् । अनुमानं च—सर्वे भावाः क्षणिकाः । अर्थक्रियाकारित्वात् । सत्वाच्च । ये क्षणिका न भवन्ति न तेऽर्थक्रियाकारिणः सन्तश्च । यथा शशविषाणादयः । घटस्यान्त्यक्षणसत्वात्पूर्वपूर्वक्षणविशिष्टसत्वानि स्वसत्ताक्षणादुत्तरक्षणे विनाशीनि । घटसत्वात् । अन्त्यक्षणविशिष्टघटसत्ववत् । एवं क्षणिकेष्वपि प्रवाहेषु अविद्यादिनिमित्तो लोकव्यवहारः । अविद्या तु—क्षणिकेषु स्थायिबुद्धिः, कार्ये नित्यत्वबुद्धिः, दुःखे सुखबुद्धिः, शून्ये वस्तुबुद्धिः इति । एवं च सति समुदायद्वयेन सर्वव्यवस्थोपपत्तेः किमर्थं नित्य-

श्चेतनः आत्मा ईश्वरश्चेति स्वीक्रियते?—इति चेत्। भ्रान्तो ऽसि। सर्वथा युक्त्यनुभवविरोधात्।

तथा हि। संहन्तुश्चेतनस्य स्थिरस्याभावात्। स्कन्धानामणूनां च समुदायानुपपत्तेः। न च—बुद्धावस्तीति वाच्यम्। क्षणिकस्य तस्येष्टसाधनत्वाभावेन सृष्टौ प्रवृत्त्यनुपपत्तेः। निरवयवानां परमाणूनां समूहानुपपत्तेश्च। तदुक्तम्।

> स्थिर[1]चेतनराहित्यात्स्वयं चाचेतनत्वतः।
> न स्कन्धानामणूनां च समुदायो ऽत्र युज्यते॥

इति। किञ्च। ईश्वरो ऽपि स्वासम्बद्धे जगति प्रत्यासत्तिं विना कारणं न स्यात्। प्रत्यासत्तिश्च निरवयवे न सम्भवतीति।

ननु अस्मद्राद्धान्तानुसारेण समुदायद्वयस्य युक्तत्वमेव चेतनं विनापि।

यथा हि। प्रतीत्यसमुत्पादो द्वाभ्यां कारणाभ्यां भवति। हेतूपनिबन्धात् प्रत्ययोपनिबन्धतश्च। स पुनर्द्विविधः। बाह्य आध्यात्मिकश्चेति। प्रतीत्य प्राप्य समुत्पद्यत इति प्रतीत्यसमुत्पादः। एकैकस्य हेतोः कार्यजनकत्वसम्बन्धो हेतूपनिबन्धः। इतरेतरं प्रत्ययन्ते मिलन्ति कार्यं जनयितुमिति प्रत्ययाः कारणसमुदायाः। तेषां कार्यजनकत्वसम्बन्धः प्रत्ययोपनिबन्धः। तत्र बाह्यस्य भू-नदी-समुद्रादिरूपस्य प्रतीत्यसमुदायस्य हेतूपनिबन्ध उच्यते। यदिदं बीजादङ्कुरो ऽङ्कुरात्पत्त्रम् पत्त्रात्काण्डम् काण्डान्नालम् नालाद्गर्भो गर्भात् शूकः शूकात् पुष्पम् पुष्पात्फलम् इति। तत्र असति बीजे

---

१ 'चेतनाराहित्यत्वेन' इति क. पुस्तके पाठः।

अङ्कुरो न भवति। यावदसति पुष्पे फलम् इति। तत्र बीजस्य नैवं भवति ज्ञानं,—अहमङ्कुरं निर्वर्तयिष्यामीति। एवमङ्कुरस्यापि नैवं भवति ज्ञानं,—अहं बीजेन निर्वर्तित इति। एवं यावत्पुष्पस्य नैवं भवति,—अहं फलं निर्वर्तयामीति। एवं फलस्यापि नैवं भवति,—अहं पुष्पेणाभिनिर्वर्तितमिति। तस्मादसति चैतन्ये बीजानां असत्यपि चान्यतरस्मिन्नधिष्ठातरि कार्य-कारणभावो दृश्यते। एवं हेतूपनिबन्धं प्रतिपाद्य तस्यैव बाह्यस्य प्रत्ययोपनिबन्धः प्रतिपाद्यते।

तथा हि। षण्णां धातूनां समवायात् बीजहेतुरङ्कुरो जायते। तत्र पृथिवी-धातुः बीजस्य सङ्ग्रहकृत्यं करोति। यतो ऽङ्कुरः कठिनो भवति। एवं अप्-धातुः बीजं स्नेहयति। तेजो-धातुर्बीजं परिपाचयति। वायु-धातुर्बीजं निर्हरति। यतो ऽङ्कुरो बीजान्निर्गच्छति। आकाश-धातुर्बीजस्यानावरणकृत्यं करोति। एवं ऋतुरपि बीजस्य परिणामं करोति। तदेतेषामविकलानां धातूनां समवाये बीजे रोहति अङ्कुरो जायते। नान्यथा। तत्र पृथिवीधातोर्नैवं भवति,—अहं बीजस्य संग्रहकृत्यं करोमीति। यावदृतोर्नैवं भवति,—अहं बीजस्य परिणामं करोमीति। एवं अङ्कुरस्यापि नैवं भवति,—अहमेभिर्निर्वर्तित इति।

अथ आभ्यन्तरस्य आध्यात्मिकस्य प्रतीत्यसमुत्पादस्य* हेतूपनिबन्ध उच्यते। तत्र अविद्या, संस्कारो, विज्ञानं, नाम, रूपं, षडायतनं, स्पर्शो, वेदनाः, तृष्णा, उपादानं, भवजातिः, जरा-मरणं, शोकः, परिदेवना, दुःखं, दुर्मनस्ता। अत्र अविद्याद्यारभ्य यावद्दुर्मनस्ता अविद्याचेन्नाभविष्यत् नैवं संस्कारा अजनिष्यन्। एवं

* 'प्रतीत्यसमुत्पादस्य' कार्यरूपस्येत्यर्थः।

यावज्जातिश्चेन्नाभविष्यत् नैव जरामरणादय उदपत्स्यन्त। तत्र अविद्याया नैवं भवत्यहं संस्कारानभिनिर्वर्तयामीति। संस्काराणामपि नैवं भवति वयं अविद्यया निर्वर्त्तिता इति। एवं यावज्जात्या अपि नैवं भवत्यहं जरा-मरणादीन्निर्वर्त्तयामीति। जरा-मरणादीनामपि नैवं भवति वयं जात्यादिभिर्निर्वर्त्तितानीति। अथ च सत्सु अविद्यादिषु स्वयमचेतनेषु चेतनान्तरानधिष्ठितेष्वपि संस्कारादीनामुत्पत्तिः। बीजादिष्विव सत्स्वचेतनेषु चेतनान्तरानधिष्ठितेष्वङ्कुरादीनां, इदंप्रतीत्यप्राप्य इदमुत्पद्यते इत्येतावन्मात्रस्य दृष्टत्वात्। चेतनाधिष्ठानस्याऽनुपलब्धत्वात्। एवं हेतूपनिबन्धं प्रदर्श्य प्रत्ययोपनिबन्धः प्रतिपाद्यते।

तथा हि। पृथिव्यप्तेजो-वाय्वाकाश-विज्ञानधातूनां समवायाद्भवति कायः। तत्र पृथिवी धातुः कायस्य काठिन्यं निर्वर्तयति। अब्-धातुः कायं स्नेहयति। तेजो-धातुः कायस्य अशित-पीते परिपाचयति। वायु-धातुः कायस्य श्वासादि करोति। आकाश-धातुः कायस्यान्तः सुषि*रभावं करोति। यस्तु नामरूपाङ्कुरमभिनिर्वर्तयति शब्दादिज्ञानपञ्चकसंयुक्तं मनो विज्ञानं च सो ऽयमुच्यते विज्ञान-धातुः। यदा हि आध्यात्मिकाः पृथिव्यादिधातवो भवन्त्यविकलाः तदा सर्वेषां समवायाद्भवति कायस्योत्पत्तिः। तत्र पृथिव्यादिधातूनां नैवं भवति वयं कायस्य काठिन्यादि निर्वर्तयामः इत्यादि पूर्ववत् बोद्धव्यम्। एव मङ्कुरवत् कायस्योत्पत्तिः। सो ऽयं प्रतीत्यसमुत्पादो तर्कसहस्रेणापि

* "सुषिरं विवरं बिलं" इति नामलिङ्गानुशासनात् 'सुषिरभावं' विवरभावमवकाशं करोतीत्यर्थः।

नान्यथा कर्तुं शक्यः । तत्र एतेष्वेव षट्सु धातुषु क्षणिकेषु कार्येषु दुःखस्वभावेषु स्थायिनित्यसुखबुद्धिरूपया विद्यया पिण्डसंज्ञा सत्वसंज्ञा पुद्ग*लसंज्ञा मनुष्यसंज्ञा मातृ-दुहितृसंज्ञा अहङ्कारममकारसंज्ञा भवन्ति । सेयमविद्यानर्थसम्भारस्य मूलकारणम् । तस्यामविद्यायां सत्यां संस्कारा राग-द्वेष-मोहा विषयेषु प्रवर्तन्ते । तेभ्यो गर्भस्थस्य आद्यं विज्ञानं उत्पद्यते । तस्माच्चालयविज्ञानात् पृथिव्यादिचतुष्टयमुपादानकारणं नाम आश्रयत्वान्नाम निष्पद्यते । तच्च कारणत्वेन स्वीकृतसितासितादिरूपवच्छरीरस्य कलल-बुद्बुदाद्यवस्था । तस्मान्नाम-रूप-शब्दाभ्यां कलल-बुद्बुदाद्याकारेणाभिव्यक्तिर्गृह्यते । तदाभिव्यक्तिक्रमेण नाम-रूपसम्मिश्रितानीन्द्रियाणि षडायतनाख्यान्युत्पद्यन्ते । पृथिव्यादिषट्धातवो आयतनानि यस्य करणजातस्य तत्तथा । इन्द्रियाणि तु श्रोत्रादीनि पञ्चैव गोलकस्थानमात्राणि अप्राप्यकारीणि च । न वैशेषिकाणामिव 'गोलकव्यतिरिक्तानि द्रव्याणि प्राप्यकारीणि च' इति । तान्यधियतिप्रत्यय इत्युच्यन्ते । नाम-रूपेन्द्रियाणां त्रयाणां मिथः सन्निपातः स्पर्शः । निर्वृत्तशरीरगतेन्द्रियाणां तद्गतविषयसंसर्गजन्यं विज्ञानमिति यावत् । ततः सुखादिकावेदना । तस्यां सत्यां 'कर्तव्यं सुखं मया' इत्यध्यवसानं तृष्णा । ततो वाक्कायचेष्टा उपादानम् । ततो भवत्यस्माज्जन्मेति भवो धर्मादिः । तद्धेतुको देहोदयो जातिः । जातस्य देहस्य परिपाको जरा । देह-

---

* पूर्यन्ते गलन्तीति च पुद्गलाः इति । अथ वा पूरणात् पुत् गलतीति गलः पुद्गलः "पूरणात् गलनात् देहे पुद्गलाः परमाणव" इति श्रीधरस्वामीधृतवाक्यात् पुद्गलशब्देन परमाणवो गृह्यन्ते ।

नाशो मरणम्। म्रियमाणस्य साभिष्वङ्गस्य पुत्रादौ अन्तर्दाहः शोकः। तदुत्थं 'हा पुत्र' इत्यादिप्रलपनं परिदेवना। शब्दादि-ज्ञानपञ्चकसंयुक्तमसाध्वनुभवनं दुःखम्। मानसं दुःखं दौर्मनस्यम्। मद-मानादय उपक्लेशाः। अमी जन्मादिहेतुका अविद्यादयो ऽविद्याहेतुकाश्च जन्मादयो घटीयन्त्रवदनिशमावर्तमानाः सन्तीति।

तदेतैरविद्यादिभिराचिप्तः सङ्घात इति। सन्मात्रं चणिकं कार्यं दुःखं शून्यमितिभावनया पूर्वोक्तप्रकारेण मोचः सिद्ध्यतीति किमनुपपन्नं विना चेतनेन?—इति चेत्। उन्मत्तप्रलाप एवैतत्।

तथा हि। कार्यं प्रत्यायते गच्छतीति प्रत्ययः हेतुः। अविद्या-दिहेतुका[1] जन्मादयः इति यदुक्तं तन्न। यतः इतरेतरप्रत्ययत्वे ऽप्यविद्यादीनां पूर्वं पूर्वमुत्तरस्योत्तरस्योत्पत्तिमात्रं भवेत्। न तु सङ्घा-तोत्पत्तेः किञ्चिन्निमित्तं सम्भवति। अयमभिप्रायः। यत् खलु हेतुपनि-बद्धं कार्यं तदन्यानपेचम्। हेतुमात्राधीनोत्पादत्वात् उत्पद्यतां नाम। पञ्चस्कन्धसमुदायस्तु प्रत्ययोपनिबद्धो न हेतुमात्राधीनोत्पत्तिकः। अपि तु नानाहेतुसमवधानजन्मा। न च चेतनमन्तरेण अन्यः सन्नि-धापयिता अस्ति कारणानाम् इति। नन्वनपेचा एवान्यचणप्राप्ताः चित्यादयो ऽङ्कुरमारभन्ते। तेषां तूपसर्पणप्रत्ययवमशात् परस्परं समवधानं भवति। नच—एकस्मादेव कारणात् कार्यसिद्धेः किमन्यैः कारणैरिति वाच्यम्। कारणचक्रानन्तरं कार्योत्पत्तेरनुभवसिद्ध-त्वात्। न च—कोऽपि तत्करणसमर्थ इत्यन्ये उदासते—इति युक्तम्। महिम्ना सर्वे कार्यमुत्पादयन्तो ऽपि नानाकार्याणामीशते। तत्रैव

[1] 'अविद्यादयो जन्मादीनां हेतवः' इति क. पुस्तके।

तेषां सामर्थ्यात् । न च—कारणभेदात्कार्यभेद आवश्यक इति वाच्यम् । सामग्र्या एकत्वात्—इति चेत् । न । यदि अन्त्यक्षणप्राप्ता ऽन्यानपेक्षाः स्वकार्योपजनने समर्थाः तर्ह्यनेनैव क्रमेण ततः पूर्वे ततः पूर्वे ऽपि सर्वे एवानपेक्षाः तत्तत्स्वकार्योपजनने समर्था भवन्तु । तथा च कुशूलस्थत्वाविशेषे ऽपि येन बीजक्षणेन कुशूलस्थेन स्वकार्यक्षणपरम्परया अङ्कुरोत्पत्तिसमर्थो बीजक्षणो जनयितव्यः सोऽप्यनपेक्ष एव बीजक्षणः स्वकार्योपजनने समर्थो भवतु । एवं च सर्वे ऽपि तदनन्तरान्तर्वर्त्तिनो बीजक्षणाऽनपेक्षा इति कुशूलनिहितबीजेभ्य एव स्यात् कृती कृषीवलः । कृतमस्य दुःखबहुलेन कृषिकर्मणा । तस्मात्परस्परं सापेक्षा एव अन्त्या वा मध्यमा वा आद्या वा क्षणाः कार्योपजनने समर्था इति वक्तव्यम् । तच्चेदं समवधानं कारणानां विन्यासभेद-तत्प्रयोजनाभिज्ञप्रेक्षावत्पूर्वकमेव दृष्टम् इति नाचेतनाद्भवितु मर्हति । अथ—अविद्यादिभिर्यादाक्षिप्यते सङ्घात—इति चेत् । न । आक्षेपाऽसम्भवात् ।

तथा हि । किमाक्षेपः उत्पादनं वा ज्ञापनं वा ? नाद्यः । कारणेन कार्यस्य अनुपपद्यमानस्य अजननात् । तस्मात् ज्ञापकं द्वितीयं वक्तव्यम् । तथा च ज्ञापितस्यान्यदुत्पादकं वक्तव्यम् । तच्च स्थिरपक्षे ऽपि सत्यपि भोक्तरि अधिष्ठातारं चेतनमन्तरेण न सम्भवतीति किमङ्ग पुनः क्षणिकेषु भावेष्विति । अपि च बहवः उपकार्योपकारकभावेन स्थिताः कार्यं जनयन्ति । स च क्षणिकपक्षे* न सम्भवति । क्षणिकभावस्य उपकारानास्पदत्वात् । क्षणस्याभेदत्वा-

---

* उपकार्योपकारकभावपक्षे इत्यर्थः ।

दनुपकृतो ऽपकृतत्वासम्भवात्। कालभेदेन वा तदुपपत्तौ क्षणिकत्वस्यैव व्याघातात्।

ननु—यदा प्रत्ययोपनिबन्धनः* प्रतीत्यसमुत्पादो भवेत् तदा चेतनो ऽधिष्ठाता ऽपेक्षेत। अत्र तु हेतूपनिबन्धनः†। तस्य च न हेत्वन्तरापेक्षा न वा चेतनापेक्षा। किन्तु हेतुः स्वभावत एव कार्यं सङ्घातं उत्पादयिष्यतीति किं अनुपपन्नम्?—इति चेत्। न। अस्तु तावत् केवलात् हेतोः कार्यं नोपजायत इति दूषणम्। वक्ष्यमाणत्वात्। सङ्घातादविद्यादयः अविद्यादिभ्यश्च सङ्घातः इत्यन्योन्याश्रयात्।

ननु—अस्थिरा अपि भावाः सदा संहता एव अनादिसंसारे उदयन्ते। न पुनरितस्ततो ऽवस्थिताः केनचित् पुञ्जीक्रियन्ते। तदाश्रयाश्चाविद्यादयः। ततश्च संहन्तृचेतनाभावात्प्रत्ययोपनिबन्धनः प्रतीत्यसमुत्पाद एव युज्यते—इति चेत्। न। स खलु सङ्घातसन्ततिवर्तिधर्मात्मकः संस्कारसन्तानो यथायथं सुखदुःखे जनयन् आगन्तुकं कञ्चन सहायमनासाद्य स्वभावत एव जनयेत्? आसाद्य वा? आद्ये सदैव सुख-दुःखे जनयेत्। समर्थस्य क्षेपाऽयोगात्। द्वितीये तु साधनकारणं प्रेक्षावानभ्युपेयः। तथा च न प्रतीत्यसमुत्पादः। किञ्च। स किं सदृशजननस्वभावः उत विसदृशजननस्वभावः? नाद्यः। मनुष्यपुद्गलस्य‡ देव-तिर्यग्योनिनरकप्राप्त्य-

---

* प्रत्ययोपनिबन्धनं नाम कारणसमुदायेन कार्यस्योत्पादनम्।

† हेतूपनिबन्धनं नाम पूर्वपूर्वकारणेन कार्यजनकत्वम्।

‡ अत्र पूर्यन्ते गलन्तीति पुद्गला इति व्याख्येयम्।

भावप्रसङ्गात्। न द्वितीयः। मनुष्यपुद्गलः कदाचित् क्षणेन हस्ती भूत्वा देवो वा मनुष्यो वा भवेत्। न च—अदृष्टसहकृतेन कारणकलापेन सङ्घातसिद्धिः—इति वाच्यम्। तव मते ऽदृष्टस्याप्यनुपपत्तेः।

तथा हि। अप्राप्तभोगः पुरुषो हि भोगार्थी भोगं प्राप्तुकामः तत्साधने प्रवर्तते इति प्रत्यात्मनि प्रसिद्धम्। सेयं प्रवृत्तिर्भोगादन्यस्मिन् स्थिरे भोक्तरि भोग-तत्साधनसमव्यापिनि कल्प्यते नास्थिरे। न च भोगादनन्यस्मिन् सम्भवति। न हि भोगो भोगाय कल्प्यते। अनुभवविरोधात्। नाप्यन्यो भोगो ऽप्यन्यस्य। एवं मोक्षे ऽपि विकल्पनीयम्।

तत्र बुभुक्षु-मुमुक्षू चेत् स्थिरावाश्रीयेतां तदा स्वमतहानं दोषः। अस्थैर्ये च अप्रवृत्तिप्रसङ्गः। तस्मात्स्थिरभोक्त्रभावात् प्रवृत्त्यनुपपत्तिः। प्रवृत्त्यनुपपत्त्या कर्त्रभावः। कर्त्रभावाददृष्टा ऽसिद्धा सङ्घातासिद्धिः। किञ्च अविद्ययापि सङ्घातो न सम्भवति। न हि शुक्तिकादिषु रजतादिबुद्धिरूपया अविद्यया रजतादिकार्यं शुक्त्यादिवस्तुनः क्रियते। किञ्च अविद्यादीनां मिथो हेतुत्वासम्भवेन हेतूपनिबन्धनप्रतीत्यसमुत्पादस्याप्यसिद्धिः। उत्तरस्योत्पत्त्यवसरे पूर्वस्य कारणस्य विनाशात्। क्षणिकवादे धूमादिसाधनत्वं ज्ञात्वा वह्न्यादेः सर्वजनीनानुभवविरोधः कार्यार्थिं नानाकारणघटनानुपपत्तिश्च।

अयमभिप्रायः। न तावद्वैशेषिकवत् निरोधकारणसान्निध्यं निरुध्यमानताङ्गीक्रियते वैनाशिकैः अकारणं विनाशमभ्युपगच्छद्भिः। तस्यानिष्टत्वात्। तस्मादचिरनिरुद्धत्वं निरुध्यमानत्वं वक्तव्यम्। निरुद्धत्वं च चिरनिरुद्धत्वं विवक्षितम्। तथा च निरुध्यमानस्य निरुद्धस्य वा पूर्वक्षणस्याभावग्रस्तत्वादुत्तरक्षणहेतुत्वानुपपत्तिः।

ननु—कारणस्य कार्योत्पादात्प्राक् कालसत्ता अर्थवती । न कार्यकाले । तदा तस्य सिद्धत्वेन तत्सिद्ध्यर्थायाः सत्तायाः अनुपयोगात् । तस्माद्भावभूतः परिनिष्पन्नावस्थः पूर्वक्षणः उत्तरक्षणहेतुः—इति चेत् । न । भूत्वा व्याप्टत्य(वा) भावाः प्रायेण कार्यं कुर्वन्तो दृश्यन्ते । तच्च स्थिरत्वं विनाऽनुपपन्नम् । इतरथा तु लोकविरोधः स्यात् । ननु—भाव एवास्य व्यापारः । यथाहुर्बौद्धाः ।

भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ।

—इति चेत् । भवत्वेवं व्यापारवत्ता तथापि न क्षणिकस्य कारणत्वम् । मृत्सुवर्णकारणका हि घटादयो रुचकादयश्च मृत्सुवर्णात्मानो ऽनुभूयन्ते । यदि च न कार्यसमये कारणं सत् कथं तेषां तदात्मनानुभवः ? न च—कारणसादृश्यं कार्यस्य, न तु तादात्म्यं—इति वाच्यम् । असति कस्यचित् रूपस्यानुगमे सादृश्यस्याप्यनुपपत्तेः। अनुगमे वा तदेव कारणं तथा च तस्य कार्यतादात्म्यं इति सिद्धमक्षणिकत्वम् ।

सर्वथा वैलक्षण्ये तु हेतु-फलाभावः तन्तु-पटादावपि प्रसज्येत । न च कार्यकारणभावो नियामकः । तस्य एकस्मिन् क्षणे ऽशक्यग्रहत्वात् । सामान्यस्य चाकारणत्वात् । कारणत्वे वा क्षणिकत्वहानेरस्मत्पक्षसिद्धिश्च । अपि च । उत्पाद-निरोधौ वस्तुनः स्वरूपमेव वा ? वस्तुनो धर्मौ वा ? वस्त्वन्तरमेव वा ? नाद्यः। वस्तूत्पाद-निरोधशब्दानां पर्यायत्वापातेन वस्तुनो ऽनित्यत्वप्रसङ्गात् । न द्वितीयः । आद्यक्षणावस्था वस्तूत्पादः, मध्यक्षणावस्था-वस्तुभावः, अन्त्यक्षणावस्था वस्तुनिरोधः—इति वस्तुनः आद्यन्त्य-मध्य-

क्षणत्रयसम्बन्धित्वात् क्षणिकत्वहानिः। न तृतीयः। वस्तूत्पाद-निरोधाभ्यामसंस्पृष्टमिति वस्तुनः शाश्वतत्वप्रसङ्गात्। संसर्गे ऽप्यसता संसर्गानुपपत्तेः। द्रष्टरि च क्षणिकत्वेन दर्शनादर्शनयोस्तु द्रष्टृधर्मत्वात् उत्पाद-निरोधस्यैवासिद्धेः। स्थिरत्वाभ्युपगमे च शाश्वतत्वप्रसङ्गतादवस्थ्यात्। न च—कारणस्य पूर्वक्षणमात्रसत्वेनैव कार्यहेतुत्वं—इति वाच्यम्। अनन्तानां कार्याणां तदापत्तेः। इतरकारणसत्वे ऽपि यदसत्वे यत्कार्यानुत्पादः तदपि क्षणिकपक्षे वक्तुमशक्यत्वात्। किञ्च न केवलं पूर्वक्षणस्य निरोधग्रस्तत्वादुत्तरक्षणहेतुत्वं न सम्भवतीति दूषणम्। अपि तु—असति कार्यहेतौ कार्यमुत्पद्यते सत्येव* वा? नाद्यः। आलम्बन†प्रत्ययः समनन्तरप्रत्ययो ऽधिपतिप्रत्ययो आलोकश्चेति चतुर्विधा हेतवः, तान् प्रतीत्य प्राप्य चित्तं चैत्ताश्च तदभिन्नाः सुखादयो जायन्ते। तत्र नीलाभासस्य चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता। समनन्तरप्रत्ययात्पूर्वविज्ञानाद्बोधरूपता। चक्षुषो ऽधिपतिप्रत्ययाद्रूपग्रहणप्रतिनियमः। आलोकात्सहकारिप्रत्ययाद्धेतोः स्पष्टार्थता। सुखादीनामपि चैत्तानां चित्ताभिन्नानामेतान्येव चत्वारि कारणानि—इति अस्याः प्रतिज्ञायाः भङ्गप्रसङ्गात्। 'प्रतीत्य उत्पद्यते' इत्यत्र आनन्तर्यस्याविवक्षितत्वे ऽपि हेतु-कार्ययोः सम्बन्धमात्रस्य आवश्यकत्वात्। सम्बन्धस्य चतुर्णामेकस्मिन् क्षणे न

---

* नित्येव वेत्यर्थः।

† आलम्बनं नील-पीतादिविषयः, समनन्तरप्रत्ययो मनः, गोलकस्थानापन्नानीन्द्रियाणि श्रोत्रादीनि पञ्च अधिपतिप्रत्ययान्युच्यन्ते इत्यूहनीयं सुधीभिः।

सम्भवति। भिन्नकालिकयोश्च[1] सम्बन्धस्वीकारे क्षणिकत्वभङ्गप्रसङ्गात्। निर्हेतुकायां चोत्पत्तौ अप्रतिबन्धात्सर्वं सर्वत्र चोत्पद्येत।

न द्वितीयः। कार्यक्षणे कारणसत्त्वे कार्य-कारणयोर्यौगपद्यप्रसङ्गात्। नचेष्टापत्तिः। संस्क्रियन्ते उत्पाद्यन्त इति संस्काराः आद्यन्तवन्तो भावाः—इति न्यायेन 'क्षणिकाः संस्काराः' इति प्रतिज्ञाविरोधात्। अथवा पूर्वपूर्वघटक्षणस्योत्तरोत्तरघटक्षणपर्यन्तं स्थित्यभ्युपगमे युगपद्घटद्वयोपलब्धिप्रसङ्गात्। किञ्च अन्यदपि यत्क्षणिकवादिनो मन्यन्ते "भावप्रतीपा सङ्ख्या बुद्धिः प्रतिसङ्ख्या, सन्तमिममसन्तं करोमि—इत्यवंरूपा तया निरोधः। प्रतिसङ्ख्यानिरोधो नाम बुद्धिपूर्वको मुद्गरप्रहारादिना क्रियमाणो भावानां नाश इति यावत्। स्तम्भादीनां च प्रतिक्षणं स्वारसिको विनाशश्च प्रतिसङ्ख्यानिरोधो नाम आवरणाभावमात्रं चाकाशम्। 'मात्र'-पदं आवरणाभावव्यङ्ग्य*शब्दद्रव्यं व्यवच्छेत्तुम्। एतत्त्रयं वस्त्वभावमात्रं शून्यं निरूपाख्यमुच्यते। तस्मात्त्रयादन्यद्वस्तुमात्रं क्षणिकम्" इति तदप्यसङ्गतमेव। तथा हि।

प्रतिसङ्ख्या-प्रतिसङ्ख्यानिरोधौ† किं सन्तानस्य वा स्यातां सन्तानिनां वा? नाद्यः। हेतु-फलाभावेन तद्भावेन‡ वा बुद्धिव्यवस्थितानां

---

१ 'भिन्नकालिकस्य सम्बन्धस्य' इति ख. ग. पुस्तकयोः।

---

* आवरणाभावस्याकाशस्य व्यङ्ग्यं प्रतिपादकं शब्दद्रव्यमित्यर्थः।

† अत्र मीमांसकाभिप्रायेणेदमुक्तमित्यवधेयं विपश्चिद्भिः।

‡ हेतुश्च फलं च हेतुफले तयोः अभावः 'हेतुफलाभावः' कारण-कार्याभाव इत्यर्थः।

उदयाप्ययधर्माणां सन्तानिनामेव सन्तानत्वात्। सन्तान्यतिरिक्त-स्थिरसन्तानाभ्युपगमे सर्वं क्षणिकमिति प्रतिज्ञाविरोधात्। द्वितीये तु। यो ऽसावन्त्यः सन्तानी यन्निरोधात्सन्तानोच्छेदेन* भवितव्यं स किं फलं† किञ्चिदारभते न वा? नान्त्यः अर्थक्रियाकारितायाः सत्तायाः अभावेन असत्वप्रसङ्गात्। तदसत्वे तज्जनकमपि अजनकत्वेन असत्—इत्यनेन क्रमेण—असन्तः सर्व एव सन्तानिनः इति तत्सन्तानो नितरामसन्—इति निरोद्धासम्भवात्। न प्रथमः। अन्त्यत्वासम्भवेन सन्तानाऽनुच्छेदप्रसङ्गात्। पदार्थमात्रस्य द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाच्च। प्रतिसङ्ख्या-प्रतिसङ्ख्यानिरोधासिद्धिः। किञ्च भावानां निरन्वयो नाशो निरूपाख्यस्य न सम्भवति। तेनैवान्वयित्वेन‡ रूपेण भावस्य नष्टस्याप्युपाख्येयत्वात्। यत् यस्य अन्वयि रूपं, तत्तस्य परमार्थसद्भावः। अवस्थास्तु विशेषाख्या उपजननापायधर्माणः। तासां सर्वासामनिर्वचनीयतया स्वतो न परमार्थसत्वम्। अन्वय्येव तु तासां सत्वम्। तस्य च सर्वत्र प्रत्यभिज्ञायमानत्वान्न विनाशः—इत्यवस्थावतो ऽविनाशान्नावस्थानां निरन्वयो विनाश—इति तासां सत्वस्य अन्वयिनः सर्वत्र अविच्छेदात्। न च—प्रत्यभिज्ञायाः ज्वाला-

---

* यस्य सन्तानिनः निरोधात् नाशात् सन्तानस्य उच्छेदेन भवितव्यमिति योजनीयम्।

† 'फलं' कार्यमित्यर्थः। यो ऽन्त्यः सन्तानी यस्य नाशेन सन्ताननाशो भवेत् स किमपि कार्यं जनयति न वेति विकल्प्यते।

‡ 'तेनैव' नाशप्रतियोगिनैव अन्वयित्वेनेत्यर्थः।

मालादाविव सादृश्यं विषयः—इति वाच्यम्। पूर्वापरव्यक्तिस्थिरधर्मं विना सादृश्यस्यैव दुर्वचत्वात्। नचैक सन्तानारूढत्वात्तथा सन्तान्यतिरिक्तस्य सन्तानस्य दुर्वचत्वात्। ननु—मृत्पिण्ड-मृद्घट-मृत्कपालादिषु सर्वत्र मृत्त्वप्रत्यभिज्ञानाद्भवत्वेवम्। तप्तोपलतलपतितनष्टस्योदबिन्दोः किमस्ति रूपमन्वयि प्रत्यभिज्ञायमानं? बीजाङ्कुरादीनां वा किमस्ति उत्तरोत्तरकार्ये प्रत्यभिज्ञानं येन निरन्वयो नाशो न स्यात्—इति चेत् न।

अस्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु क्वचिद्दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानात्। तत्र तप्तोपलस्थतोयं तेजसा मार्तण्डमण्डलमम्बुलाय नीयते इत्यनुमेयम्। अङ्कुरादयस्तु तार्किकं प्रति वक्ष्यमाणाऽभिन्ननिमित्तोपादानन्यायेन बीजस्यैवाऽनिर्वाच्याऽवस्था—इति तं प्रत्येव प्रथममुद्गरे प्रतिपादितत्वाच्च। तस्मात्क्षणिकवादिनां प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधावसङ्गतावेव। न केवलं निरोद्धाभावादेवासङ्गतौ। किन्त्वविद्यादीनां निरोधासम्भवादपि।

तथा हि। यम-नियमादिसामग्रीसहितसम्यग्धीसाद्ध्येदविद्यादिनिरोधः प्रतिसङ्ख्याख्यः तदा निर्हेतुकविनाशाभ्युपगमहानिप्रसङ्गः। निर्हेतुकविनाशस्तु विनाश्यस्यार्थाभावात्* तद्धेतोरर्थक्रियाकारित्वाभावेन असत्वात्। अत एव सत्ताशून्यत्वेन निर्हेतुना मुद्गरप्रहारादिना जायमानस्य घटादिध्वंसस्य प्रतिसङ्ख्यानिरोध

* अर्थोऽर्थस्वरूपम्। 'विनाश्यस्यार्थाभावात्' विनाश्यस्य वस्तुनः स्वरूपाभावात् इति व्याख्येयम्।

इति संज्ञा। तथा च असता कार्यानुत्पत्तिना सतो दृष्टत्वादिति वक्ष्यति। घटादीनामिव स्वारसिकः स्वयमेव चेदविद्यानिरोधः अप्रतिसङ्ख्याकः तदा—'सर्वं दुःखं' 'क्षणिकं' 'शून्यं'—इति भावनोपदेशवैय्यर्थ्यमित्युभयथापि दोषादसमञ्जस एव स्वीकारः। एव माकाशस्यापि श्रुतिसिद्धभावत्वादेव तत्सिद्धिः। श्रुतिश्च।

एतस्मादात्मन आकाशः सम्भूतः।

इत्यादिवेदप्रामाण्ये विप्रतिपन्नानपि बौद्धादीन्प्रति शब्दगुणानुमेयत्वमाकाशस्य न वक्तव्यम्।

तथा हि। जातिमत्वेन सामान्य-विशेष-समवायेभ्यो विभक्तशब्दस्या ऽस्पर्शवत्वे सति बाह्यैकेन्द्रियग्राह्यत्वेन गन्धादिवद्गुणत्वमनुमितम्। न चायमात्मा गुणो, बाह्येन्द्रियगोचरत्वात्। अत एव न मनो गुणः, तद्गुणानामप्रत्यक्षत्वात्। नापि पृथिव्यादि, गुण-तद्गुणगन्धादिसाहचर्यानुपलब्धेः। तस्माद्गुणो भूत्वा गन्धादिवदसाधारणेन्द्रिय ग्राह्यो यद्द्रव्यमनुमापयति तदाकाशं पञ्चमं भूतं वस्तु इति। किञ्च, आवरणाभावमिच्छतां एकस्मिन्सुपर्णे पतत्यावरणस्य विद्यमानत्वात् सुपर्णान्तरस्य उत्पित्सतो ऽनवकाशप्रसङ्गः। यथा एकघटसत्वे ऽपि घटान्तरासत्वप्रयुक्त्या 'निर्घटं भूतलं' इत्यशक्यं वक्तुम्। तथा एकस्मिन्नावरणे सति आवरणान्तराभावप्रयुक्त्यापि पक्ष्यन्तरसञ्चारो न स्यात्। ननु—देशान्तरावच्छेदेन यत्रावरणाभावः तत्र पतिष्यति—इति चेत् न। निषेध्य-निषेधाधिकरणनिरूपणाधीननिरूपणो हि निषेधो न असत्यधिकरणनिरूपणे शक्यो निरूपयितुम्। तत्रावरणाभावाधिकरणमाकाशं वस्तु इति। अथवा—इह पक्षी—इति चाक्षुषप्र-

तीत्या आकाशस्यैवाधिकरणतया प्रतीतिः। तदन्यस्य तद्विषयत्वाऽयोगात्। न च—आलोकः तत्र विषयः—इति वाच्यम्। इह आलोकः—इति प्रतीत्या अधिकरणतया क्लृप्ताकाशस्य विषयत्वे बाधकाभावात्। न च—तत्रापि तदवयवो विषयः—इति वाच्यम्। अन्धकारस्थत्र्यणुकप्रत्यक्षे आलोकान्तरस्याभावेन आकाशस्यैव विषयत्वात्। तस्मादौन्मत्तप्रलपनमेवैतत् क्षणिकवादिनां इति।

किञ्च आत्मनो ऽपि क्षणिकत्वाभावो वक्तव्यः। अन्यथा दिनान्तरानुभूतस्य स्मरणानुपपत्तेः। ननु-अस्मन्मते क्रियातिरिक्तकर्त्रभावात् उपलब्धि-स्मृती एव उपलब्ध-स्मर्तारौ तयोरभेदे ऽप्येकसन्ततिगतत्वेन कार्य-कारणभावात्स्मृतिरुपपत्स्यते—इति चेत्। न। अहं स्मरामि-अन्य अद्राक्षीत्—इति प्रत्ययप्रसङ्गात्। यो ऽहमदो ऽद्राक्षं सो ऽहं स्मरामि—इति दर्शन-स्मरणयोः एककर्तृकत्वेन प्रत्यक्षविरोधात्। न च—आत्मनि प्रत्यभिज्ञानं ज्वालादाविव सादृश्यकृता भ्रान्तिः—इति वाच्यम्। पूर्वापरक्षणदर्शिन एकस्याभावे सादृश्यानुपपत्तेः। ननु*—'तेनेदं सदृशं' इति विकल्पप्रत्ययः†। विकल्पस्य स्वाकारं बाह्यतयाऽध्यवस्यति‡ न तु तत्वतः पूर्वापरौ क्षणौ। तयोः सादृश्यं वा गृह्णाति।

---

* अत्र 'तेनेदं सदृशं' इत्यादिना ग्रन्थेन सौत्रान्तिक-वैभाषिकाभ्यां बाह्यार्थास्तित्ववादिभ्यां वक्ष्यमाणविज्ञानवादिनः मतमवलम्ब्य समाधातुमारभ्यते तत्र भवता ग्रन्थकृता। तच्चाग्रे व्यक्तीभविष्यतीति दिक्।

† 'विकल्पप्रत्ययः' नाम ज्ञाने कल्पिताकारविशेष इत्यर्थः।

‡ अध्यवसाय आरोपः। विकल्पः स्वस्य आकारं बाह्यतया आरोपयतीत्यभिप्रायः।

तत्कथमेकस्यानेकदर्शिनः स्थिरस्य प्रसङ्गः—इति चेत्। न। तेनेदं सदृशं—इति प्रत्यये तत्तेदन्तावच्छिन्नावर्थौ। तयोः सादृश्यं च किं न भासन्ते भासमानानि वा? नाद्यः। स्वसंवेदनबाधात्। द्वितीये किं ज्ञानस्याकारास्तस्मादभिन्ना भिन्ना* वा? न द्वितीयः। अनभ्युपगमात्†। आद्ये—यस्याकारास्तज्ज्ञानमेकमनेकं वा? न प्रथमः। नानाकारत्वाऽसम्भवात्। ज्ञानातिरिक्ताऽऽकारानभ्युपगमे च आकारनानात्वपदेन ज्ञाननानात्वस्यैव निश्चयात्। न द्वितीयः। नानापदार्थसम्भिन्नवाक्यार्थानवभासप्रसङ्गात्। एकेनैव ज्ञानेन तत्तेदन्तावच्छिन्ननानापदार्थोल्लेखे सत्येव तेनेदं सदृशमिति सादृश्यस्फुरणापेक्षितनानात्वोल्लेखसम्भवात्। परिशेषाज्ज्ञानाद्भिन्नोऽर्थोऽभ्युपेयः तस्य च नानाकालस्य तत्तेदन्तास्पदस्य परामर्शः स्थायिन्यात्मनि सति सम्भवति। न तु क्षणिके। ननु—प्राग्विकल्पितेषु पक्षेषु तत्तेदन्तासादृश्यानि भासन्त एव। भासमानानि च ज्ञानस्याकारमात्रं भवन्ति। ज्ञानं च एकमेव इति पक्षः। तत्राकाराणां आरोपितत्वेन वास्तवज्ञानैकत्वव्याघातो नास्ति—इति चेत् न। कल्पिता अपि ज्ञानेऽर्थाकाराः तस्मात् भिन्ना अभिन्ना वा? न द्वितीयः। युगपदनेकार्थावभासप्रसङ्गः। अनिर्वाच्यत्वानङ्गीकारात्। आद्ये ज्ञानान्तरवदकल्पितत्वम्। तथा च-तेनेदं-इति-सदृशं-इति च भासमानानामर्थानामेकज्ञानाऽभेदोपगमे मिथोऽप्यभेदः स्यात्।

* 'ज्ञानस्य आकाराः ज्ञानस्या आकारा इत्यर्थः। क. पुस्तके तथैव पाठः।

† अत्र 'तवमते' इति शेषः। तवमते अनभ्युपगमात् अस्वीकारादित्यर्थः।

ततश्च अन्योन्यभेदेन पदार्थालोकसिद्धा निह्नूयेरन्*। ज्ञानाच्च ज्ञेयस्य भेदः प्रसिद्धः सो ऽपि निह्नूयेत। तदपह्नवे च स्वपक्षसमाधान-परपक्षाक्षेपाऽसिद्धेः। विकल्पप्रतिभासिनां नित्यत्वादीनां एकार्थनिष्ठत्वाभावात्। एकाधिकरणप्रतिषिद्धधर्मद्वयोपगमरूपविवादासम्भवात्। अनित्यशब्दो यद्यलौकिकार्थः तर्हि तेन विभुत्वमपि वक्तुं शक्यम्। तथा च नित्यत्वेन तस्य न विरोधः। इत्थं च कस्यचिज्ज्ञानस्य नित्यत्वमाकारः कस्यचिदनित्यत्वमिति धर्मिभेदेन व्यवस्थायां विरोधाभावाद्वादिनां न विरोधः। एतेन—तत्तेदन्तादिरर्थो ज्ञानस्यान्तराकार—इति वक्ष्यमाणविज्ञानवादिमतं बाह्यार्थवाददूषणमध्ये ऽपि प्रसङ्गान्निराकृतं वेदितव्यम्।

ननु—अस्ति बाह्यो ऽर्थः। स तु क्षणिकेन[१] निर्विकल्पकेन व्यक्तिरूपेण चकास्ति। स एव च स्वलक्षणमित्युच्यते। अयमेव च सन्पदार्थः। अयं घट—इत्यादिरूपाव्यवहारहेतवः सविकल्पकप्रत्ययास्तु विकल्पाः तद्गतरूपसादृश्याद्याकारेण निर्भासन्ते। तैर्विप्रतिपत्त्यादिव्यवहारसिद्धिः। तथा च विकल्पप्रत्ययो ग्राह्यस्वाकारो द्वेधा। अध्यवसेयो† बाह्यश्च—इति चेत् न। केयमध्यवसेयता बाह्यस्य? यदि ग्राह्यता तदा न द्वैविध्यम्।

१ 'क्षणिकेन' इति क. पुस्तके पाठान्तरम्।

* निह्नवो ऽपलापः। "अपलापस्तु निह्नवः" इत्यमरः।

† अविदितचरपदार्थदर्शनेन—किमेतत् ?—इति धीः अनध्यवसायः तद्भिन्न अध्यवसायः। न च आत्मधर्मत्वेन बुद्धिधर्मत्वेन च नैय्यायिकैः साङ्ख्यैश्चोक्तो ऽध्यवसायो ऽत्र गृह्यते।

तथा हि। आन्तरस्यानभिधेयस्य ज्ञानाकारस्य तद्विपरीतबाह्याकाररूपेण अध्यवसायो नाम बाह्यरूपेण निष्पादनं वा? बाह्याकाररूपेण योजनं वा? बाह्याकारेणारोपणं वा? अन्यस्यान्यत्कर्तुमशक्यत्वात्। न हि सहस्रमपि शिल्पिनो घटं पटयितुमीशते। न द्वितीयः। आन्तरस्य बाह्येन योजनाऽशक्यत्वात्। तथा सति युक्त इति प्रत्ययः स्यात्। न चास्ति सः। तृतीये तु—आन्तरस्यारोपः किं गृह्यमाणे बाह्ये अगृह्यमाणे वा? आद्ये अधिष्ठानस्य बाह्यस्य केन ग्रहणम्?। किं यस्याकार आरोप्यस्तेनैव सविकल्पकप्रत्ययेन? उत तत्समसमयभुवा निर्विकल्पकेन? आद्ये—किं बाह्यमभिमतं स्वं लक्षणं वा सामान्यं वा? न प्रथमः। अभिलाप-संसर्गयोग्यवस्तुगोचरसविकल्पकप्रत्ययाभिलापस्य शब्दस्य सामान्येनैव सह समयः शक्यो गृहीतुम्। न स्वलक्षणेन। तस्य देश-कालाऽननुगतत्वेनाऽऽनन्त्यात्तत्र सङ्गतिग्रहायोगात्। अतः शब्दोल्लेखितसविकल्पकप्रत्ययस्य न स्वलक्षणविषयत्वम्। यथाहुबौंद्धाः।

अशक्यसमयो ह्यात्मा सुखादीनामनन्यभाक्।
तेषामतः स्वसंवित्तिर्नाभिजल्पानुषङ्गिणी* ॥

---

* अस्यार्थस्त्वेवम्। सुखादीनां क्षणिकभावानां आत्मा स्वरूपं अशक्यसमयः। यतो ऽनन्यभाक्। अन्याननुगतो हि सः। अतस्तेषां स्वसंवित्तिरसाधारणाकारविषया वित्तिः। अभिजल्पानुषङ्गिणी न भवति। किं तु निर्विकल्पकैवेति।

इति। नापरः। व्यक्तिमगृहीत्वा सामान्यात्मकबाह्यस्य सविकल्पकबोधेन ग्रहणायोगात्। व्यक्तेश्चोक्तमार्गेणाशक्यग्रहत्वात्। यद्यपि मीमांसकमते शक्यविषयभूताया अपि व्यक्तेः शक्तिविषयसामान्यसमानवित्तिवेद्यतया शब्दोल्लेखि सविकल्पकप्रत्ययत्वमस्ति। तथापि बौद्धैः स्वलक्षणं व्यक्तिरूपं निर्विकल्पमात्रं विषय इत्यङ्गीकृतमित्यशक्यग्रहत्वम्। न द्वितीयः* विकल्पेनागृहीते बाह्ये विकल्पसमसमयेन निर्विकल्पकेन गृहीते विकल्पः स्वाकारमारोपयितुं नार्हति। न हि रजतज्ञानाऽप्रतिभासिनि पुरोवर्त्तिनि वस्तुनि रजतज्ञानेन शक्यं रजतमारोपयितुम्। न द्वितीयः†। स्वाकार इत्येव स्यान्न बाह्यः। अधिष्ठानाग्रहणे आरोप्यमात्रं‡ प्रतीयेत नारोप§ इत्यर्थः। न केवलं अधिष्ठानाप्रतिभासाद्बाह्ये ज्ञानस्वरूपस्यारोपासम्भवः। किन्त्वारोपस्फुरणायोगादपि।

तथा हि। अयं विकल्पप्रत्ययः स्वसंवेदनं सन्तं विकल्पं यदाऽबाह्यं बाह्यत्वेनारोपयति तदा किं—वस्तु सन्तं स्वाकारं गृहीत्वा पश्चादारोपयति ? अथ वा यदा स्वाकारं गृह्णाति तदैवारोपयति ? नाद्यः। क्षणिकतया क्रमविरहिणो ज्ञानस्य क्रमवर्त्तिनो ग्रहणारोपणयोर्ग्रहीतुमशक्यत्वात्। युगपत्स्वाकारग्रहणं बाह्यत्वेन

* तृतीयस्य प्रथमविकल्पद्वितीयेन अगृह्यमाणे बाह्ये इत्यर्थः।

† द्वितीयः 'उत तत्समसमयभुवा' इति पूर्वोक्तो विकल्प इत्यर्थः।

‡ अधिष्ठानस्य अग्रहणे सति 'आरोप्यमात्रं' अन्तरमात्रमेव प्रतीयेत अवभासेन इति भावः।

§ बाह्यस्यैवाप्रतीत्या नान्तरारोपः स्यादित्याशयः।

चारोपणमिति। द्वितीये पक्षे किं स्वाकार-बाह्ययोः ऐक्यस्फुरण-मारोपः? उत अख्यातिमत इव विवेकाग्रहणमात्रम्?। न प्रथमः। स्वप्रकाशत्व-परप्रकाशत्वाभ्यां भेदावभासादैक्यस्फुरणासम्भवात्। नापरः। किं बाह्ये गृह्यमाणे विवेकाग्रहो मृषाव्यवहारं प्रसूते? अगृह्यमाणे वा? नाद्यः। स्वाकारो हि स्वसंवेदनप्रत्यक्षतयाऽतिविशदो बाह्यं चारोप्यमाणमविशदमिति वैशद्याऽवैशद्यरूपतया भेदस्य ग्रहेण विवेकाग्रहासम्भवात्। न द्वितीयः। त्वैलोक्यत एवानेन न भेदो गृहीत—इति यत्र क्वचन प्रवर्तेत। अविशेषात्। स्वप्रतिभासो ऽनर्थो* ऽर्थाध्यवसायेन† प्रवृत्तिः—इति बौद्धैरेवाभ्युपगमात्। एवं यथा परमार्थज्ञानाकारस्य बाह्यवस्त्वात्मना समारोपासम्भवः तथा वासनापरिप्रापितस्य कल्पितज्ञानाकारस्य बाह्ये समारोपासम्भवो ऽपि बोद्धः। तस्यापि स्वप्रकाशज्ञानबलेन बाह्याद्भेदग्रहणस्य समत्वात्। किञ्च क्षणिकभूतचतुष्टयस्य कार्य-कारणभावो ऽपि न सम्भवति। पदार्थमात्रस्य द्वितीयादिक्षणवृत्तित्वाभावात्। न च—यस्य यत्र सामर्थ्यं तस्य तत्साधनविलम्बो नास्ति। विलम्बो ऽस्ति चेत् सामर्थ्यमेव नास्ति। तथा च यावत्स्वकार्येषु सामर्थ्यं यस्य तावता द्वितीयक्षणवर्तिनां प्रथमक्षणस्थितेन तेन सिद्धिः। द्वितीयक्षणस्थितेन न कस्यचित् तृतीयादिक्षणवर्तिनः सिद्धिः। अतो द्वितीयादिक्षणे सत्वं वस्तुनो नास्ति। कार्यकारित्वमेव हि वस्तुसत्ताङ्गीकारात्—इति चेत्। भ्रान्तो ऽसि। क्षणिकत्वेन कार्यकारण-

---

* 'अनर्थो' नाम अबाह्यः।

† 'अर्थाध्यवसायेन' बाह्याध्यवसायेनेति यावत्।

भावग्रहीतुः स्थिरस्य कस्यचित् अभावेन कार्य-कारणभावस्यैव अलीकत्वात् इति पूर्वमेव प्रतिपादितम्। प्रवृत्त्यनुपपत्त्या च सर्व-व्यवस्थोच्छेदप्रसङ्गात्, इत्यलमसम्भाव्यसम्भाषणेनेति दिक्। तस्मा-द्बुद्धमुनिना स्वर्गापवर्गसाधनान्यनुवदता लोकप्रतारणैव कृता यतः, अतोऽसमञ्जसमेव वैभाषिक-*सौत्रान्तिकयोर्मतम्।

## इति बाह्यार्थास्तित्ववादिवैभाषिक-सौत्रान्तिकयो-र्मतखण्डनम्।

अथापरनामविज्ञानवादियोगाचारमतं‡ प्रदर्श्य निराक्रियते।

---

* गुरुणा बुद्धमुनिना उक्तं भावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गी-कृतं कथमिति? पर्य्यनुयोगस्य करणात् केषांचित् योगाचारप्रथा एषा हि इत्यवधेयम्।

† बुद्धमुनिशिष्येषु केषांचित् वैभाषिकेति संज्ञा। एषा हि तेषां नाम-निरुक्तिः। सत्स्वपि बाह्येषु रूपादिषु स्कन्धेषु आन्तरेषु सुखादिषु च तेष्वनास्थामुत्पादयितुं 'सर्वंशून्यं' इति प्राथमिकान् शिष्यानचोकथद्भगवान् बुद्धः। अनन्तरं च विज्ञानमात्रग्रहाविष्टान् द्वितीयांस्तु 'विज्ञानमेवैकं सत्' इमां उपदिष्टवान्। अथान्यान् तृतीयान् उभयमपि सत्यमित्या-स्थितान् 'विज्ञेयमनुमेयं' इति उपदिष्टवान्। सेयं विरुद्धा भाषेति वदन्तो-ऽन्ये विनेयाः वैभाषिका इति प्रथिता बभूवुः।

‡ कांश्चिच्छिष्यान् एवमाह भगवान् गुरुः। "सूत्रान्तं पृच्छतां भवतां मया तदन्तमेव कथितम्। भवन्तश्च सूत्रस्यान्तमेव पृष्टवन्तः। अतो यूयं सौत्रान्तिका भवत" इति भगवताभिहितत्वात् सौत्रान्तिका इति प्रथिताः।

ननु—क्षणिकबाह्यार्थवादिषु* निरस्तेषु समानन्यायतया विज्ञानवादिनो ऽपि निरासस्य सम्भवात् कथं पृथक् निराकरणं—इति चेत्। न। केषां चित् शिष्याणां बाह्यवस्त्वभिनिवेशवतामनुरोधेन बाह्यार्थप्रक्रियाकथने ऽपि विज्ञानस्कन्धमात्रत्वं युज्यते वा न युज्यते ?

युज्यते स्वप्नदृष्टान्ताद्बुद्धैव व्यवहारतः।

इति न्यायेन-विज्ञानस्कन्धमात्रं तत्वं—इति सुगताभिप्रायत्वेन विशेषत्वात्। विज्ञानस्य† क्षणिकेनार्थेन सावलम्बनत्वे निराकृते ऽपि निरालम्बनक्षणिकविज्ञानस्य निराकरणीयत्वाच्च। ननु प्रमाणं प्रमाता प्रमेयं प्रमितिः इति चतसृषु विधासु तत्वपरिसमाप्तिः। आसामन्यतमाभावे ऽपि तत्वस्याव्यवस्थानात्। तस्मात् अनेन विज्ञानस्कन्धमात्रं तत्वं व्यवस्थापयता चतस्रो विधा एषितव्याः। वस्तुव्यवस्थित्यै प्रमाणाद्यभ्युपगमे च तद्विषयनिषेधायोगात्। तथा च—कथं विज्ञानस्कन्धमात्रं तत्वं—इति चेत्। न। यद्यप्यनुभवान्नान्योऽनुभाव्यो ऽनुभविता ऽनुभवनं च। तथापि विभागमात्रं ज्ञेयाद्याकाराणां परिकल्पितं भवति। ज्ञेयादिरूपत्वं तु बुद्धेरान्तरं वास्तवमेव इति

---

* क्षणः स्वसत्ता, सा व्याप्यतया अस्त्यस्येति क्षणिकः। क्षणमात्रस्थायीति यावत्। बहिर्भवः बाह्यः स चासावर्थश्च बाह्यार्थः। बाह्यार्थं क्षणिकमिति वदन्ति ते क्षणिकबाह्यार्थवादिनः। 'यत्सत् तत्क्षणिकं' इत्युक्तत्वात् बाह्यस्य दृश्यस्य अर्थस्य क्षणिकत्वेन सत्त्वात् जगत्सत्यत्ववादिषु वैभाषिक-सौत्रान्तिकेषु निरस्तेष्विति योजनीयम्।

† प्रवृत्तिविज्ञानस्य 'अयं घटः' इत्याकारकस्य क्षणिकेन घटरूपेण विषयेण सावलम्बनत्वं साधारत्वमित्यर्थः।

बुद्धिपरिकल्पितेन रूपेणान्तस्यैव प्रमाण-प्रमेय-प्रमातृफलव्यवहारस्य पारमार्थिकत्वाभावात्।

नचैवं—ब्रह्मणो विज्ञानात्मकस्य नीलाद्यात्मकत्वान्नीलाद्याकारं विज्ञानम्। इतरथा अद्वैतासिद्धेः इत्येवं वेदान्तमतप्रवेशः—इति वाच्यम्। न ब्रह्मवादिनो नीलाद्याकारां वित्ति*मात्रमभ्युपगच्छन्ति किन्तु वक्ष्यमाणानिर्वचनीयनीलादिविषयाम्। वयं तु विज्ञानस्यान्तरं नीलादिरूपमाचक्ष्महे इति विशेषात्। इत्थं च स्वरूपं विज्ञानं तदेव बाह्यरूपेण असत्येन चाकारेण युक्तं प्रमेयम्। प्रमेयप्रकाशनं प्रमाणफलम्। तत्प्रकाशनशक्तिः प्रमाणं इति सिद्धम्। न च—बाह्यार्थसत्यत्वस्वीकारे ऽपि प्रमाणादयः सत्याः सिद्ध्यन्ति—इति वाच्यम्। बाह्यार्थवादिभ्यामपि वैभाषिक-सौत्रान्तिकाभ्यां काल्पनिकस्यैव प्रमाणफलव्यवहारस्य दृष्टत्वात्। अत्र वैभाषिकमते बाह्योऽर्थः प्रत्यक्षः। तत्रा ऽनवभासव्यावृत्त्या फलम्। तच्छक्त्या भानम्[1]। तत्र प्रमाणं करणं, प्रमितिः फलम्। तयोर्भिन्नाधिकरणवृत्तित्वे खदिरगोचरे परशौ पालाशे द्वैधीभावो भवेत्। अतो ऽनयोरैकाधिकरण्यं वक्तव्यम्। न च—परशुः स्वावयवेषु समवेतः, द्वैधीभावस्तु खदिरः इति भिन्नाधिकरणत्वं—इति वाच्यम्। व्यापाराविष्टकारणीभूतपरशोः

---

१ क. पुस्तके 'मानं' इति पाठः।

---

* 'वित्तिः' ज्ञानम्। "वित्तिर्विचारे च लाभ-सम्भवयोः स्त्रियाम्" इति तान्तवर्गे मेदिनी। ब्रह्मवादिनो हि केवलं ज्ञानं न स्वीकुर्वन्ति। किन्तु सविषयं ज्ञानम्।

संयोगेन खदिराधिकरणत्वात्। ऐकाधिकरण्यं च ज्ञानस्थयोरेव प्रमाण-फलयोः। अत्र तावत्कुण्डे बदरवन्न ज्ञाने प्रमाण-फलयोरवस्थान-सम्भवः। ज्ञानस्यासंयोगित्वात्। तादात्म्येन तु स्यादवस्थानम्। वस्तुतोऽभिन्नाभ्यां च प्रमाण-फलाभ्यां एकस्य ज्ञानस्याभेदानुपपत्तिः। एकज्ञानाभेदात्तयोर्न भेदसिद्धिश्च। अतः काल्पनिक एव प्रमाण-फल-योर्भेदव्यवहारः। न च—सत्येन ज्ञानेन माभूत्प्रमाण-फलयोर्भेद-सिद्धिः तदापन्नयोः* तयोः स्वरूपतः सत्यत्वसिद्धौ तावता तत्प्रमेयस्य बाह्यवस्तुनः सत्यत्वं सिद्ध्येत्—इति वाच्यम्। स्वलक्षणस्यानंशस्य वस्तु-सद्भावांशाभ्यां योगासम्भवात्। अज्ञानव्यावृत्त्यात्मकापोहरूपेण कल्पितो ज्ञानत्वसामान्यरूपोंऽशः फलम्। अशक्तिव्यावृत्तिरूपेण कल्पिता स्वप्रति अर्थं प्रति च या प्रकाशशक्तिः सोंऽशः प्रमाणम्। प्रमेयं तु बाह्यमेव। एवं च यदा ज्ञानाधिकरणके प्रमाणफले अशक्तिव्यावृत्ति-अज्ञानव्यावृत्ति-सामान्यात्मके तदा तन्मते सामा-न्यस्य कल्पितत्वात्। कल्पितेन प्रमाणेन तत्फलेन च वस्तुसिद्ध्य-भावादर्थाद्बाह्यवस्तुमिथ्यात्वमापतति इति दिक्।

सौत्रान्तिकमते तु—ज्ञानगताकारवैचित्र्येणानुमेयो बाह्योऽर्थः अर्थसारूप्यात्मना भानं अवभासात्मना फलम्। भासमानं हि ज्ञानगतं बाह्यनीलसारूप्यं अनीलाकारव्यावृत्तिरूपेण कल्पितम्। तच्च बाह्यार्थं व्यवस्थापयति प्रतिबिम्बमिव बिम्बम्। अतः प्रमाणं ज्ञा-नात्मकाग्राह्यदन्यत् तद्व्यावृत्तिरूपेण कल्पितम्। ज्ञानत्वसामान्यं फलम्। तद्धि सारूप्यबलान्नीलज्ञानत्वेन व्यवस्थाप्यते। अस्मिन्नपि

* 'तदापन्नयोः' सत्य-ज्ञानतादात्म्यापन्नयोरित्यर्थः।

मते प्रमेयं परमार्थभिन्नम्। एतन्मते ऽपि सामान्यस्य कल्पितत्वात् कल्पित एव प्रमाणफलभावः। यतस्तु बाह्यमर्थमिच्छतोरपि वैभाषिक-सौत्रान्तिकयोः कल्पितः प्रमाणफलभेदः अतो युक्तमेव विज्ञानवादे कल्पितभेदेनैव सर्वव्यवहारसिद्धिः—इति।

ननु—प्रत्यक्षदृष्टस्य स्तम्भादेर्बाह्यार्थस्य नापलापो युक्तः—इति चेत्। सत्यम्। स्तम्भार्थं किं परमाणवः? तत्कृतो ऽवयवी वा? आद्ये किं परमाणुमात्रो विज्ञानविषयः? स्थौल्यादिप्रतीतिविशिष्टो वा? न प्रथमः। एकस्थूलनीलाभासज्ञानस्य तद्विपरीतपरमाणुगोचरत्वाभावात्। न चान्याभासमन्यगोचरं भवति। भासमानादन्यगोचरत्वमात्रेण अतिप्रसङ्गेन सर्वस्य सर्वगोचरतया सर्वेषां सर्वज्ञत्वप्रसङ्गात्। नापरः। स्थौल्यादिज्ञानधर्मः? उत प्रतिभासनकाले प्रतिभासनोपाधिको ऽर्थधर्मः? आद्ये स्वाकारालम्बनमेव विज्ञानमिति बाह्यार्थाभावादस्मदनुकूलसिद्धिः*। अथास्तु तर्हि द्वितीयः पक्षः। तथा हि।

विशकलितपरमाणुत्वाच्छादकत्वात्संवृतिर्बुद्धिः तया ऽनेकपरमाणोरेकदाग्रहे किञ्चित् स्थूलं रूपं गृह्यते। तच्च यद्यपि नीलत्वादिवत्प्रत्येकं परमाणुस्वभावान्न परमाणुधर्मः। तथापि प्रतिभासदशापन्नानां तु तेषां भविष्यति बहुत्वादिवत्सांवृतं स्थौल्यम्। न च—एकपरमाणुस्वरूपे स्थौल्यं गृह्यते चेत्स्वाभाविकं भवति। नन्वेक-

---

* 'अस्मदनुकूलसिद्धिः' अस्माकं योगाचाराणां अनुकूलस्याभिप्रेतस्य पक्षस्य सिद्धिरित्यर्थः।

परमाणौ स्थौल्यं सम्भवति। अतो ऽनेकपरमाणौ स्थौल्यम्—इत्याकारेण ग्रहणे न स्वाभाविकं इत्यन्योपाधिकं वक्तव्यम्। एवमौपाधिकविषयत्वे स्थूलबुद्धेर्भ्रान्तित्वं—इति वाच्यम्। य एव हि भिन्नधीगृहीतास्त एव निरन्तराः परमाणवः एकधिया गृह्यमाणाः स्थूलमिति निर्भासन्ते। ते च वस्त्वेव। वस्तुग्रहस्य च भ्रमत्वाभावात्। एवं—निरन्तराः नीलपरिमाणवः एकधीगोचरा नीलं—इति चेत्। नैवम्।

यदि निरन्तरा नीलपरिमाणव एव एकधीगोचरा नीलम्, तर्हि नीलपदार्थे रस-गन्ध-स्पर्शपरमाणूनामपि सत्वेन नीलरूपपरमाणूनां नैरन्तर्यमसिद्धम्। ततश्च सान्तरेषु वृक्षेषु दूराद्धनवनप्रत्ययवत् सान्तरेषु परमाणुषु भ्रान्त एव स्थूलप्रत्यय इति। आद्ये विकल्पयोर्द्वितीये स्तम्भादयो ऽवयविनः परमाणुभ्यो भिन्ना वा अभिन्ना वा? भिन्नाभिन्ना वा? आद्ये तयोः सम्बन्धो ऽस्ति न वा? न द्वितीयः। कार्य-कारणभावासम्भवात्। प्रथमे तु तादात्म्यं समवायो वा? आद्ये गवाश्ववदत्यन्तभिन्नयोस्तादात्म्यासम्भवात्। अन्त्ये वैशेषिकमतनिराकरणप्रस्तावे पूर्वमेव निराकृतत्वात्। नापि द्वितीयो ऽभिन्नः पक्षः। दोषस्योक्तत्वात्। न तृतीयः। विरोधात्। न च—अवयवावयविरूपो बाह्योऽर्थो नास्ति चेत् माभूत्, जाति-व्यक्त्यादिरूपस्तु स्यात् इति—वाच्यम्। जात्यादीनां व्यक्त्यादीनां च अत्यन्तभिन्नत्वे स्वातन्त्र्यप्रसङ्गात्। अत्यन्ताभिन्नत्वे तु तद्वदेव अतद्भावात्। भिन्नाभिन्नत्वस्य च विरुद्धत्वात् अवयवावयविभेदवज्जातिव्यक्त्यादिभेदस्याप्यसम्भवात्। तस्माद्यद्यत्प्रतिभासते तस्य सर्वस्य विचा-

रासहत्वात् अप्रतिभासमानसद्भावे तु प्रमाणाभावान्न बाह्यालम्बनाः प्रत्ययाः इति सिद्धम्।

ननु—घटज्ञानं पटज्ञानं इत्याद्यनुभवाद्बाह्यसिद्धिः—इति चेत्। न। असम्भवात्। तथा हि। किं घटज्ञानं पटज्ञानं इत्यादौ ज्ञानार्थयोर्भेदः अभेदो वा? अन्त्ये अस्मदिष्टम्। प्रथमे तु कथं भिन्नस्यार्थस्य ज्ञानेन प्रकाशनम्। किं इन्द्रियवदर्थविषय-विज्ञानजननं किं वा अर्थाश्रितस्य प्राकट्यलक्षणफलस्य जननम्? नाद्यः। ज्ञानस्य विद्यमानत्वेन ज्ञानान्तरजननानुपयोगात्। उपयोगे च अनवस्थाप्रसङ्गात्। न द्वितीयः। घटो ऽतीतः-घटो भावी-इति अतीतानागतानामप्यर्थानां अनुभवात्। तेषामभावे तदाश्रितफलजननासम्भवात्। न ह्यस्ति सम्भवः अप्रत्युत्पन्नो धर्मी धर्मस्त्वाऽऽसम्प्रत्युत्पन्न इति। न च—माभूत् ज्ञानं अर्थविषयज्ञानान्तरस्य जनकं, मा च विषयाश्रितं प्राकट्यमनेनाजनि, तथापि स्वभावात्सम्बद्धार्थविषयं व्यवहारं जनयेत्—इति वाच्यम्। ज्ञानमात्राकारस्य ज्ञानस्वभावस्य सर्वज्ञेयसाधारण्यात् सर्वज्ञत्वापत्तेः। तस्मात् घटाकारवत् ज्ञानस्य घटव्यवहारहेतुत्वात् तदाकारविशिष्टज्ञानस्वरूप-प्रत्यक्षतैवार्थप्रत्यक्षताऽभ्युपेया। न च—न ज्ञानस्यैव घट इत्याकारः। किन्तु बाह्यघटसदृशो ज्ञानस्य घटाकारो ऽस्ति। तत्कथमर्थस्य ज्ञानाकारत्वं—इति वाच्यम्। एकस्यैवाकारस्यानुभवात्। ननु—अयमेवाकारो बाह्यस्यार्थस्याप्यस्तु—इति चेत्। न। प्रयोजनाभावात्। न च—ज्ञानाकारस्य समत्वात् घटादिज्ञानवैचित्र्यं प्रयोजनं—इति-वाच्यम्। ज्ञानस्यैव घटाद्याकारवैचित्र्यत्वस्वीकारात्। बाह्यार्थ-

वादिनापि विषयसारूप्यं विना घटज्ञानं पटज्ञानं इत्यादौ ज्ञानानु-* गत्यदर्शनात् ज्ञानगतघटाद्याकारविशेषो ऽवश्यमेष्टव्यः[1]। स्वीकृते च ज्ञाननिष्ठे घटाद्याकारे तेनैव घटादिव्यवहारोपपत्तेर्न बाह्यार्थकल्पना युक्ता। न च—ज्ञानस्याकारविशेषसमर्पकत्वेन बाह्यार्थापेक्षा—इति वाच्यम्। ज्ञानगताकारविशेषस्य बाह्यार्थाभावे ऽपि स्वप्नज्ञानवदुपपत्तेः। अपि च ज्ञानार्थयोर्भेदनिषेधे भेदस्य सहोपलम्भनियमाभावो व्यापकः। यथा भिन्नावश्विनौ अश्विन्यर्क्षदेवते नावश्यं सहोपलभ्येते। कदाचिदभ्रापिधाने ऽन्यतरस्यैकस्योपलब्धेः। उपलभ्यते च सहोपलम्भनियमाभावस्य विरुद्धो ऽयं सहोपलम्भनियमः अभेदसाधने। यथैकस्माच्चन्द्रमसो द्वितीयश्चक्षुर्दोषप्रतीतः चन्द्रमाः। तदुक्तम्।

सहोपलम्भ*नियमादभेदो नील-तद्धियोः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्यतेन्दाविवाद्वये ॥

इति। तस्मात्सहोपलम्भनियमादपि ज्ञान-ज्ञेययोर्न ज्ञानातिरिक्तबाह्यार्थसम्भवः। एवं ज्ञानातिरिक्तज्ञेयस्य उक्तरीत्या विचारासहत्वात् क्षणिकज्ञानमात्रवादस्य प्रामाणिकत्वात्। न बाह्यार्थान्यथानुपपत्त्या नित्यज्ञानरूपस्य ब्रह्मणो वा प्रधानस्य परमाणूनां वा कारणता—इति चेत्। भ्रान्तो ऽसि। बाह्यार्थोपलम्भस्य बाधाभावात् स्वप्नवैधर्म्याच्च न क्षणिकविज्ञानवस्तुमात्रसिद्धिः। तदुक्तम्।

---

१ ख. पुस्तके '०मेवेष्टव्यः' इति।

---

* सह एकस्यैव।

अबाधात्त्वप्रवैषम्याद्बाह्यार्थस्तूपलभ्यते ।

बहिर्वदिति ते ऽप्युक्तिर्नातो धीरर्थ-रूपभाक् ॥

इति । बाह्यार्थाभावः किं उपलम्भाभावाद्वा ? किं वा सत्यप्युपलम्भे तस्य बाह्याविषयत्वाद्वा ? उत सत्यपि बाह्यविषयत्वे बाह्यार्थसाधकप्रमाणाऽसद्भावाद्वा ? नाद्यः । अयं स्तम्भः—इति स्फुटतरसर्वजनीनोपलम्भे सति तदभावस्य वक्तुमशक्यत्वात् । न द्वितीयः । ज्ञानग्राहिणा वक्ष्यमाणेन साक्षिणा गृह्यमाणस्य ज्ञानस्य बाह्यविषयत्वात् । न हि ज्ञानमेव स्तम्भः कुड्यं वेति कश्चिज्जानाति, ज्ञानविषयत्वेनैव तु सर्वे लौकिकाः स्तम्भ-कुड्यादीन् जानन्ति । 'यत् अन्तर्ज्ञेयं रूपं तद्बहिर्वदवभासते' इति भवद्वचनादपि लौकिका ज्ञानाद्भिन्नत्वेनैव प्रतियन्ति । बाह्यार्थाभावे बहिर्वदिति दृष्टान्तासम्भवात् । न चात्यन्तासतो ऽपि बाह्यार्थस्य दृष्टान्तत्वं—इति वाच्यम् । न हि 'विष्णुमित्रो वन्ध्यासुतवदवभासते' इति कश्चिद्व्याचक्षीत ।

ननु—बाह्यार्थस्याभावाद्बाह्यार्थबाधकप्रमाणसद्भावो ऽस्ति । अतस्तृतीयहेतोर्बाह्यार्थाभावः सम्भवतीति । तथा हि । घट-पटादयो हि बाह्यार्थाः स्थूला भासन्ते, न तु परमसूक्ष्माः । स्थौल्यं त्वर्थस्य युगपद्भिन्नदिग्व्यापित्वम् । भिन्नदेशव्यापित्वं च । तत्र ज्ञानार्थयोर्भेद एकदिग्देशे ऽर्थस्यावरणं अन्यदिग्देशे चानावरणं ज्ञानेन प्रकाशितत्वादिति विरुद्धधर्माध्यासादेकस्याप्यर्थस्य भेदः स्यात् । ज्ञानाभेदे तु नायं दोषः । ज्ञानावच्छेदकार्थस्य ज्ञायमानस्य तदभिन्नस्यानावृतत्वात् । आवृतस्य तदात्मत्वाभावेन विरोधाभावात् । युगपद्दिग्देशव्यापित्वं च स्थौल्यं वस्तुनो न सर्वात्मना कदापि दृश्यते ।

करतलामलकादीनामप्यधोभागावच्छेदेन दर्शनाभावात्। अतो दर्शनादर्शनाभ्यामेकस्यैव स्थौल्यवस्तुनः आवृतत्वमनावृतत्वमस्तु। तच्च आन्तरेव इति न बहिरर्थसिद्धिः—इति चेत् नैवम्। यद्यप्यवभासाऽनवभासलक्षणविरुद्धधर्मसंसर्गो ऽर्थस्य ज्ञानाभेदे ऽभ्युपगते न प्रसज्येत। तथाप्येकज्ञानप्रकाशिते पटे नानादेशव्यासक्ते तद्देशत्वमेतद्देशत्वं च दृश्यते। प्रदेशभेदेन च कम्पाकम्पौ। चित्रे च तस्मिन् रक्तत्वारक्तत्वे। एवं सति ज्ञानाकारत्वे ऽप्यर्थस्य उक्तविरुद्धधर्मवत्त्वाद्भेदप्रसङ्गस्तुल्यः। किञ्च। अर्थस्य ज्ञानाभेदे सति अवयविन्यवयवे च उक्तं वैशेषिकाधिकरणे मूलशास्त्रे दोषान्तरमपि दुर्वारम्।

तथा हि। अवयवी अवयवेभ्यो भिद्यते न वेति व्यतिरेकाऽव्यतिरेकविकल्पः। भेदपक्षे। स प्रत्यवयवं कृत्स्नेन वर्तते एकदेशेन वा? इति वृत्तिविकल्पः। एताववयवदोषौ। सूक्ष्मावयवः परमाणुरपि सांशो वा ऽनंशो वा इति विकल्प्य सांशत्वावश्यम्भावापादनमवयवदोषः। एतद्दोषत्रयं विज्ञानवादिनो ऽपि स्यात्। न हि विज्ञानवादिना अस्माभिरिव जगदनिर्वचनीयमुच्यते। येन तस्येत्थं विचारासहत्वं भूषणं स्यात्। किन्तु बाह्यास्तित्ववादिभिर्यद्यावद्बहिरस्तीत्युच्यते तत्सर्वमन्तः सत्यमेव क्षणिकमस्तीत्युच्यते। सत्यत्वे च बहिरिव अन्तरप्येते दोषाः स्युरेवेति। न च—इदं दोषत्रयं वैशेषिकेषूक्तम्। तदेव विज्ञानवादिषु किमर्थमापद्यते—इति वाच्यम्। 'पुष्टलगुडन्यायेन*' वैशेषिकमत इव 'अन्तः सत्' इति वादिनो

* 'पुष्टलगुडन्यायः'—यथा पुष्ट एको लगुडः बहूनां शुनां मध्ये एकस्य प्रहारार्थं प्रक्षिप्तो ऽपि अन्यानपि प्रहरति तत्रस्थान्। सोऽयं पुष्टलगुडन्यायः।

'बहिः सत्' इति वादिनस्तु बौद्धस्य मते ऽपि प्रसरति इत्यभिप्रायात्। ननु—यथा स्वप्ने बाह्यार्थाभावे ऽपि व्यवहारो जायते एवं जाग्रत्यपि भविष्यतीति किमनुपपन्नम्? । न हि स्वप्ने ज्ञानातिरिक्तं ज्ञेयं केनाप्यनुभूयते। किन्तु स्वविषयकमेव। ज्ञानातिरिक्तज्ञेये मानाभावात्। अनुमानं च—विमतं नीलादिज्ञानं स्वातिरिक्ताविषयं धीत्वात्। स्वप्नधीवत्—इति चेत् न। स्वप्नवद्भविष्यतीति न युज्यते। जाग्रत्प्रपञ्चानङ्गीकारात्। न हि स्वाप्नपदार्थाः तव मते ऽन्यत्र सन्तो ऽन्यत्र प्रतिभासन्ते। अन्यताख्यात्यनङ्गीकारात्। तैः सह प्रत्यासत्यभावेन भावनायोगाच्च। न च ज्ञानं प्रत्यासत्तिः। अनुमानादिप्रामाण्योच्छेदप्रसङ्गात्। नापि तत्रैव परमार्थसन्तः। उत्थानानन्तरं बाधात्। नाप्यसन्तः। तथात्वे शशशृङ्गवत्प्रत्यक्षत्वायोगात्। नापि सदसदात्मकाः। विरुद्धोभयात्मकत्वाऽयोगात्। न च—तत्रैवानिर्वचनीयानामुत्पत्तिः। दृष्टान्ताभावात्। तत्रैवं प्रपञ्चो ऽपि तद्वत्प्रातिभासिक एवास्तु—इति वाच्यम्। सति प्रमातर्यबाध्यमानत्वेन तस्य ततो विलक्षणत्वेन व्यावहारिकत्वस्यावश्यकत्वात्। न च—ज्ञानानिष्ठतत्तदाकाररूपधर्मेणैव व्यवहारसिद्धिः—इति वाच्यम्। बाह्यार्थानभ्युपगमे तस्यैवानुपपत्तेः। यावद्व्यवहारं व्यावहारिकपदार्थानां व्यवहारसौकर्यार्थं स्वीकारे बाधकाभावाच्च। तस्माद्वक्ष्यमाणब्रह्मज्ञानात्प्राक् यावद्व्यवहारं न बाह्यपदार्थापलाप उचितः। यच्चोक्तं ज्ञान-ज्ञेययोः सम्बन्धानिरूपणान्न बाह्यो ऽर्थ इति। तदपि न। वक्ष्यमाणाध्यासिकसम्बन्धेनाप्युपपत्तेः।

अथ बाह्यार्थव्यतिरेकेणापि अनादिवासनावशात् ज्ञानवैचित्र्य-

मुपपद्यते। न च—आश्रयाभावाद्वासनानुपपत्तिः—इति वाच्यम्। आलयविज्ञानस्यैवाश्रयत्वात्—इति चेत्? भ्रान्तो ऽसि। क्षणिकस्यालयविज्ञानस्य आश्रयत्वे कालान्तरभाविनी स्मृतिर्न स्यात्। अनुभवितुर्वासनाश्रयस्य निचारातीतत्वात्। किञ्च वासनापि किं स्थिरा क्षणिका वा? आद्ये सिद्धान्तविरोधः। द्वितीये स्मृत्यसम्भवः। अनुमानं च—आलयविज्ञानं न वासनाश्रयः। क्षणिकत्वात्। प्रतिविज्ञानवत्—इति। किञ्च। वासना हि गुणः। तस्याश्रयः समवायिकारणम्। तच्च आश्रयत्वाभिमतमालयविज्ञानं किं सहैवोत्पद्यते? क्षणिकत्वात् वासनातः पूर्वं वा? नाद्यः। द्वयोर्युगपदुत्पन्नयोः सव्य-दक्षिणशृङ्गवदाधाराधेयभावानुपपत्तेः। न द्वितीयः। प्रागुत्पन्नस्य चाधेयोत्पादसमये सत्त्वे क्षणिकत्वव्याघातात्। अक्षणिकत्वे तु पूर्वोक्तदोषप्रसङ्गः। यानि च बाह्यार्थवादे क्षणिकत्वनिबन्धनानि दूषणान्युद्भावितानि तान्यत्राप्यनुसन्धेयानि। तस्माद्यदि एकः स्थायी कूटस्थो सर्वार्थदर्शी नाभ्युपेयते तदा देश-काल-निमित्तापेक्षया वासनाधानम्। तदधीने स्मृति-प्रत्यभिज्ञे प्रत्यक्षादिव्यवहारश्च। न सम्भवति कापि व्यवस्थेत्यलं पाषण्डसम्भाषणेनेति दिक्।

## इति विज्ञानवादिमतखण्डनम्।

एवं बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च एतौ द्वावपि वैनाशीकपक्षौ निराकृतौ वेदितव्यौ। सम्प्रति माध्यमिका*ऽपरनामधेयस्य

---

* शिष्यैस्तावद्योगश्चाचारश्चेति द्वयं करणीयम्। तत्र अप्राप्तस्यार्थस्य अर्थस्य प्राप्तये पर्यनुयोगो योगः। गुरूक्तस्यार्थस्याङ्गीकरणमाचारः। गुरूक्तस्याङ्गीकरणादुत्तमाः। पर्यनुयोगस्य प्रश्नस्याकरणादधमाश्च। अतस्तेषां माध्यमिका इति प्रसिद्धिः।

शून्यवादिनः मतं प्रदर्श्य निराक्रियते । तथा हि । न तावद्घटाद्यर्थो ज्ञानाकार एव । तस्य पूर्वं निरासात् । न च बाह्यो ऽर्थो ऽस्ति । तस्य परमाणुतत्समूहत्वे विकल्पा ऽसहत्वोक्तत्वात् । तथा च न ज्ञानमप्यस्ति । निर्विषयज्ञानायोगात् । नापि कश्चन साक्षी । तस्मिन् प्रमाणाभावात् । साक्ष्ययोर्ज्ञानार्थयोरभावे न तन्निश्चयात् । तदुक्तम् ।

विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमेषवत् ।
अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगुः ॥
असदेवेदमित्यादाविदमेव श्रुतौ श्रुतम् ।
ज्ञान-ज्ञेयात्मकं सर्वं[1] जगद्भ्रान्तिप्रकल्पितम् ॥

इति । अनुमानं च—विमतं निस्तत्त्वं । तर्कपीड्यत्वात् । मरीचिकादावुदकादि बुद्धिवत्—इति । एवं यो वैभाषिको बाह्यार्थप्रत्यक्षमाह यश्च सौत्रान्तिकः विज्ञानगतप्रतिबिम्बेन बिम्बभूतान् बाह्यार्थाननुमिनोति यश्च योगाचारो ज्ञानातिरिक्तमर्थमलीकमाह एतेषु सर्वेषु क्षणिकवादिषु निरस्तेष्वपि विश्वं न सत् । बाध्यमानत्वात् । नाप्यसत् । अपरोक्षत्वात् । नापि सदसत् । सत्त्वाऽसत्त्वयोरेकत्र विरोधात् । नाप्यनुभयमनिर्वाच्यम् । एकनिषेधस्येतरविधिर्न । अन्तरीयकत्वात् । तस्माच्चतुष्कोटिविनिर्मुक्तत्वात् निस्तत्त्वतया विचारासहत्वलक्षणं शून्यतत्त्वमेव वस्तूनां तत्त्वं व्यवस्थाप्यते । तस्मात् क्षणिकत्वभावनापूर्वकशून्यभावनयैव मोक्षस्यात्महानरूपः सिद्ध्यति । न हि शून्यं नाम किञ्चित्तत्त्वमस्ति । अपि तु निस्तत्त्वमेव—इति चेत् । नैतत्सारम् ।

---

१ 'तस्माज्जगत्' इति क. पुस्तके पाठः ।

न हि—ज्ञानार्थयोरभावः शून्यं—इति सम्भवति। प्रमाणैस्तयोरुपलब्धेः। लौकिकानि हि प्रमाणानि सदा सत्त्वगोचराणि। तैः खलु सत्-दिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते। सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणागोचरं वस्तु व्यवस्थापितं भवति। तथा च सर्वप्रमाणगोचरत्वात् सर्वं शून्यमिति व्यवस्था नोपपद्यते। ननु—स्वप्नादिवज्जागरे ऽपि ज्ञानार्थयोरसत्त्वमित्यस्तु सर्वशून्यत्वं—इति चेत्। न। जागरे पारमार्थिकत्रिकालाबाध्यत्व-रूपसत्त्वाभावे ऽपि बाधाऽबाधाभ्यां स्वप्नादिवैषम्यात्। प्रतीतस्य व्यावहारिकसत्त्वस्य ज्ञानार्थयोः सम्भवेन शून्यत्वाभावात्। स्वप्नद्रष्टर्य-बाध्यमानत्ववत् अखिलजगद्भ्रमाधिष्ठातर्यपि बाधाभावान्न सर्वशू-न्यत्वसिद्धिः—इति। तदुक्तं वार्तिककृद्भिः—

अभावो येन भावेन ज्ञायते शून्यवादिना।

तस्य भावस्य सद्भावो वद केन निवार्यते? ॥

विद्यारण्यस्वामिभिरपि—

निरधिष्ठानविभ्रान्तेरभावादात्मनो ऽस्तिता।

शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते ॥

इति। किञ्च। शून्यं नाम किञ्चित्तत्त्वमस्ति न वा? आद्ये आगतो ऽसि मार्गे। वेदान्तमतप्रवेशात्। तथा च नाममात्रे विवादः। वेदान्तसिद्धान्तस्य तु अयं सौगतमताद्भेदः। न ज्ञानाकारो ऽर्थः। किन्तु बाह्यानिर्वचनीयत्वान्मायामयः। नचार्थक्रियाकारित्वसत्त्वो-पेतो ऽप्यद्वैतश्रुतिबाधाद् ब्रह्मणि कल्पितो न परमार्थसन् इति। उक्तं च खण्डनकृद्भिः।

सौगत-ब्रह्मवादिनोरयं विशेषो यदादिमः ।
सर्वस्य मिथ्यात्वं वदति द्वितीयस्त्वात्मान्यस्य ॥

इति । द्वितीये तु किंविषयकज्ञानेन मोक्षसिद्धिः? । अत एव 'तत्त्वस्य कस्य चिदनङ्गीकारेण त्वया तत्त्वज्ञानं विना सर्वबाधासम्भवेन सर्वमिथ्यात्वासिद्धिः' इति तन्मतं दूषितं भामत्याम् इति । तस्मा-न्निर्युक्तिकत्वात् ग्रन्थतो ऽर्थतस्च अनादरणीय एवायं सुगताभिप्रायः श्रेयोऽर्थिभिः ।

तत्र ग्रन्थतस्तावत्-दर्शनमिति वक्तव्ये 'पश्यन्' इत्यपशब्दः । स्थानमिति वक्तव्ये 'तिष्ठन्' इत्यपशब्दः। तिष्ठतेर्दृशेश्च शिति प्रत्यये तिष्ठ-पश्यावादेशौ । युच् प्रत्यये तु न। तस्य अशित्वात् । 'मिह् सेचने' इत्यस्य निष्ठान्तस्य मीढमिति सिद्ध्यति। 'मिद्धं' इति तु अपशब्दः। 'पोषध' शब्दः उपवासे बौद्धैः प्रयुज्यते । तदुक्तम् ।

'स्नातः सुचिवस्त्राभरणः पोषधं विदधन्ते' ।

इति । स च लोकैरप्रयुक्तत्वादपशब्दः । यद्यपि बौद्धव्याकरणे पश्यनादिशब्दाः साधुतया व्युत्पादिताः तथाप्यनादिसिद्धप्रयोगसिद्ध-सकलसाधुशब्दसङ्ग्रहपाणिनीयाद्यपरिग्रहीतत्वादसाधव एव इति। अर्थतस्च—नैरात्म्यमुपेत्यालयविज्ञानं सर्वव्यवहारास्पदं क्षणिकमनादि-वासनानामाधारं चेत् प्रसिद्धैवानुपपत्तिः । कारणत्वधर्मस्य कार्यत्व-धर्मस्य च स्थिरत्वस्वीकाराच्च। 'बाह्यार्थविज्ञानशून्यवादत्रयमितरे-तरविरुद्धमुपदिशता बुद्धेन वैदिकपथजुषां परमनास्तिकानां क्षत्रि-यादिजन्मभिरवतीर्णानां दैत्यानां धर्मवतां विनाशो न स्यादिति तद्विनाशार्थं विरुद्धप्रतिपत्तिजनकमन्योन्यं विरुद्धमतं शास्त्रमारचि-

तम्' इति हि पुराणेतिहासेषु प्रसिद्धम्। अन्यथा सर्वज्ञस्य भगवतो वासुदेवस्य इतिहास-पुराणयोर्बुद्धत्वेन प्रसिद्धस्य असम्बद्धप्रलापित्वमयुक्तमिति दिक्। तस्माद्बौद्धशास्त्रचतुष्टये ऽपि न गुरुशब्दाभिधेयसिद्धिः इत्यवधेयम्।

## इति शून्यवादिमतखण्डनम्।

एवं मुक्तकच्छाणां बौद्धानां मतस्य निराकरणवत् मुक्तवसनानां दिगम्बराणां स्रावकत्वेन[1] प्रसिद्धानां मतं प्रदर्श्य निराक्रियते। तथा हि। आर्हतानां विस्तरेण तावत्सप्तपदार्थाः। जीवो ऽजीवास्रव-संवर-निर्जर-बन्ध-मोक्षाः प्रसिद्धाः। सङ्क्षेपतस्तु द्वावेव पदार्थौ जीवो ऽजीवश्चेति। एतयोरेव पञ्चास्तिकायैर्व्यवहारः। तथा हि जीवास्तिकायः,१ पुद्गलास्तिकायः२ धर्मास्तिकायः३ अधर्मास्तिकायः४ आकाशास्तिकायः*५ चेति। अस्तिकायशब्दः पारिभाषिकः अनियतपदार्थवाची। जीवश्चासावस्तिकायश्चेति कर्मधारयः। न तु नियतत्वं अनैकान्तवादस्वीकारात्। एवमपरत्रापि। अत्रापि तु

१ ०कच्छानामिति क. पुस्तके।

* अस्तीति कायन्ते कथ्यन्ते इत्यास्तिकायाः। 'कै' शब्दे इति धातोः 'आदे चोपदेशे ऽशिति [अ. ६पा., सू. ४५]' इत्यात्वे कर्मणि घञि 'आतोयुग् चिण्-कृतोः [अ. ७पा. ३सू. ३३]' इति युगागमे च सति काय इति रूपम्। अस्तिकाय शब्दः पारिभाषिकः अनियतपदार्थवाची।

पूर्यन्ते गलन्तीति च पुद्गलाः परमाणवः। तत्समूहः पुद्गलास्तिकायः तेरारब्धावयवी इत्यर्थः।

परमाणव एवावयव्यारम्भक्रमेण वैशेषिकादिवज्जगदारभन्ते । तत्र देहमात्रपरिमाणः चैतन्यमात्रस्वरूपः सततोर्ध्वगमनस्वभावः सावयवो जीवास्तिकायः । स पुनस्त्रिविधः । बद्धो-मुक्तो-नित्यसिद्धश्च इति । तत्र अर्हन्मुनिर्नित्यसिद्धः । नित्यसाधनैर्मुक्तत्वात् । इतरे केचन साधनैर्मुक्ताः । अन्ये तु बद्धाः इति भेदः ।

पुद्गलास्तिकायः षोढा । पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति । तप्तशिलारोहण-केशोल्लुञ्चनादि शास्त्रप्रभवया बाह्यचेष्टारूपया सम्यक् प्रवृत्त्या ह्यान्तरो ऽपूर्वाख्यो धर्मो ऽनुमीयत इत्यसौ धर्मास्तिकायः । सततोर्ध्वगमनं जीवस्य स्वभावः । देहे स्थितिस्तु तत्प्रतिबन्धककर्माधीना इत्यार्हतं मतम् । तस्मात् जीवस्य देहावस्थानेन अधर्मो ऽनुमीयते इत्यधर्मास्तिकायः । आकाशास्तिकायस्य द्वेधा । लोकाकाशो ऽलोकाकाशश्चेति । तत्र उपरि उपरि चतुर्दशभुवनेषु स्थितानां लोकानां अन्तर्वर्त्ती लोकाकाशः । तेषामप्युपरि मोक्षस्थानमलौकिकाकाशः । तदेवं जीवाऽजीवपदार्थौ पञ्चधा प्रपञ्चितौ । पञ्चास्तिकाय भेदात् । अनन्तरं आस्रव-संवर-निर्जराः त्रयः प्रवृत्तिलक्षणाः प्रपञ्च्यन्ते । तत्र द्विधा प्रवृत्तिः । समीचीना मिथ्या च । तत्र मिथ्याप्रवृत्तिरास्रवः । आस्रवत्यनेन जीवो विषयेषु इत्यास्रवः इन्द्रियसङ्घातः । अण्णन्तात् 'आस्रव' शब्दो ण्यन्तात् 'आस्राव' इति स्यात् । अपरेतु-कर्तारमभिव्याप्य आस्रवति आगच्छतीति कर्माणि आस्रवमाचक्षते । सेयं मिथ्याप्रवृत्तिः अनर्थहेतुत्वात् । संवर-निर्जरौ च सम्यक् प्रवृत्ती ।

आस्रवः स्रोतसां द्वारं संवृणोतीति संवरः ।

आस्रवो भवहेतुः स्यात् संवरो मोक्षकारणम् ॥

इति जिनोक्तेः । स च संवरः शम-दम-गुप्ति-सम्मिति-प्रवृत्ति-रूपः । तत्र बाह्येन्द्रियनिग्रहः शमः । अन्तरिन्द्रियनिग्रहो दमः । काय-वाङ्मनोनिग्रहो दृढतरो गुप्तिः । भूमिगतजन्तुहिंसापरिहाराय प्रवृत्ते मार्गे सम्यगादित्यरश्मिप्रकाशे सति निरीक्ष्य सञ्चरणं नियताहारनिषेवणादि सम्मितिः । निर्जरस्त्वनादिकालप्रवृत्तकषायकलुष-पुण्याऽपुण्यप्रहाणहेतुस्तप्तशिलारोहण-केशोल्लुञ्चनादिः । स हि निःशेषं पुण्याऽपुण्यसुख-दुःखोपभोगेन जरयतीति निर्जरः । एवमास्रव-संवर-निर्जराख्यो ऽपि पदार्थाः सङ्क्षेपेण निरूपिताः । अनन्तरं बन्धो निरूप्यते ।

बन्धो ऽष्टविधं कर्म । तत्र घाति कर्म चतुर्विधम् । ज्ञानावरणीयम् १ दर्शनावरणीयम् २ मोहनीयम् ३ आन्तरीयकं ४ चेति । तत्र सम्यक् ज्ञानं न मोक्षसाधनम् । ज्ञानाद्वस्तुसिद्धौ शुक्तिरजतादिज्ञानेभ्यो ऽपि सत्यरजतादिसिद्धिप्रसङ्गात् । आशामोदकादिज्ञानेभ्यो ऽपि मोदकादिसिद्धिप्रसङ्गाच्च । इति विपर्ययो ज्ञानावरणीयं कर्मोच्यते १ । आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयं कर्म २ । बहुषु विप्रतिषिद्धेषु तीर्थकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषाऽनवधारणं मोहनीयं कर्म ३ । सन्मोक्षमार्गप्रवृत्तानां तद्विघ्नकरमैश्वर्यादिकमस्तीति ज्ञानं आन्तरीयकम् ४ । तान्येतानि श्रेयोहन्तृत्वाद्घातिकर्माण्युच्यन्ते । अघातीनि च कर्माणि चत्वारि । आयुष्कं १ गोत्रिकं २ नामिकं ३ वेदनीयं ४ चेति । तत्र शुक्र-शोणितव्यतिकरे जाते मिलितं तदुभयं

स्वरूपं आयुष्कम्* १। तस्य आयुष्कस्य देहाकारपरिणामशक्तिर्गोत्रिकम् २। शक्तिमति तस्मिन् बीजे कललाख्यद्रवात्मकावस्था बुद्बुदात्मतायास्त्वारम्भकः क्रियाविशेषो नामिकम् ३। सक्रियस्य बीजस्य तेजःपाकवशादीषद्घनीभावः शरीराकारपरिणामहेतुर्वेदनीयम् ४ इति। अन्ये तु विधान्तरेण कर्माष्टकमाहुः। जैनमते ज्ञान-दर्शन-सुख-वीर्यगुणकस्य ज्ञानादिगुणानां मोक्षदशायामाविर्भविष्यतां संसारदशायां प्रतिघातकानि प्रवाहानादीनि पापरूपाणि चत्वारि घातिकर्माणि, शरीरसंस्थानाभिमानादिनिवर्त्तकानि कर्माण्यघातीनि इति। तदेतत्कर्माष्टकं पुरुषं बध्नातीति बन्धः।

एवं बन्धपदार्थं निरूप्य मोक्षपदार्थोऽपि निरूप्यते। 'अर्हन्मुनिप्राप्तिर्मुक्तिः' इति केचित्। 'विगलितसमस्तक्लेश-तद्वासनस्य अनावरणज्ञानस्य सुखैकतानस्यात्मनः उपरिदेशावस्थानं मोक्षः' इत्यपरे। अन्ये तु—अनादिकालप्रवृत्तशरीरावस्थितिप्रयुक्तबन्धमुक्तौ सततोर्ध्वगमनं जीवस्य मोक्षं मन्यन्ते। दृष्टं चोर्ध्वगमनं बद्धमुक्तस्य। यथा पञ्जरमुक्तस्य शुकस्य। यथा वा दृढ़पङ्कलिप्तस्य जलनिमज्जने प्रक्षीणपङ्कलेपस्य शुष्कालाबुफलस्य निश्छिद्रस्येति।

तदेवं जीवाऽजीवौ भोक्तृ-भोग्यौ आस्रवादिपञ्चस्कन्धिमं द्वयं फलं। आदिमत्रयं तत्साधनम्। तत्र मिथ्याप्रवृत्तिरास्रवः तत्फलं बन्धः। संवर-निर्ज्जरौ च सम्यक् प्रवृत्ती तत्फलं च मोक्ष इति सप्त

---

* आयुः कायति कथयति उत्पादनद्वारेत्यायुष्कम्। 'कै' शब्दे इति धातोरात्वे 'आतो ऽनुपसर्गे कः' [अ० ३ पा० २ सूत्र ३] इति क प्रत्यये 'आतो लोप इति च' [अ० ६ पा० ४ सू० ६४] इत्याकारलोपे च सति-गेद-इतिवत् आयुष्कमिति रूपं सिद्ध्यति।

पदार्था निरूपिताः। सर्वे चैते सप्तभङ्गीन्यायेनानियताः सिद्ध्यन्ति। तथा हि। सप्तानामनैकान्तभङ्गानां समाहारः सप्तभङ्गी तस्या न्यायः। स चेत्थम्। १ स्यादस्ति २ स्यान्नास्ति ३ स्यादस्ति च नास्ति च ४ स्यादवक्तव्यः ५ स्यादस्ति चावक्तव्यश्च ६ स्यान्नास्ति चावक्तव्यश्च ७ स्यादस्ति च नास्ति चावक्तव्यश्चेति। तदुक्तमनन्तवीर्येण।

तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते॥
क्रमेणोभयवाञ्छायां प्रयोगः समुदायभृत्।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः॥
आद्याऽवाच्यविवक्षायां पञ्चमो भङ्ग इष्यते।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः॥
समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते।

इति। अस्यार्थः। घटोऽस्तीति घटस्य विधानविवक्षायां घटः स्यादस्तीति वक्तव्यम्। स्याच्छब्दो निपातः तिङन्तप्रतिरूपकोऽनैकान्तद्योती। यदाहुर्जैनाः।

वाक्येष्वनैकान्तद्योति गम्यं प्रति विशेषणम्।
स्यान्निपातोऽर्थयोगित्वात् तिङन्तप्रतिरूपकः॥
स्याद्वादः सर्वथैकान्तत्यागात् किं वृत्तचिद्विधे।
सप्तभङ्गनयापेक्षो हेयाऽदेयविशेषकृत्॥

इति। अस्यार्थः। स्यादस्तीत्यादिवाक्येषु स्यादित्ययं शब्दः तिङन्तसदृशोऽनैकान्तद्योतकः। न तु स्वातन्त्र्येण वाचकः। यतो गम्यमस्तिलादिकं प्रतिविशेषणम्। यदि पुनरयमनैकान्तद्योतकः

स्याच्छब्दो न भवेत् तर्हि स्यादस्तिवाक्ये स्यात्पदमनर्थकं स्यात्। 'अस्ति' 'स्यात्' इति वर्तमानत्वविधिवाचिनोरेकार्थपर्यवसानात् पुनरुक्तक्रियापददोषाच्च। अनैकान्तद्योतकत्वे तु 'स्यादस्ति' कथंचिदस्ति, न तु नियमत अस्त्येव इति स्यात्पदात्कथंचित् इत्यर्थः प्रतीयते इति नानर्थक्यम् इति। तदिदमुक्तमर्थयोगित्वादिति।

स्यात्पदेनानैकान्ताभिधाने प्रयोजनमाह। स्याद्वाद इति। स्याद्वादो हेयादेयविशेषकृत्। किं शब्दात् किमश्च इति सूत्रेण थमुप्रत्ययो भवति। ततः 'कथं' इति रूपं लभ्यते। तदुपरि चित् इत्ययं निपातो-विधीयते ततः कथंचित् इति स्यात्। तस्मात् किंवृत्तचिद्विधेर्हेतोः किं शब्दादुपरि वृत्ते प्रत्यये थमि तत्र चिद्विधेः कथंचिदस्ति कथंचिन्नास्ति इत्यादिरूपात् सर्वथैकान्तत्यागात् भवन्तं सप्तभङ्गनयमपेक्षते। ततश्च यदि वस्तु अस्त्यैवैकान्ततः ततः सर्वथा सर्वदा सर्वत्र सर्वात्मना ऽस्त्येवेति न तदीप्साजिहासाभ्यां क्वचित् कदाचित् कथंचित् कश्चित् प्रवर्त्येत निवर्त्येत वा। सिद्धत्वात् हेयाभावाच्च। तदुक्तम्।

एकान्तसत्वे ऽसत्वे च न प्रवृत्तिर्न चेतरा*।
यदि वस्त्वस्ति चैकान्तस्तर्हि सर्वत्र सर्वदा॥

इति। अनैकान्तिकपक्षे तु कथंचित् कदाचित् क्वचित् कस्य-

---

* सर्वथा अस्त्येव चेत्तर्हि तदिच्छुर्न प्रवर्त्येत। सिद्धत्वात् नापि किञ्चिज्जिहासुर्निवर्त्येत। हेयाभावात् इत्यर्थः। अथ एकान्ततो ऽपि नास्त्येव तथापि न प्रवृत्तिः। प्राप्यत्वाभावात्। नापि निवृत्तिः निवर्त्यस्य नित्यनिवृत्तत्वात्।



चित् केनचित् रूपेण सत्वे हानोपादाने प्रेचावतां कल्प्येते । अनुमानं च—विमतं वस्तु अनैकान्तं, वस्तुत्वात् चित्ररूपवत् । तस्मात् घटस्य विवचायां स्यादस्ति १ निषेधविवचायां स्यान्नास्ति २ क्रमेण विधि-निषेधयोर्विवचायां स्यादस्ति च नास्ति चेति वक्तव्यम् ३ । युगपदस्तित्व-नास्तित्वयोर्विधि-निषेधयोर्विवचायां वाचः क्रमवृत्तित्वात् उभयं युगपद्वाच्यम् । अशक्तितः 'उभयं युगपद्वक्तुं न शक्यते' इति तु वक्तुं शक्यं, तत्कथं च वक्तव्यं? इत्यपेचायां स्यादवक्तव्य इति ४ । आद्यो ऽस्तित्वभङ्गो ऽन्त्येनासत्वेन सह युगपदवाच्य इति विवचायां स्यादस्ति चावक्तव्यश्चेति ५ । अन्त्यस्य चासत्वस्य आद्येन सत्वेन सह युगपदवाच्य इति विवचायां स्यान्नास्ति चावक्तव्यश्चेति ६ । क्रमेण विधि-निषेधाधीनसमुच्चितरूपस्य स्यादस्ति च नास्ति चेत्येवंरूपः तृतीयो भङ्ग एकः सत्वेन सह वा युगपदवाच्य इति विवचायां स्यादस्ति च नास्ति चावक्तव्यश्चेति सप्तमो भङ्गो भवति ।

अथवा पञ्चमादिभङ्गानां चतुर्थभङ्गात्फलतो भेदाभावमाशङ्क्य प्रकारान्तरेण व्याख्यायते ।

तत्र सत्वैकान्तपचः साङ्ख्याद्यभिमतः सत्कार्यवादः । तत्र पूर्वपचिणा सत्वं निर्वक्तुमशक्यमित्युच्यते । एतत्पूर्वपचविवचायां स्यादस्ति चाव्यक्तव्यश्चेति पञ्चमो भङ्गः । अनैकान्तवादः शून्यवाद्यभिमतो ऽसद्वादः । तत्र असत्वं निर्वक्तुमशक्यमिति पूर्वपचविवचायां स्यान्नास्ति चावक्तव्यश्चेति षष्ठो भङ्गः। क्रमेण सदसत्वपचो वैशेषिकाद्यभिमतो घटादीनां मध्ये सतां पूर्वं पश्चाच्च प्रागभाव-प्रध्वंस-प्रतियोगित्वरूपमसत्वमिति । तत्र सदसत्वं निर्वक्तुमशक्यमिति पूर्वपचविव-

चायां स्यादस्ति च नास्तिचावक्तव्यश्चेति सप्तमो भङ्गः । तत्तत्पूर्वपक्षिभिर्यत्सत्वादिकं निर्वक्तुमशक्यमित्युच्यते तदपि स्यात्* । एवं च—घटः सन्, घटोऽसन्—इत्येकस्यैव सदसत्वयोः प्रत्यक्षत्वात् कालभेदोपाधिकल्पनायां तु कालस्यापि सन्नसन् इति प्रत्ययात्तत्रापि तत्कल्पनायामनवस्थानात् प्रत्यक्षमेव वस्तूनामनैकान्त्यम् । एवमेकत्वनित्यत्वादिष्वपि पदार्थानां सत्वादिव्यवस्था वास्तवी न सम्भवतीति न च वेदान्तमतप्रवेश—इति वाच्यम् । व्यवहारेष्वनिर्वचनीयानां मायिकानां व्यावहारिकसत्ताङ्गीकारात् । परमार्थतस्तु तदधिष्ठाने निर्विकल्पके त्रिविधपरिच्छेद† शून्ये ब्रह्मणि नित्य-शुद्ध-बुद्ध-मुक्तस्वभावे वक्ष्यमाणे कल्पितत्वाङ्गीकाराच्च तन्मतप्रवेशानापत्तेः । तस्मात् सप्तभङ्गीन्यायस्य तर्कसिद्धत्वात् सप्तपदार्थेषु तत्प्रतिपादनं न्याय्यमिति चेत् चिरकालपिशाचाविष्टोन्मत्तप्रलपनमेतत् ।

तदुक्तम्—

तिष्ठन्नयं नग्नतनुर्यतस्ततो
जल्पन्ननैकान्तमसङ्गतं वक ।

---

* अनियतरूपमित्यर्थः ।

† 'परिच्छेदः' इयत्ता । सा च देशतः, कालतः, वस्तुतश्चेति त्रिविधा । एतादृशत्रिविधपरिच्छेदशून्ये इयत्तारहिते—

तदेतद्ब्रह्मा ऽपूर्वमनपरमनन्तमबाह्यम् [बृ० उ०]

इत्यादिश्रुतिप्रतिपादिते ब्रह्मणि इति व्याख्येयम् ।

15

नूनं पिशाचो ऽयममुष्य सिद्धये
मिताक्षरैर्मन्त्रवरः[१] प्रयोज्यते* ॥

इति। तत्र 'पुद्गलसंज्ञकेभ्यो ऽणुभ्यः सङ्घाता भवन्ति' इति यदुक्तं तत्सर्वं पूर्वोक्तानुवादनिराकरणेनैव निराकृतम्। जीवादिपदार्थानां प्रसिद्धानां तु तत्परिमाणबन्धे मोक्ष-व्यवहारादिव्यवस्था। स तु क्रमेणैव निराक्रियते।

तथा हि। तत्र यद्यपि कालोपाधिसत्त्वाऽसत्त्वप्रतीतावपि उपाध्यन्तरकल्पनेन व्यवस्था नोपाधितो व्यवस्थापयितुं शक्यते। तथापि सत्त्वाऽसत्त्वभेदादीनां घटकपालादिषु सामान्यविशेषादिषु च व्यवस्थयैवान्योन्याऽसाङ्कर्येणैव प्रत्यक्ष-व्यवहारयोः प्रत्यक्षत्वात् न व्यावहारिकमैकान्त्यमपक्रोतुं शक्यते। अनैकान्तिके च न ह्येकस्मिन्धर्मिणि परमार्थसति परमार्थसतां युगपत्सदसत्त्वादीनां धर्माणां परस्परविरहरूपाणां समावेशः सम्भवति। शीतोष्णादिवदसम्भवात्।

---

१ अत्र उपलब्धेषु सर्वेष्वादर्शपुस्तकेषु 'मन्त्रचरः' इत्येव वर्तते। अस्माभिस्तु भट्टोजीदीक्षितविरचिततत्त्वकौस्तुभे धृतः पाठः साधीयानिति मत्वा स एवात्र सङ्गृहीत इत्यलमसत्प्रसक्तेन।

---

* नग्नतनुरयं जिनः यतस्ततो ऽनेकान्तं असङ्गतं च बहु किमपि जल्पन् अयं पिशाच इवोपलक्ष्यते। पिशाचत्वाच्च मिताक्षरैरन्यैर्वादिभिः अनुत्तररूपो मन्त्रवर एव प्रयोज्यते। तन्मतमुन्मत्तप्रलपनमिति मत्वा न तत्खण्डनाय यतन्ते विबुधा इति तात्पर्यम्।

ऐकान्तिके तु यदस्ति वस्तु तत्सर्वदा सर्वत्र सर्वथा सर्वात्मना ऽस्त्येव निर्वचनीयरूपेण । यथा अस्मन्मते प्रत्यगात्मा । यत्तु कचित्केनचिदात्मना अस्तीत्युच्यते यथास्म*त्प्रपञ्चो ऽनिर्वाच्यः । तत्तु व्यवहारतो यावद्ब्रह्मज्ञानमस्त्येव न तु परमार्थतः—इति किमनुपपन्नम् ? तव तु सत्त्वासत्त्वयोर्वस्तुधर्मत्वे सत्त्वदशायामपि वस्त्वनुवृत्त्यापातात् । वस्तुस्वरूपत्वे च सर्वदा सत्त्वाऽसत्त्वप्रसङ्गेन भग्नेनापि घटेन मधुधारणप्रसङ्गात् । तथा च प्रवृत्त्याद्यनुपपत्तिरपि । अस्माकं तु प्रवृत्ति-निवृत्ती व्यावहारिकसत्त्वेनैव भविष्यतः । न च—व्यवहारविषयत्वमात्रेण सत्यत्वम् । शुक्ति-मरुमरीचिकादिषु रजततोयादिभिरपि वास्तवत्वप्रसङ्गात् । न चाबाधितलौकिकदृढ़तरप्रतीतिविषयत्वेन सत्यत्वम् । देहात्मवादस्याप्यबाधितत्वेन तात्त्विकत्वापत्तेः । विवेकिनां देहात्माभिमानस्य विचारेण बाधात्—इति चेत् । तर्हि प्रपञ्चस्याप्यनन्तस्य तुल्यत्वमिति न सत्यत्वावकाशः । तस्मादेकत्र विरुद्धधर्मद्वयसमावेशासम्भवादनैकान्तिकस्य व्यवहारतो वस्तुतो वा असम्भवः । ऐकान्तिकत्वस्य च घटादिषु तत्त्वतो योगेऽपि व्यवस्थयैव दृष्टव्यवहारदृष्टेर्व्यावहारिकत्वसिद्धिः । अपि च सत्त्वासत्त्वयोः परस्परविरुद्धत्वेन समुच्चयाभावे विकल्पः । न च—वस्तुनि विकल्पः सम्भवति । तस्मात् स्थाणुर्वा पुरुषो वेति ज्ञानवत् सत्त्व-पञ्चत्वनिर्धारणस्य फलस्य निर्द्धा-

---

* अस्माकं वेदान्तिनां इष्टः 'प्रपञ्चः' 'अनिर्वाच्यः' अयमस्तीति नास्तीति च निर्वक्तुमशक्यः ।

रयितुश्च प्रमातुः तत्करणस्य प्रमाणस्य[1] तत्प्रमेयस्य च पञ्चत्व-सप्तत्वस्य सदसत्त्वादिसंशये साधु समर्थितमात्मनस्तीर्थकरत्वं दिगम्बर-वृषभेणेति।

अतो यदस्ति तदस्त्येवेति नियमवन्मन्महे। यस्तु कथंचिदास्ते प्रपञ्चः। स च कल्पितः। तत्र च हेयोपादेयादिविभागाऽसिद्धिः। निर्द्धारणस्य च एकान्तसत्त्वे सर्वत्र नानैकान्तवादः। किञ्च। सन्निधानां प्रपञ्चितानां च पदार्थानां सर्वैर्वा शब्दैः वाच्यत्वं केनचिदेति विकल्प्य घटादेस्तच्छब्दवाच्यत्वे ऽपि स्तम्भादिशब्दावाच्यत्वात्। न च—द्वितीयमभिगम्यते नाद्य—इति वाच्यम्। पदार्थानामवाच्यत्वाऽसम्भवात्*। अवक्तव्याश्चेत् केनापि शब्देन न ऊचेरन्। उच्यन्ते चावक्तव्याश्चेति विरुद्धम्। ननु—सत्त्वादिरूपेण निर्द्धारणाभावात् उच्यमानानामपि स्यादवक्तव्यता—इति चेत्। न। उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त इति च स्वर्गापवर्गयोश्च पक्षे भावः पक्षे अभावश्च तस्यैव नित्यता चानित्यता च वदतो मदोन्मत्तवदनुपादेयवचनत्वात्। अपि च अर्हन्नित्यमुक्तोऽनादिसिद्धः। जीवः कश्चिदनुष्ठानान्मुक्तः[2] अन्यस्तदभावाद्बध्यते। एवमार्हतमते निश्चितस्वभावानां[3]

* अवाच्यत्वस्य अवक्तव्यत्वस्य असम्भवात् वाच्यत्वसम्भवादित्यर्थः।

१ '०स्य च' इत्यधिकं क० पुस्तके।

२ 'कश्चिदननुष्ठानान्न मुक्तः' इति क० पुस्तके। 'कश्चिन्नानुष्ठानात्' इति ग० पुस्तके वर्त्तते। इदमशुद्धमिति भाति।

३ 'अनिश्चितस्वभावानाम्' इति क० पुस्तके।

जीवानां तथात्वमस्ति न वेति विकल्प्यमाने स्यादस्ति स्यान्नास्तीत्य व्यवस्थायां शास्त्रावधृतस्वभावत्वासम्भवात्तदप्रामाण्यप्रसङ्ग इति। किञ्च। घटादीनामपि परस्परं सङ्कीर्णत्वात् ओदनार्थी अग्निभक्षणे प्रवर्तेत। जलार्थी मृदानयने च प्रवर्त्तेत। न च—तत्र भेदस्यापि सत्वात् न तथा प्रवृत्तिः—इति वाच्यम्। अभेदस्यापि च सत्वेन प्रवृत्तेरावश्यकत्वात्। एवमनैकान्तासिद्धिवदात्मनः सावयवत्वमप्यनुपपन्नमेव।

तथाहि। सावयवत्वेन मध्यमपरिमाणवत्त्वम्। ततश्चानित्यत्वं घटादिवत् ततश्च कृतहान्यकृताभ्यागमप्रसङ्गः। ततश्च प्रवृत्त्यनुपपत्तिरिति। किञ्च। मनुष्यकायपरिमाणो हि जीवो न हस्तिकायं कृत्स्नं व्याप्तुमर्हति। अल्पत्वात्। इत्यात्मनः कृत्स्नशरीराव्यापित्वादकार्त्स्न्यम्। तथा हस्तिशरीरं परित्यज्य यदा कर्मवशात् पुत्तिकाशरीरं प्राप्नोति तदा न तत्र कृत्स्नः सम्भवतीति न शरीरपरिमाणत्वमात्मनः। कौमारे च स्वल्पपरिमाणो जीवः तारुण्ये स्थाविरे[1] च न कृत्स्नं शरीरं व्याप्नुयात्। ननु—यथा प्रदीपो घटमहाहर्म्योदरवर्ती सङ्कोच-विकाशवान् एवं जीवोऽपि अनन्तावयवः पुत्तिका-हस्तिदेहयोः—इति चेत्। न। तेषामनन्तानां जीवावयवानां समानदेशत्वप्रतिघातो*ऽस्ति न वा? नाद्यः। अनन्ता-

---

१ 'स्थविरे' इति ग॰ पुस्तके।

---

* प्रति+हन् समुदाये। प्रतिघातो नाम एकशरीरावच्छिन्नदेशे सर्वेषां जीवावयवानां समावेश इत्यर्थः।

वयवानां परिच्छिन्ने देशे समातुमशक्यत्वेन देहाद्बहिरपि जीवोपगतिप्रसङ्गात्। न द्वितीयः। एकावयवदेशत्वेनापि समानदेशत्वोपपत्तेः। सर्वेषामवयवानां च प्रथिमानुपपत्तिः। ततो जीवस्याणुमात्रत्वप्रसङ्गात्। नात्र प्रदीपदृष्टान्तः सम्भवति। नश्वराः प्रदीपावयवाः। प्रदीपस्यावयवी प्रतिक्षणमुत्पत्ति-निरोधधर्मा। दार्ष्टान्तिकस्यात्मनो नित्यत्वाभ्युपगमात्। आनन्त्यं च जीवावयवानामनुपपन्नतरम्। शरीरमात्रपरिच्छिन्नानां तदसम्भवात्। ननु—बृहत्तनुदेहावाप्तावयवोपगमापगमाभ्यां जीवस्य देहपरिमाणता न विरुद्धा—इति चेत्। न। विकारवत्त्वप्रसङ्गात्। तथा हि। अवयवोपगमापगमाभ्यां ह्यनिशमापूर्य्यमाणस्यापचीयमाणस्य च जीवस्य विक्रियावत्त्वम्। न च—समुद्रवत्तन्नित्यं—इति वाच्यम्। विक्रियावत्त्वेन चर्मादिवदनित्यत्वप्रसङ्गात्। आत्मनो नित्यत्वे चायुक्तो बन्ध-मोक्षाभ्युपगमः। बन्ध-मोक्षान्वयिनोऽभावात्। किञ्च आत्मत्वमवयवानां वा अवयविनो वा? आद्ये किं आगमापायिनां सर्वेषामवयवानामात्मत्वं हीनस्य वा कस्यचिदवयवस्य? न प्रथमः। आगच्छतामपगच्छतां चावयवानामागमापायिधर्मत्वेन अनात्मत्वात् शरीरादिवत्। आगच्छतामपगच्छतां च तेषामनियतपरिमाणत्वादप्यनवधृतस्वरूपत्वापत्तेश्च। अवयवप्रादुर्भावोपादानत्वं लयाधारत्वं च महाभूतानां वा व्यतिरिक्तस्य वा कस्यचित्? नाद्यः। जीवस्याभौतिकत्वेनासम्भवात्। नापरः। प्रतिजीवमसाधारणस्य साधारणस्य वा अवयवान्तरस्य वा निरूपणे प्रमाणाभावात्। नापि द्वितीयो हीनकल्पः। अयमसाविति विशेषतोऽज्ञातस्य तस्यात्मज्ञानाभावादपवर्गासिद्धिः। किञ्च। सावयवात्मवादिनो मते

जीवावयवाः किं प्रत्येकं चेतयेरन् तत्समूहो वा ? आद्ये तेषां प्रत्येकं चैतन्ये बहूनां चेतनानामेकाभिप्रायत्वनियमाभावात् कदाचिद्विरुद्ध-दिक्क्रियत्वे शरीरमुन्मथ्येत। द्वितीये तु—हस्तिशरीरस्थ पुत्तिका-देहप्राप्तौ द्वित्रावयवशेषो जीवो न चेतयेत्। विगलितबहुसमू-हितया पुत्तिकाशरीरे समूहस्याभावात्। सन्तानि-सन्तानभावस्य नित्यत्वानित्यत्वप्रसङ्गमापाद्य बौद्धं प्रत्येव पूर्वं विस्तरेण निराकृतत्वात् च। ननु—अस्तु तर्हि नित्योऽणुपरिमाण एवात्मा—इति चेत्। न। युगपत्सर्वाङ्गीणसुखादिसाक्षात्कारो न स्यात्। न च—प्रदीपप्रभान्या-येन तत्प्रभास्थानापन्नेन ज्ञानेनैव साक्षात्कारः सम्भवति—इति वाच्यम्। प्रभापि किं तस्य गुणो वा स्वरूपं वा ? नाद्यः। गुण-गुणिभावस्य समवायाधीनत्वात् तस्य च पूर्वमेव दूषितत्वात्। अग्रे नैय्यायिकादि-कमप्यत्यतिविस्तरेण दूष्यमाणत्वाच्च। न द्वितीयः। मध्यमपरिमाण-त्वापत्त्या अणुत्वभङ्गप्रसङ्गात्। न हि गृहमण्डलवर्तिप्रदीपप्रभा कस्य-चिदतीन्द्रिया भवति। इन्द्रियगोचरत्वे तु सावयवत्वापत्तेरनुभवसि-द्धत्वात्। एवं च सति अस्मिन्नपि दर्शने न गुरुशब्दाभिधेयसिद्धि-रिति। तस्मादसङ्गतमेवार्हतं दिगम्बरदर्शनमित्यलमसम्भाव्यसम्भाषणे-नेति दिक्।

## इति दिगम्बरमतखण्डनम्।

अथ तर्ह्यस्तु चार्वाक*दर्शनानुसारेणैव गुरुशब्दाभिधेयसिद्धिः।

---

* पुरा किल चार्वाको नाम कश्चिदसुरः तपसा ब्रह्माणं तोषयामास। तुष्टाच्च तस्मात्सर्वभूतेभ्यो ऽभयं वरयाम्बभूव। भगवान्कमलासनो ऽपि द्विजावमाननादन्यत्र सर्वेभ्यो ऽभयं ददौ। अथ—

तथा हि। तेषां हि मते प्रत्यक्षसिद्धत्वाद्भूतचतुष्टयमेव हि तत्त्वम्। अनुमानाद्यनङ्गीकारात्*। न च—तर्हि प्रपितामहादिप्रत्यक्षासम्भवः। तद्धेतुसन्निकर्षाभावात्—इति वाच्यम्। तैः सह लौकिकसन्निकर्षाभावेऽपि ज्ञानलक्षणरूपा ऽलौकिकसन्निकर्षेणापि तदुपपत्तेः[१]।

१ 'नचे'त्यारभ्य 'तदुपपत्तेरि'त्यन्तं ख० ग० पुस्तकयोर्नास्ति।

स तु लब्धवरः पापो देवानमितविक्रमः।
राक्षसस्तापयामास तीव्रकर्मा महाबलः॥
ततो देवास्समेतास्च ब्रह्माणमिदमब्रुवन्।
वधाय रक्षसस्तस्य बलविप्रकृतास्तदा॥
तानुवाच ततो देवो विहितस्तत्र वै मया।
यथास्य भविता मृत्युरचिरेणेति भारत॥
राजा दुर्योधनो नाम सखास्य भविता नृषु।
तस्य स्नेहानुबद्धोऽसौ ब्राह्मणानवमंस्यते॥
तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः।
धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति॥

विधिनेत्युक्ता देवा विगतज्वरा बभूवुः। अनन्तरं राज्ञा युधिष्ठिरेण दुर्योधनादीनरीन् निषूदयित्वा सुहृत्सम्बन्धिबान्धवैस्सह हास्तिनपुरप्रवेशे आरब्धे तत्समये ब्राह्मणवेषेण सर्वेषामग्रसरो युधिष्ठिरं धिक्कृत्य विप्रान्कोपयामास चार्वाकः। ते च तपोधना विप्रा ऊङ्कारेणैव तं निजघ्नुरिति महाभारते शान्तिपर्वणि राजधर्मे ३९शे ऽध्याये आख्यायिका। स एष चार्वाकः। अस्यैव लोकायत इति नामान्तरम्। एतत्कृतं दर्शनं चार्वाकदर्शनमित्यभिधीयते।

* आकाशस्य अनुमानगम्यत्वात्, अनुमानादीनां प्रमाणानामनङ्गीकाराच्च पञ्चमं भूतमाकाशं नाद्रियन्ते चार्वाका इत्यर्थः।

अतएव ईश्वरतत्-कर्तृकसृष्ट्यादि-तत्सम्भवपरलोकादिस्वीकारोऽपि निरर्थक एव। तथा च—'मनुष्योऽहं' 'गौरोऽहं' 'जानाम्यहं' इत्यादिसमानोपलम्भात् गौरत्वादिरूपवति ज्ञान-सुखाद्याश्रयता सिद्ध्यति इति। क्षणिकभूतचतुष्टयत्रुटिपुञ्जरूपो देह एवात्मा स्यात्। न च तदतिरिक्तो ऽणुर्महान् ज्ञानस्वरूपो वा। स च जातो 'देवदत्तो मृतो वा' इति प्रतीत्या ध्वंसप्रागभावप्रतियोगी। तथा च बार्हस्पत्यानि सूत्राणि।

चैतन्यविशिष्टः कायः पुरुषः।

काम एवैकः पुरुषार्थः।

मरणमेवापवर्गः।



न च—शरीरं नात्मा। ज्ञानशून्यत्वात्। तदपि शरीरं ज्ञानशून्यं पार्थिवत्वात् घटवत्—इति वाच्यम्। घटस्य केवलपार्थिवत्वात् ज्ञानशून्यत्वे ऽपि भूतसमुदायात्मकत्वाच्छरीरस्य ज्ञानवत्त्वसम्भवात्। केवलचूर्णादौ रागाभावे ऽपि चूर्ण-पर्णादिसमुदाये ताम्बूले रागोत्पत्तिवत् अहं ज्ञानवानिति प्रत्यक्षबाधेनानुमानस्य शरीरे ज्ञानाभावासाधकत्वाच्च। वह्निरनुष्णः कृतकत्वात् घटवत्—इत्यनुमानवत्। तदुक्तम्।

प्रमाणमेकं प्रत्यक्षं तत्त्वं भूतचतुष्टयम्।
मोक्षस्य मरणान्नान्यः कामार्थौ[१] पुरुषार्थकौ॥
न हि खल्वीश्वरः कर्त्ता परलोककथा वृथा।

---

१ 'किमर्थौ' इति ग० पुस्तके। 'कायस्तु पुरुषार्थकः' इति ख. पुस्तके च।

देहं विनास्ति चेदात्मा कुम्भवद्दृश्यतां पुरः ॥
ह्रस्वो दीर्घो युवा बाल इति देहोऽभिदृश्यते ।
अस्ति जातः परिणतो वृद्धः क्षीणो जरी मृतः ॥
इत्येवमुक्ताः षड्भावविकारा देहसंश्रयाः ।
वर्णाश्रमविभागस्य देहेष्वेव प्रतिष्ठितः ॥
जातकर्मादिसंस्कारो देहस्यैव विधीयते ।
'शतं जीवे'ति देहस्य प्रयुञ्जत्याशिषं शुभाम् ॥

इत्यादि। न च—श्रुतिप्रतिपादितस्यात्मनो देहेन्द्रियाऽव्यतिरिक्तत्वेन अनङ्गीकारे वेदप्रामाण्यासम्भवादिति[१]—वाच्यम्। तथा सति इष्टापत्तेः। वेदस्य प्रज्ञापौरुषहीनान् प्रति जीविकामात्रविषयत्वात्। तदुक्तम्।

अग्निहोत्रं च पीतस्य त्रिपुण्ड्रं भस्मधारणम् ।
प्रज्ञा-पौरुषहीनानां जीवो*जल्पति जीविकाम्[२] ॥

इति। न च तर्हि स्वर्ग-नरकाद्यसिद्धिरिति वाच्यम्। स्वर्ग-नरकादेः प्रत्यक्षसिद्धत्वात्। तदुक्तम्।

---

१ 'सम्भवादिष्टापत्तेः' इति क० पुस्तके।

२ सर्व्वदर्शनसङ्ग्रहे तु—

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धि-पौरुषहीनानां जीविकेति बृहस्पतिः ॥ इति।

---

* 'जीवः' बृहस्पतिः इत्यर्थः।

भोजनं मांसरहितं शयनं सुन्दरीं विना ।
पादचारेण गमनं नरकं किमतः परम् ? ॥

इति । अतएव विष्णुपुराणे तृतीयांशे अष्टादशाध्याये मायामोह*वाक्यम् [श्लोक ८६] ।

नैतद्युक्तिसहं वाक्यं† हिंसाधर्माय नेष्यते[1]
हवींष्यनलदग्धानि फलायेत्यर्भकोदितम् ॥
यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते ।
शम्यादि[2] च समित्काष्ठं तद्वरं पत्रभुक् पशुः ॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।

---

* पुरा किल प्रह्लादप्रमुखा असुरा नर्मदातीरे उग्रं तपश्चेरुः । तद्भयोद्विग्नमनसो देवाः सर्वेऽपि विष्णुमुपतस्थुः । तुष्टश्चाथ भगवान् मायामोहनामकं पुरुषं स्वशरीरतः समुत्पाद्य तेभ्यो ददौ । अवदच्च 'एष वः कार्यं साधयिष्यतीति । स तानसुरानुपागम्य वेदवादातिवादैर्मोहयित्वा तपसो निवर्तयामासेत्याख्यायते । स एष मायामोहः ।

† 'एतद्वाक्यं' इति । एतत्—'ज्योतिष्टोमेन स्वर्गकामो यजेत' । 'अथयो ऽश्वमेधेन यजति स सर्वान्कामान् लभते' । 'यो बृहस्पतिसवेन यजते स ब्रह्मवर्चस्वी भवति' इत्यादि यज्ञविधायकं वैदिकं वाक्यं न युक्तिसहं यतो प्राणिहिंसा धर्माय धर्मप्राप्तये नेष्यते । सर्वप्राणिनां दयया हिताचरणेन च धर्मो भवितुमर्हति तत्कथं प्राणिहिंसया धर्मः सिद्ध्येत् ।

---

१ मद्रासनगरे आन्ध्राक्षरैर्मुद्रिते विष्णुपुराणपुस्तके 'चेष्यते' इति पाठान्तरम् ।

२ 'शम्यादि यदि चेत्काष्ठं' इति म० मु० पु० पाठः ।

स्वपिता यजमानेन तदा[१] किं न निहन्यते ॥

तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः ।

दद्याच्छ्राद्धं श्रमायान्नं न वहेयुः प्रवासिनः ॥

इति । न च—संयोगादिसम्बन्धं विना भूतचतुष्टयमेलनासम्भवेनावयव्यवयवभावानुपपत्तिः—इति वाच्यम् । कपालद्वयमेव घटः । कपालिकाद्वयमेव कपालम् । एवं त्रुटिपर्यन्तं विचारेण त्रुट्यन्यदप्रामाणिकत्वेन संयोगादिसम्बन्धास्वीकारात् । प्रामाणिकत्वेन वा अवयवानामवयविनश्च द्विगुणगुरुत्वाद्युपलब्धिप्रसङ्गात् । अथ वा मृते शरीरे ज्ञातृत्वाद्यभावेन व्यभिचारात् । 'पश्यामि शृणोमि' इत्यादिप्रतीत्या मरणपर्यन्तं यावन्तीन्द्रियाणि तिष्ठन्ति तान्येवात्मा' इति केचित् । यद्वा 'अन्यानीन्द्रियाण्यालोचनात्मकनिर्विकल्पकज्ञानसाधनत्वान्नात्मानः । किन्तु सविकल्पकज्ञानसाधनत्वात् । अन्येन्द्रियप्रवृत्तिमूलसङ्कल्पादिमत्वाच्च । 'इतरेन्द्रियाद्यभावे ऽपि सत्वात् मन एवात्मा' इत्यपरे । किं वा 'सर्वदा प्राणस्यैकरूपत्वात् गिरिगह्वराद्यवस्थितानां सकलविकल्पशून्यत्वेन निर्मनस्कानामपि योगिनां प्राणसत्वात् प्राण एवात्मा' इत्यन्ये । तदुक्तम् ।

केचिच्छृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहम् ।

इतीन्द्रियाणामात्मत्वं प्रतीयन्ते ततो ऽधिकाः ॥

केचिच्छ्वसामि जीवामि क्षुधितो ऽस्मि पिपासितः ।

इत्यादिप्रत्ययबलात्प्राणमात्मेति मन्वते ॥

---

१ 'किन्तु तस्मान्न हन्यते' इत्यपि तस्मिन्नेव पठ्यते ।

—इति चेत् न। अत्यन्तनिर्युक्तिकत्वात्। तथा हि। अहमित्याकारकधीविषयचतुर्विधचतुष्टय एवात्मा इति—तव मतम्। तस्य चोत्पत्तेः पूर्वमसत्त्वात्कस्य चेतनस्य व्यापारेणोत्पत्तिः? न च—प्रलयास्वीकारेणानादिमातापितृपरम्पराव्यापारेण शरीररूपसङ्घातोत्पत्तिः—इति वाच्यम्। तत्र शरीरवैचित्र्ये नियामकमदृष्टं दृष्टं वा? नाद्यः। प्रत्यक्षप्रमाणमात्रस्वीकारेणासम्भवात्। परलोकस्वीकारप्रसङ्गाच्च। न द्वितीयः। एकजातीयमातापितृपरम्पराव्यापारेण उत्पन्नयोर्यमजयोर्वैलक्षण्यस्यादृष्टं विनानुपपत्तेः। कारणान्तरस्यापि स्वभावादेः प्रत्यक्षप्रमाणेन ज्ञातुमशक्यत्वाच्च। तच्चादृष्टमस्मिन्जन्मनि न सम्पादितमिति तत्सम्पादकजन्मान्तरयोग्यान्यसिद्धिः। एवं तत्पूर्वपूर्वमपि सिद्धतीत्यनेकजन्मयोगिनस्स्व भावस्य नित्यतैव। नाशकाभावात्। अन्यथा कृतहान्यकृताभ्यागमप्रसङ्गात्। तदुक्तम्।

आत्मानित्योऽथ वा नेति भेदस्वादेः स्फुटो मतः।
अन्त्ये कृतस्य हानिः स्यादकृताभ्यागमस्तथा॥

इति। न च—तवमते ईश्वर एव स्वसृष्टप्राणिषु स्वेच्छया तथा तथा भोगसामग्रीं सम्पादयति नत्वदृष्टानुसारेण कुलाल इव स्वनिर्मितघटादिषु क्वचिद्दुग्धयोगं क्वचिन्मूत्रपुरीषयोगं—इति वाच्यम्। अचेतन इव चेतने तथा व्यवहारस्वीकारे वैषम्यनैर्घृण्यप्रसङ्गात्। दृश्यते च कुलालादेरेव घटादिवत्पुत्रेषु निर्निमित्तकतयाव्यवहारे वैषम्यादिकृता निन्दा इति। किञ्च। देहेन्द्रिय-प्राण-मनसामनात्मत्वस्य 'मम देहो, ममेन्द्रियं, मम मनः, मम प्राणः' इत्यादिप्रत्यक्षप्रमाणेनैव सिद्धत्वात्। तस्माच्छरीरेन्द्रियाद्यतिरिक्ताद्वितीयवस्तु-

माणतद्भावाभावभासको नित्य-शुद्ध-बुद्ध-सच्चिदानन्दविग्रहः परिपूर्ण एवात्मा मन्तव्य इति।

ननु देहेन्द्रियाद्यतिरिक्तनित्यत्वैकत्वस्वीकारे भविष्यति देवदत्तो 'मृतो देवदत्तः' इति प्रतीत्या प्रागभावप्रध्वंसयोः प्रतीतिः। 'स्थूलोऽहं, गच्छामि, तिष्ठति यज्ञदत्तः' इत्यादि च प्रत्यक्षप्रतीतीनां प्रामाण्यमेव न स्यात्। तथा च कथं देहात्मनो व्यतिरेकः। व्यतिरेके ऽपि कथं वा जन्मविनाशशून्यत्वम्। देहजन्म-नाशाभ्यामात्मनो ऽपि जन्म-विनाशसम्भवात्। किञ्च—एकस्यात्मनो विभिन्नशरीरेषु चेष्टानुपपत्तेश्च—इति चेत्। न। एकस्यैव विभुत्वेन सर्वत्र चेष्टोपपत्तेः। तथा च श्रुतिः।

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेत्ता केवलो निर्गुणश्च॥

इति। अग्रे नैय्यायिकं प्रति आत्मनानात्वस्य निराकार्यमाणत्वाच्च न प्रतिशरीरमात्मभेदे मानमस्ति। अथ—देहभेदेन भेदाभावे ऽपि कौमाराद्यवस्थाभेदेन भेदस्वीकारस्यावश्यकत्वम्। अन्यथा बाल्य-यौवनादिभेदेन वृद्धादिभेदो न स्यात्—इति चेत्। न। तस्यैकस्यैवास्मिन्वर्तमाने देहे सर्वदैकरूपत्वस्य अनुभवसिद्धत्वात्।

तथा हि। 'य एवाहं बाल्ये पितरावन्वभूवं स एवाहं वार्द्धके प्रणप्तॄननुभवामि'—इति दृढतरप्रत्यभिज्ञानात्। अन्यनिष्ठसंस्कारस्यान्यत्रानुसन्धानाजनकत्वात्। तथा च। यथा कौमारादिभेदेन

भेदो नास्ति तथा इदं शरीरं त्यक्त्वा शरीरान्तरग्रहणे ऽपि स्वप्न-प्रयोगैश्वर्ये च तत्तद्देहानुसन्धाने ऽपि—स एवाहं—इति प्रत्यभिज्ञानाच्च। प्रत्यभिज्ञा च 'उद्बुद्धसंस्कारसहितप्रत्यक्षज्ञानं' इति वेदान्तिनः। 'ग्रहणस्मरणात्मकं ज्ञानं' इति नैय्यायिकादय इति। ननु—कौमाराद्यवस्थाविशेषाणामत्यन्तवैलक्षण्ये व्यवस्थावतो देहस्य—यावत्-प्रत्यभिज्ञं वस्तुस्थितिः—इति न्यायेनैक्यं सम्भवति—इति चेत्। नैवम्। स्वप्ने कायव्यूहे च तत्तद्देहधर्मिभेदे ऽपि प्रतिसन्धानं न स्यात्—इत्युदाहरणस्य प्रदर्शितत्वात्। एतेन देहेन्द्रियादिव्यतिरिक्तो ऽपि देहेन सह उत्पद्यते विनश्यति चेति पक्षो ऽपि निरस्तो वेदितव्यः। तत्र अवस्थाभेदेन प्रत्यभिज्ञोपपत्तावपि धर्मिणो देहस्य प्रत्यभिज्ञानुपपत्तेः।

अथास्तु कौमाराद्यवस्थानां नाशे ऽपि वार्द्धके प्रत्यभिज्ञानम्। तथापि जातमात्रस्य तु न तथा—इति चेत् न। अयोगिनां प्रत्यभिज्ञाभावे ऽपि जातमात्रस्य हर्ष-शोक-भयादिसम्प्रतिपत्तेः पूर्वसंस्कार-जन्याया दर्शनात्। वीतरागजन्मापत्तेश्च। अन्यथा स्तनपानादौ प्रवृत्तिरेव न स्यात्। तस्या इष्टसाधनतादिज्ञानजन्यत्वस्यादृष्टजन्यत्वस्य वा अभ्युपगमात्। नन्वस्तु पूर्वापरयोर्देहयोरात्मैकत्वं कायव्यूहन्यायेन सर्वशरीरेष्वेकस्यैव चेष्टाङ्गीकारे तु तद्वदेवानुसन्धानप्रसङ्गः—इति चेत्। नैवम्। वक्ष्यमाणविद्यावच्छिन्नं प्रति तु इष्टत्वात्। तत्तद्देहावच्छिन्नं प्रति तु कायव्यूहे ऽप्यनङ्गीकारात्। आत्ममात्रानुसन्धातृत्वस्य चेष्टत्वात्। अत एवैकस्मिन्देहे पादावच्छिन्नेन शिरोभागावच्छेदेन सुखं नानुसन्धत्ते। न वा शिरोऽवच्छिन्नेन पादावच्छिन्नं

दुःखम्। किन्तु। पादे मे दुःखं—शिरसि मे सुखं—इत्युभयावच्छेदेनानुभवात्। तस्माद्देहात्मभ्रममाश्रित्यैव जीवभेदानुभवः। अतो मरुमरीचिकादावुदकादिबुद्धिवत्—स्थूलो ऽहं—इत्यादिबुद्धेरपि भ्रमत्वमभ्युपगन्तव्यम्। बाधस्योभयत्र तुल्यत्वात्। एतेन "देहं विनास्ति चेदात्मा" इत्यादिवल्गितमपास्तम्।

किञ्च। आत्मनो ध्वंस-प्रागभावयोरसिद्धिर्ग्राहकाभावादपि। तथा हि। ग्राह्यकाले ग्राहकाभावात् ग्राहकसत्वे ग्राह्याभावात्। न च—स्वभिन्नेन ग्राह्य—इति वाच्यम्। स्वभिन्नस्य चाखिलस्याचेतनत्वे नानात्मत्वस्वीकारात्। नाप्यत्यन्ताभावान्योन्याभावौ। शुक्तिरजतादिन्यायेन वक्ष्यमाणेन कल्पितस्य देहेन्द्रियादिप्रपञ्चस्याधिष्ठानत्वात्। कल्पितदशायां सर्वत्रानुगमाच्च नात्यन्ताभावान्योन्याभावौ। एतच्च सर्वमग्रे मिथ्यात्वविवेचने स्पष्टं भविष्यति इति दिक्[1]।

नन्वस्त्वदृष्टादिसिद्धिः तथापि सन्दिग्धत्वात्परलोकस्वीकारो व्यर्थ—इति चेत्। भ्रान्तो ऽसि। अस्ति न वा—इति विकल्पस्य विद्यमानत्वे ऽपि अस्तित्वपक्षस्यैव वक्तृवादिसम्मतत्वेनाभ्यर्हितत्वात्। तदुक्तं न्यायकुसुमाञ्जलौ।

सन्दिग्धे ऽपि परे लोके त्याज्यमेवाहितं[2] बुधैः।
यदि न स्यात्ततः[3] किं स्यात् अस्ति चेन्नास्तिको हतः॥

इति। एतेन "परलोककथा वृथा" इत्यपास्तम्।

---

१ 'तथा हि' इत्यारभ्य 'दिक्' इत्येतदन्तं क. ग. पुस्तकयोः नास्ति।
२ '॰वा शुभं जनैः' इति ख. पुस्तके।
३ 'न हानिः स्यात्' इति ख. ग. पुस्तकयोः।

नन्वस्तु अदृष्ट-परलोकादिस्वीकारः । युक्तिसिद्धत्वात् । ईश्वर-सद्भावे तु मानं न किञ्चित्पश्यामः । तथा हि । किं प्रत्यक्षं उत अनुमानम् आहो उपमानम् ? यद्वा शब्दः अथ वा अर्थापत्तिः किं वा अनुपलब्धिः ? नान्त्यः । अभावमात्रविषयत्वात् । त्वन्मते ईश्वरस्य भावपदार्थत्वात् । नाप्याद्यः । परोक्षत्वात् । न द्वितीयः । पूर्वं तार्किकंप्रति परमाणुखण्डने त्वयैव निराकृतत्वात् । नाप्युपमानम् । सादृश्याद्यभावात् । नाप्यर्थापत्तिः । तां विना कस्यचिदर्थस्यानुपपत्त्यभावात् । नापि शब्दः । अद्वितीयस्य ब्रह्मणो निर्द्धर्मकत्वात् । शब्दस्य च जात्यादिधर्मपुरस्कारेणैव प्रवर्तकत्वात् । तदुक्तं वार्तिककृद्भिः ।

दृष्टा गुण-क्रिया-जातिसम्बन्धाः शब्दहेतवः ।
नात्मन्यन्यतमो ह्येषां तेनात्मा नाभिधीयते ॥

—इति चेत् । नैवम् । "यतो वा इमानि भूतानि जायन्ते" इत्यादिपूर्वमेव परमाणुप्रधानखण्डनप्रस्तावे श्रुतिप्रमाणैक्यगम्यस्येश्वरस्याभिन्ननिमित्तोपादानकत्वप्रतिपादनात् । अग्रे च मीमांसकंप्रति वेदोत्पादकत्वेन प्रतिपाद्यमानत्वाच्च । श्रुतिप्रमाणातिरिक्तप्रमाणागम्यत्वस्येष्टत्वात् । एतेन "न हि खल्वीश्वरः कर्त्ता" इत्यादि वल्गितमप्यपास्तमित्यलं पाषण्डविडम्बनेनेति दिक् । तस्माच्चार्वाकदर्शनासिद्ध्या सुतरां गुरुशब्दाभिधेयासिद्धिरिति तु सममेवेति ।

## इति चार्वाकमतखण्डनम् ।

17

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीब्रह्मानन्दसरस्वतीश्रीपादशिष्यकाश्मीरकश्रीसदानन्दयतिविरचितायामद्वैतब्रह्मसिद्धौ गुरुशब्दाभिधेयविचारे नास्तिकषट्दर्शनमतखण्डनव्याजेन दुर्दुरूढवादिशिरसि द्वितीयोऽयं मुद्गरप्रहारः ॥२॥

---

# अथ तृतीयो मुद्गरप्रहारः ।



बाह्यदर्शनषट्केषु गुरुशब्दाभिधेयकम् ।
न सिद्धं यत्ततो वीक्ष्य आस्तिकेष्वथ निर्णयः ॥ १ ॥

अथास्तु तर्हि वैशेषिक-तार्किक-प्राभाकरादिसम्मतः परममहत्-परिमाणादिविशिष्ट एवात्मा गुरुशब्दाभिधेयः। तदुक्तम् ।

वायोर्नवैकादश तेजसो गुणाः
जल-क्षिति-प्राणभृतां चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे
महेश्वरेऽष्टौ मनसस्तथैव च ॥

—इति चेत् । तर्हि किमस्य स्वरूपं ? कथं च गुण-गुणिभाव ? इति निरीक्ष्य वक्तव्यम्। स पुनः प्रतिशरीरमीश्वराच्च भिद्यते न वा ? भिद्यते चेत् कथमस्य मोक्षादिव्यवस्था—इति चेत् । श्रोतव्यं सावधानेन। सुखसमवायिकारणतावच्छेदकात्मत्वसामान्यवानात्मा। ज्ञानाधिकरणमेव वा। स पुनर्द्विविधः। परमात्मा जीवश्च। तत्र परमात्मा नित्यज्ञानाश्रयत्वात्सर्वज्ञ एक एव। नचेश्वरस्य ज्ञान-स्वरूपत्वं सुखस्वरूपत्वं वा सुखाश्रयत्वं वा सम्भवति—इति वाच्यम्। ज्ञानस्य गुणत्वात्। सुखस्य धर्मजन्यत्वाद्गुणत्वाच्च। ईश्वरस्य च सर्व-मुक्तत्वेन विहिते ऽनधिकारात्। तत्स्वीकारे च जीवत्वप्रसङ्गात्

तथा च 'नित्यज्ञानेच्छाप्रयत्नवानेव ईश्वरो मन्तव्यः' इति प्राञ्चः। नव्यास्तु नित्यसुखमपि स्वीकुर्वन्ति इति।

ननु—ईश्वरसद्भावे किं मानम्? न तावत्प्रत्यक्षम्। तदपि बाह्यमाभ्यन्तरं वा? नाद्यः। अरूपिद्रव्यत्वात्। नान्त्यः। जीवात्म-तत्सुखादिव्यतिरिक्तत्वात्। नाप्यनुमानम्। लिङ्गाभावात्—इति चेत्। न। क्षित्यङ्कुरादिआद्यकार्यं वा कर्तृजन्यम्, कार्य्यत्वात्, घटवत् इत्यनुमानस्य प्रमाणत्वात्। उपादानगोचरज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम्। उपादानं समवायिकारणम्। सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम्। "यः सर्वज्ञः सर्ववित्" इत्यागमोऽपि तत्र मानमिति दिक्।

जीवश्च देहेन्द्रियाद्यतिरिक्तः प्रतिशरीरं भिन्नो नित्यो विभुश्च। विभुत्वं च सर्वमूर्तसंयोगित्वम्। मूर्तत्वं च परिच्छिन्नपरिमाणवत्त्वम्। तच्च पृथिव्यप्तेजोवायुमनसामेव। नित्यत्वं च ध्वंसाप्रतियोगित्वम्। स च-अहं जाने, अहं सुखी, अहमस्मि-इत्यादिप्रतीत्या मानसप्रत्यक्षः। अनुमानविषयश्च। आत्मा इतरेभ्यो भिद्यते, आत्मत्वात्, व्यतिरेके पृथिव्यादिवत्। तस्य च सुख-दुःखयोगित्वात् तद्धेतुभूतं विहितप्रतिषिद्धक्रियाकर्तृत्वभोक्तृत्वमप्यावश्यकम्। स च ज्ञानस्वरूपभिन्नत्वाज्जडः। विप्रतिपत्तौ तु बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्मसंस्कारादिलिङ्गकः। तथा हि। बुद्ध्यादयो नव गुणा अनित्यत्वे सति एकेन्द्रियग्राह्या रूपरसादिवत्। गुणश्च गुण्याश्रित एवेति नियमः। न हि बुद्ध्यादयो भूतानां गुणा वक्तुं शक्यन्ते। मानसप्रत्यक्षत्वात्। न वा भूतानां गुणा मनसा गृह्यन्ते। तथानुभवाभावात्।

नापि दिक्काल-मनसां गुणाः। विशेषगुणत्वात्। ये हि दिगादिगुणाः पञ्च न ते विशेषगुणाः। सर्वद्रव्यसाधारणत्वात्। यस्मादेवं गुणिभावस्यानुभवसिद्धत्वात् तस्मात्सगुण* एवात्मा न निर्गुणः। तत्र मानाभावात्।

न वा मीमांसकमतस्थिद्चिदात्मकः। "अस्थूलमनण्वह्रस्वं" इत्यादि। निरंशत्वप्रतिपादकश्रुतिविरोधात्। निर्गुणत्वप्रतिपादने च प्रमाणाभावात्। एवं प्राभाकरमतेऽपि ज्ञानसुखाद्याश्रयत्वेनैव आत्मसिद्धिरिति। तदुक्तम्।

प्राभाकरास्तार्किकाश्च प्राहुरस्याचिदात्मताम्।
आकाशवद्द्रव्यमात्मा शब्दवत्तद्गुणश्चितिः॥
इच्छा-द्वेष-प्रयत्नाश्च धर्माधर्मौ सुखासुखे।
तत्संस्काराश्च तस्यैते गुणाश्चेति उदीरिताः॥
आत्मनो मनसा योगे स्वादृष्टवशतो गुणाः।
जायन्तेऽथ प्रलीयन्ते सुषुप्ते ऽदृष्टसङ्क्षयात्॥
चितिमत्वाच्चेतनोऽयमिच्छा-द्वेष-प्रयत्नवान्।
स्याद्धर्माधर्मयोः कर्ता भोक्ता दुःखादिमत्त्वतः॥
यथात्र कर्मवशतः कादाचित्कं सुखादिकम्।
तथा लोकान्तरे देहे कर्मणेच्छा विजन्यते॥
एवं च सर्वगस्यापि सम्भवेतागमागमौ।
कर्मकाण्डः समग्रोऽत्र प्रमाणमिति तेऽब्रुवन्॥

---

* अत्रेदमनुसन्धेयम्। न च—"निर्गुणं निष्कलं शान्तं" इत्यादिश्रुतिविरोध—इत्याशङ्क्यम्। निर्गता निष्पन्नाः ज्ञानेच्छादयो गुणा ह्यदृष्टादिवशात् यस्मिन् स निर्गुणः इति व्याख्यानेन विरोधपरिहारः स्यादित्यभिप्रायः।

इति। न च—शरीरेन्द्रिय-मनसां आत्मत्वं सम्भवतीति वाच्यम्। पूर्वमेव दूषितत्वात्। ममकारास्पदत्वेन अनात्मत्वनिश्चयाच्च। न च—ममात्मा-इति प्रतीत्या आत्मनोऽपि तथात्वप्रसङ्ग—इति वाच्यम्। तस्य शरीराद्यभिप्रायेण अविद्वदुच्यमानस्य भ्रमत्वस्वीकारात्। यत्तु वेदान्तिभिरुच्यते—नित्यस्वप्रकाशसुखात्मक एवात्माऽद्वितीयः। श्रुति-सिद्धत्वात्। अतः सर्वशरीरे एक एवात्मा। लाघवात्। नानात्वकल्पने गौरवान्मानाभावाच्च। तथा च श्रुतयः।

विज्ञान[1]घन एवात्मा। अविनाशि वा आरेऽयमात्मा।

एकमेवाद्वितीयं ब्रह्म। नेह नानास्ति किञ्चन।

सत्यं ज्ञानमनन्तं ब्रह्म। विज्ञानमानन्दं ब्रह्म।

—इत्यादि। तदसङ्गतमेव। तर्कविरोधात्। न हि ज्ञानमात्मा वक्तुं शक्यते। गुणत्वात्। द्रव्यत्वाभावाच्च। न च—ज्ञानस्वरूप आत्मा कस्यचिदनुभवसिद्धः। अहं जानामि—इत्यादिप्रतीत्या ज्ञानाश्रयत्वे-नैवानुभवात्। अहं ज्ञानं—इति प्रतीत्यभावाच्च। एते[2]न—पुष्कर-पलाशवन्निर्लेप एवात्मा—इति साङ्ख्य-पातञ्जलस्वीकृतमप्यपास्तम्। ज्ञानस्वरूपत्वस्वीकाराविशेषात्। न च लाघवादेकत्वं युक्तम्। सत्तर्कविरोधात्।

तथा हि। श्रवणमननादिना एकस्य। जीवस्य तत्त्वज्ञाने जाते न कुत्रापि संसार उपलभ्यते। सामग्रीवशादेकस्य सुखोत्पत्तौ

---

१ 'प्रज्ञानघन' इति ख० पुस्तके।

२ 'अत एव' इति क० ग० पुस्तकयोः।

दुःखोत्पत्तौ च सर्वेऽपि सुखिनो दुःखिनो वा स्युः। तस्मात्सर्व-शरीरेष्वेकात्मत्वस्वीकारे न बन्धमोक्षादिव्यवस्थासिद्धिः। गौरवं च फलमुखं न दोषाय[१]। "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादयः श्रुतय-स्त्वीश्वरपरा एवेति न किञ्चिदनुपपन्नमिति। ननु—"सत्यं ज्ञान-मनन्तं ब्रह्म" इत्यादिश्रुतीनां जीव-ब्रह्मैक्यप्रकरणे उपनिषत्सु पठि-तत्वात्कथं केवलमीश्वरपरता? इति चेत्। सत्यम्। अहं कर्ता-अहं भोक्ता-इत्यादिप्रत्यक्षप्रमाणेन बाधात्। तदुक्तम् खण्डनटीकायां वर्धमानोपाध्यायैः।

> बाधव्याधभयोद्विग्ना तवाद्वैतश्रुतिर्मृगी।
> ब्रह्मारण्ये ऽपि विश्वासं कथमासादयिष्यति? ॥

इति न्यायेन जीव-ब्रह्मणोरैक्यानङ्गीकारात्। "नानात्मानो व्यवस्थातः"।

इति गौतमसूत्रविरोधाच्च। ननु तर्हि—"तत्त्वमसि। अहं ब्र-ह्मास्मि। अयमात्मा ब्रह्म। नित्यं ज्ञानमनन्तं[२] ब्रह्म" इत्यादिभि-र्वेदान्तमहावाक्यैरखिलोपनिषद्रहस्यैः प्रतिपादितस्यैक्यस्य अनङ्गी-कारे तव आस्तिकत्वेनाभिमतस्य नास्तिकत्वप्रसङ्गः—इति चेत्। न। स्वमते त्वैक्यस्य भावनापरत्वाङ्गीकारात्। अथ वा—नाहमीश्वर —इत्यादि-प्रत्यक्षेण किञ्चिज्ज्ञत्व-सर्वज्ञत्वपरस्परविरुद्धधर्माश्रयत्व-लिङ्गेन,—

---

१ 'दोषावहं न' इति क० पुस्तके। 'दोषाय न' इति ग० पुस्तके।
२ °मानन्दं ब्रह्म' इति क० पुस्तके।

*द्वा सुपर्णा सुयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥

*इति श्रुत्या—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थो†ऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

इति भगवद्वचनाच्च जीवेश्वरभेदस्यावगतत्वेन चेतनाचेतनत्वेन जीव-जगद्भेदस्य—घटः पटो न भवति—इति प्रतीत्या जगत्प[1]रमेश्वर-भेदस्य च प्रत्यक्षसिद्धत्वात् । तत्त्वमस्यादिवाक्यानि मीमांसकमतवत् "आदित्यो यूपः । यजमानः प्रस्तरः" इत्यादि वाक्यवत् उप-चरितार्थान्येव वा भवन्तु । अत एव जगन्मिथ्यात्वमपि न। अर्थक्रिया-कारित्वेन वैषम्यात् । तस्मात्—

१ 'जगत्परस्परं भिद्यते इति' इति ग० पुस्तके ।

* 'सुपर्णौ' वृक्षात्पक्षिणाविव च देहात्पृथग्भूतौ । सदृशौ चिद्रूपत्वात् । 'सखायौ' अवियोगात् ऐकमत्याच्च । अनिर्वचनीयया मायया वृश्चत इति 'वृक्षः' देहः तम् । तस्मिन् क्षतं नीडं निकेतनं हृदयरूपं याभ्यां तौ । तयोर्मध्ये एकः जीवः । 'पिप्पलं' पिप्पलान्नं पिप्पलोऽश्वत्थो देहः तस्मिन्नदनीयं कर्मफ-लमित्यर्थः । अन्यः ईश्वरः निरन्नः अभोक्तापि निजानन्देन तृप्तः । अभि-चाकशीति देदीप्यमानस्तिष्ठतीत्यर्थः ।

† 'कूटो' यथार्थवस्त्वाच्छादनेन अयथार्थवस्तुप्रकाशनं मायेत्यर्थान्तरम् । तेन आवरण-विक्षेपशक्तिद्वयरूपेण स्थितः कूटस्थः जगन्मायाशक्तिरूप-कारणोपाधिः । संसारबीजत्वेन आनन्त्यादक्षर उच्यते इति सिद्धान्तसम्मता व्याख्या । पूर्वपक्षसम्मता तु कूटस्थो जीव इत्यभिप्राय इत्यर्थः ।

इच्छा-द्वेष[1]-प्रयत्न-सुख-दुःख-ज्ञानान्यात्मनो लिङ्गम्*। [अ० १ आ० १ सू० १०]

इति गौतमसूत्रान्यथानुपपत्त्या ज्ञान-सुखादिविशेषनवगुणाश्रयाः प्रतिशरीरं भिन्ना एवात्मानो मन्तव्याः। अत्रापि तु वैशेषिक-नैय्यायिकयोरस्ति कश्चन विशेषः।

तथा हि। वैशेषिकास्तु—देहेन्द्रियाद्यतिरिक्तं विभुमात्मानं नव-विशेषगुणाश्रयं पूर्वोक्तरीत्या कल्पयन्तो वदन्ति। "द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां षण्णां पदार्थानां साधर्म्य-वैधर्म्याभ्यां यत्तत्त्वज्ञानं तत्पूर्वकादात्मतत्त्वसाक्षात्कारात् ईश्वरोपासनासहितात् नवानां विशेषगुणानां युगपत्प्रागभावासहवृत्तिध्वंस एव आत्मनः कैवल्यम् इति। तत्त्वं त्वनारोपितं रूपम्। तच्चात्मनः पूर्वोक्तविभुत्वा-दिस्वरूपमेव। ज्ञानं त्वसम्भावनादिशङ्काकलङ्कितत्वे सति मानससाक्षा-त्कारवत्त्वम्। तन्मात्रस्यैव[†] मोक्षसाधनत्वात्। तथा च श्रुतिः—

तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।

इति[‡]। तच्च श्रवणाद्यधीनम्। तदुक्तं पूर्वाचार्यैः।

---

१ 'द्वेष' इत्येतत्पदं ख० ग० पुस्तकयोः नास्ति।

२ '०ष ध्यान-' इति ग० पुस्तके।

---

* सूत्रार्थस्तु स्पष्ट एव। इच्छाद्वेषादीनां लक्षणानि वात्स्यायनभाष्यतोऽवगन्तव्यानि। विस्तरभयादत्र नोक्तानि।

† 'तन्मात्रस्य' निर्विकल्पकात्मसाक्षात्कारस्येत्यर्थः।

‡ इति तु प्राञ्चः। नवीनास्तु अन्यथैव श्रुत्यर्थं वर्णयन्ति। तथा हि। 'तमेव' इत्यत्र अन्ययोगव्यवच्छेदार्थक एवकारो न सङ्गच्छते। इतरभिन्न-त्वेनात्मज्ञानस्य मोक्षोपायस्य आत्मत्वप्रकारविषयकत्वात् इतरभेदविष-यकत्वाच्च। तस्मात्तमेवेत्यत्र एवकारो भिन्नक्रमः। तमात्मानं विदित्वैवेत्यर्थः। ज्ञानानन्तरमेव मुक्तिर्नोपायान्तरानन्तरं इति तु फलितम्। इममेवार्थं स्पष्टयति "नान्यः पन्था" इत्याद्यग्रिमः श्रुतिभागः इति।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा ध्या[१]येत सततमेते दर्शनहेतवः॥

इति। श्रवणादौ चाधिकारो भगवदनुगृहीतस्य विरक्तस्यैव। भगवदनुग्रहस्य विना निष्कामकर्मानुष्ठानं न सम्भवति। निष्कामकर्मणि चाधिकारो विदितसंसारतत्त्वस्यैव। संसारतत्त्वज्ञानं च विना वैशेषिकशास्त्राध्ययनं न भवति। तथा च श्रुतिः।

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्*।

इति। तथा सर्वपदार्थज्ञानस्य निःश्रेयसहेतुत्वात् शास्त्र-निःश्रेयसयोर्हेतुहेतुमद्भावः। शास्त्र-तत्त्वज्ञानयोर्व्यापार-व्यापारिभावः। निःश्रेयस-तत्त्वज्ञानयोः कार्य-कारणभावः। द्रव्यादिपदार्थ-शास्त्रयोः प्रतिपाद्य-प्रतिपादकभावः सम्बन्धोऽवगम्यते। एतेषां च सम्बन्धानां ज्ञानान्निःश्रेयसार्थिनां इह शास्त्रे प्रवृत्तिर्भवति। मोक्षमा[२]णास्य मुनेर्गृहीतात्मभावाः शास्त्रे प्रवर्त्तन्ते मोक्षाय। न तु कर्मणि। तत्र अज्ञस्यैव सकामस्य निष्कामस्य वाधिकारात्। न चात्मतत्त्वज्ञानिनामपि विहितेऽधिकारोऽस्तु—इति वाच्यम्। तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तौ तन्मूलीभूतरागादिनिवृत्तौ च कर्माधिकाराभावात्। पूर्वसंस्कार-प्राबल्यात् कर्मणि प्रवृत्त्या अनुष्ठानसम्भवेऽपि नादृष्टोत्पत्तिः।

---

१ '०थ ध्यायेत्' इति ग० पुस्तके।
२ 'मोक्ष्यमाणा०' इति क० पुस्तके।

---

* 'कर्मचितान्' कर्मैर्ज्योतिष्टोमादिभिः प्राप्यान् 'लोकान्' स्वर्गादीन्। पराभ्यसूयादिदोषदूषितान्। ज्ञाता 'ब्राह्मणः' परोक्षब्रह्मसाक्षात्कारवान् मुमुक्षुः। 'निर्वेदं' इहामुत्र फलभोगविरागम्। 'आयात्' प्राप्नुयात्। सर्वत्र विगततृष्णो भवेदित्यर्थः।

अदृष्टहेतुभूतमिथ्याज्ञानस्य तत्त्वज्ञानप्रागभावस्य वा अभावात्। तदुक्तं वाचस्पतिमिश्रैः न्यायभाष्यटीकायाम्।

"मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौ धर्माधर्मौ अङ्कुरं जनयतः" इति[1]।

नैय्यायिकास्तु—"प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जातिनिग्रहस्थानानां" [न्या० द० अ० १ आ० १ सूत्र० १] षोड़शपदार्थानां उद्देश-लक्षण-परीक्षा*भिः "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखाप[2]वर्ग-"। न्या० द० अ० १ आ० १ सू० ९] एतदाख्यद्वादशविधप्रमेयनिष्कर्षणात्मद्वयसाक्षात्कारात् श्रवणमनन-

१ 'इत्यादिना' इति ख० ग० पुस्तकयोः।
२ '०र्गाख्येन द्वादश०' इति क० पुस्तके।

* नाममात्रेण वस्तुसङ्कीर्तनमुद्देशः। लक्षणं त्वसाधारणं धर्मवचनम्। लक्षितस्य एतल्लक्षणमुपपद्यते नवेति विचारः परीक्षा।

† एतद्धि तेषां मतम्। आत्यन्तिकी दुःखनिवृत्तिः पुरुषार्थः। तच्च आत्मद्वयसाक्षात्कारात् भवति। आत्मद्वयसाक्षात्कारस्य साक्षात्परम्परासाधारणप्रत्यासत्त्या। तच्च साक्षात् जीवस्य। परम्परया चेशस्य। जीवस्य हि साक्षात्कारापेक्षा यदाश्रयेत्यादिव्युत्पत्तिमर्यादया। परस्य ईशस्य तु यद्विषयकाज्ञानाद्बन्धस्तज्ज्ञानान्निवृत्तिः—इति न्यायेन। श्रुतिबलाच्च। "आत्मा वाऽरे द्रष्टव्यः" इति सामान्यत आत्मदर्शन-श्रवणादिश्रुतेः। तच्च जीवात्मज्ञानं विपरीतप्रत्ययनिवृत्तिक्षमम्। स्वात्मविशेषकमितरभेदप्रकारकरूपम्। एवमीशविशेष्यकजगत्कर्तृत्वजडभेदादिप्रकारकं परम्परया जीवभेदभ्रम-

निदिध्यासनपूर्वकात् सवासनमिथ्याज्ञाननिवृत्तौ तत्कार्याणां राग-द्वेष-मोहानां निवृत्तिः। ततस्तत्कार्ययोर्धर्माधर्मयोर्निवृत्तिः।

तत्र चायं क्रमः। तौ पुनस्त्रिविधौ। सञ्चितौ क्रियमाणौ प्रारब्धसंज्ञकौ चेति। तत्र च एतच्छरीरारम्भकं प्रारब्धकर्मोच्यते। प्रकर्षेण भोक्तुमारब्धं प्रारब्धमिति व्युत्पत्तेः। तच्च भोगैकनाश्यम्। जीवन्मुक्तिप्रतिपादकशास्त्रानुरोधात्। सञ्चितं तु पूर्वोक्तात्मतत्व-ज्ञानैकनाश्यमेव।

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ॥

इत्यादिभगवद्वचना[१]नुसारेण—इति वेदान्तिनः। तन्न। स्व-मते तु—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥

इति वचनस्य प्रायश्चित्तनाश्यव्यतिरेकेण सङ्कोचे प्रमाणाभावात्। सञ्चितस्यापि कायव्यूहेन भोगादेव नाशः। 'भस्मसात्' पदं तु लाक्षणिकम्। शीघ्रमेव भोगान्नाशं लक्षयतीति। क्रियमाणं च ज्ञानिनो नोत्पद्यत इति।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा।

---

१ '०वचनप्रामाण्येन' इति क० पुके।

---

निवर्तनक्षमम्। तत्र जीवेशयोर्भेदज्ञानाप्रतिबन्ध्यमिच्छाजन्यमहार्यरूपं जीवपराभेदज्ञानमापाततः तत्त्वमसीत्यादिवाक्यजन्यम्। पश्चात्तज्जन्यमना-हार्यभ्रमरूपं फलीभूतं मुक्तिप्रयोजकं भवतीति दिक्।

इति वचनात्* । नन्वेवं योगिभिः क्रियमाणस्य[1] कर्मणो वैयर्थ्यापत्तिः—इति चेत् । न तस्य परलोकसङ्ग्रहार्थत्वात्† । वस्तुतस्तु । "तस्य पुत्रादायमुपयन्ति । सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति श्रुतौ तस्य परार्थत्वं स्फुटमित्यवधेयम् ।

तथा च आत्मतत्त्वज्ञानपूर्वककायव्यूहेन सञ्चितस्य नाशात् भोक्तव्यकर्मान्तराभावाच्च जन्मान्तराभावः । ततो वर्तमानशरीरनाशे च बाधनालक्षणस्य एकविंशतिप्रकारकस्य दुःखस्य मोक्षो ऽपवर्ग इति कल्पयन्ति । अन्यच्च समानम् । तस्मान्निःश्रेयसं नाम आत्यन्तिकी दुःखनिवृत्तिः इति तु उभयसम्मतमिति । दुःखनिवृत्तेश्च आत्यन्तिकत्वं स्वसमानाधिकरणदुःखप्रागभावासमकालीनत्वम् । युगपदुत्पन्नस्वसमानाधिकरणसर्वात्मविशेषगुणध्वंससमकालीनत्वं वा । अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावो वा मुक्तिरिति । न च —प्रागभावस्यासाध्यत्वान्नायं पुरुषार्थ—इति वाच्यम् । कारणविघटनमुखेन प्रागभावस्यापि साध्यत्वात् । न च तस्य प्रागभाव-

---

१ 'क्रियमाणक०' इति ख० पुस्तके ।

---

* अमुमेवार्थं श्रुतयो ऽपि प्रतिपादयन्ति । तथा च । "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवैनं विदित्वा पापं कर्म न श्लिष्यते । न कर्मणा लिप्यते पापकेन । तत्सुकृत-दुष्कृते विधुनुते । एवं ह्वाव न तपति । किमहं साधु नाकरवम् । किमहं पापमकरवम्" इत्यादयः श्रुतयो ऽस्मिन्नर्थे प्रमाणम् ।

† बलवत्तरप्रारब्धवशात् वृथा चेष्टारूपत्वाद्वा परार्थत्वाभावाद्वेत्यादीनपि हेतून् केचन स्वीकुर्वन्ति योगिनां कर्मकरणे ।

पत्तिः। प्रतियोगिजनकत्वाभावेन प्रागभावत्वस्वीकारात्। जनकत्वं च स्वरूपयोग्यतामात्रम्। न हि प्रागभावश्चरमसामग्री। येन तस्मिन् सति कार्यमवश्यं भवेत्। तथा सति कार्यस्याप्यनादित्वप्रसङ्गात्। यथा च सहकारिविरहादियन्तं कालं नाजीजनत्। तथा ऽग्रे ऽपि तद्विरहान्न जनयिष्यति। हेतूच्छेदे पुरुषव्यापारात्—इत्यस्यापि प्रागभावपरिपालन एव तात्पर्यम्। अत एव गौतमीये[1] सूत्रे—

दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः* [अ, १। आ. १। सू. २]

इत्यत्र कारणाभावात्कार्याभावाभिधानं दुःखप्रागभावरूपामेव मुक्तिं दृढयति। न हि—दोषापाये प्रवृत्त्यपायः, प्रवृत्त्यपाये जन्मापायः, जन्मापाये दुःखापाय—इति। अपायो ध्वंसः। किन्त्वनुपपत्तिः। सा च प्रागभाव एव। न च प्रतियोग्यप्रसिद्धिः। सामान्यतो दुःखत्वेनैव प्रतियोगप्रसिद्धेः। प्रायश्चित्तवत्। तत्रापि हि प्रत्यवायध्वंसद्वारा दुःखानुत्पत्तेरेवापेक्षितत्वात्। लोके ऽप्यहिकण्टकादिनिवृत्तेः दुःखानुत्पत्तिफलकत्वदर्शनात्। दुःखसाधननिवृत्त्यर्थमेव हि प्रेक्षावतां प्रवृत्तिः।

---

१ 'द्वितीयसूत्रे' इति क. पुस्तकेऽधिकम्।

---

* अस्यायमर्थः। तत्त्वज्ञानेन विरोधितया अपहृते मिथ्याज्ञाने, कारणाभावाच्च निवृत्ते रागद्वेषात्मके दोषे, तदभावाच्च प्रवृत्तेः धर्माधर्मात्मिकाया अनुत्पत्तौ, तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धाभावे, दुःखाभावादपवर्गो भवतीति तात्पर्यम्।

केचित्तु—'दुःखात्यन्ताभाव एव मुक्तिः। स च यद्यपि नात्मनिष्ठः तथापि लोष्टादिनिष्ठ एवात्मनि साध्यते। सिद्धस्य तस्य दुःखध्वंस एव। तस्य तत्सम्बन्धितयोपगमात्। तस्मिन् सति तत्र दुःखात्यन्ताभावप्रतीतेः। एवं च सति "दुःखेनात्यन्तं विमुक्तश्चरति" इत्यादिश्रुतिरप्युपपादिता भवति—इत्याहुः तन्न। दुःखात्यन्ताभावस्यासाध्यत्वेन अपुरुषार्थत्वात्। दुःखध्वंसस्य च तत्सम्बन्धित्वे परिभाषामात्रापत्तेः। "दुःखेनात्यन्तं विमुक्तश्चरति" इति श्रुतेः दुःखप्रागभावस्यैव कारणविघटनमुखेनात्यन्ताभावसमानरूपत्वे तात्पर्यात्।

ननु—अयं न पुरुषार्थः। निरुपाधीच्छाविषयत्वाभावात्। दुःखाभावकाले सुखं तावन्नोत्पद्यत इति सुखार्थिनां दुःखात्यन्ताभावे प्रवृत्त्यनुपपत्तेः—इति चेत्। न। वैपरीत्यस्यापि सुवचत्वात्। सुखेच्छापि दुःखाभावोपाधिकी—इत्येव किं न स्यात्? शोकाकुलानां सुखविमुखानामपि दुःखाभावमात्रमभिसन्धाय विषोद्बन्धनादौ प्रवृत्तिदर्शनात्।

ननु—पुरुषार्थो ऽप्ययं ज्ञायमान एव वक्तव्यः। मुक्तेस्तु दुःखाभावरूपाया ज्ञायमानतैव नास्ति। अन्यथा मूर्च्छाद्यवस्थार्थमपि प्रवृत्तेः—इति चेत्। न। श्रुत्यनुमानाभ्यां ज्ञायमानत्वस्य प्रतिपादनात्। अस्ति हि श्रुतिः।

"दुखेनात्यन्तं निमुक्तश्चरति" इति। "तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्यते ऽयनाय"।

इति। अनुमानं च—दुःखसन्ततिरत्यन्तं विच्छिद्यते, सन्ततित्वात्

प्रदीपसन्ततिवत्—इति। चरमदुःखध्वंसस्य दुःखसाक्षात्कारमात्रेण विषयीकरणात् प्रत्यक्षवेद्यतापि। योगिनां योगजधर्मत्वेनागामिनोऽपि दुःखध्वंसस्य प्रत्यक्षतोऽपगमाच्च। ननु तथापि तुल्यायव्ययतया नायं पुरुषार्थः। दुःखवत् सुखस्यापि हानेः द्वयोरपि समानसामग्रीकत्वात्—इति चेत्। न। वीतरागाणां दुःखदुर्दिनभीरूणां सुखखद्योतिकामात्रे ऽसम्प्रत्ययवतां तत्र प्रवृत्तेः। ननु—तथापि न दुःखनिवृत्तिः पुरुषार्थः। अनागतदुःखनिवृत्तेरशक्यत्वात्। अतीतस्य चातीतत्वात्। वर्तमानस्य च पुरुषप्रयत्नमन्तरेणैव निवृत्तेः—इति चेत्। न। हेतूच्छेदे पुरुषव्यापाराभ्युपगमात्। प्रायश्चित्तवत्।

तथा हि सवासनं मिथ्याज्ञानं संसारहेतुः। तदुच्छेदश्चात्मतत्त्वज्ञानात् इत्यादिपूर्वमेव प्रतिपादितम्। उक्तं च न्यायभाष्ये—"शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोऽपवर्गः।

"बक्र[1]च्च कृच्छ्रं घोरं पापकं लुप्यते" इति।

"कश्च[2] बुद्धिमान् सर्वदुःखोच्छेदं सर्वदुःखासंविदमपवर्गं न रोचयेत्" इति।

"यथा[3] मधुविषसम्पृक्तान्नमनादेय[4]मित्येवं सुखं दुःखानुषक्तमनादेयं"।

इति। एतेन यत्तु वेदान्तिनः—वस्तुतो ब्रह्माद्वैतसाक्षात्कारादविद्या-

---

१ 'बक्र च' इति कलिकातामुद्रितन्यायभाष्यपुस्तके दृश्यते।
२ 'कथं' इति क. मु. पु. पाठः।
३ 'तद्यथा' इति क. मु. पु. पाठः।
४ '०देयमिति एवं' इति क. मु. पु. पाठः।

निवृत्तौ विज्ञानसुखात्मकः केवलात्मापवर्गे वर्तते—इति वदन्ति तदप्यपास्तम्। स्वप्रकाशसुखात्मकस्य ब्रह्मणो नित्यतया मुक्त-संसारिणोरविशेषात्। पुरुषप्रयत्नं विनापि तत्सत्त्वेन तस्यापुरुषार्थत्वात् च। अविद्यानिवृत्तिमात्रस्य च प्रवृत्तिसाध्यत्वे ऽप्यविद्यानिवृत्तेर्निरूपयितुमशक्यत्वात्।

तथा हि। अविद्यानिवृत्तिः किं आत्मरूपा तदतिरिक्ता वा? आद्ये असाध्यत्वापत्तिः। द्वितीये ऽपि किं मिथ्या, सती वा? आद्ये[1] अविद्यातत्कार्यान्यतरापत्तिः। अन्त्ये[2] अद्वैतहानिः। किञ्च। शब्दगम्यस्य ब्रह्मणः सत्यत्वे शब्दयोग्यतायाः शाब्दधीप्रामाण्यस्य सत्यत्वं वक्तव्यम्। तथा च ब्रह्मातिरिक्तसत्यवस्तुसत्त्वेन द्वैतावश्यम्भाव इति वियदादिप्रपञ्चो ऽपि सत्य एवास्तु इति अद्वैतसत्यत्वापत्तेश्च। आत्मनो ज्ञानसुखात्मकत्वे मानाभावाच्च। न च—"नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिर्मानं—इति वाच्यम्! उत्पत्तिविनाशवतोर्ज्ञानसुखयोः अहं जाने-अहं सुखी—इति स्वभिन्नत्वेनानुभूयमानयोः ब्रह्माभिन्नसाधने प्रत्यक्षबाधात्! "आनन्दं ब्रह्म" इति श्रुत्या मत्वर्थीयाच्प्रत्ययान्तत्वेन आनन्दवत्त्वं ब्राह्मणो बोध्यते। नाभेदः। अन्यथा जहल्लिङ्गानन्दशब्दस्य नपुंसकत्वानुपपत्तिः। न च—लिङ्गव्यत्ययः छान्दसत्वेनाप्युपपद्यते—इति वाच्यम्। मानाभावात्। एवं त्रिदण्डिनां मीमांसकानां च मते ऽपि मुक्तेर्वक्ष्यमाणदूषणग्रस्तत्वाच्चानादरणीयत्वमेवेति दिक्।




१ क. पुस्तके 'प्रथमे' इति।
२ 'द्वितीये' इति क. पु.।

तस्माद्वैशेषिकादिमहानुभावप्रतिपादितप्रक्रियया गुरुशब्दाभिधेयस्य सत्यत्वसिद्धौ न घट्टकुटीप्रभातवृत्तान्तन्यायेन—शिरसि मुद्गरप्रहार उचितः—इति चेत्। नैतत्सारम्। तस्य[1] शास्त्रस्य बाललालनार्थत्वात्। असत्कार्यवादासम्भववत् ज्ञानात्मनोर्गुणगुणिभावस्यात्मनानात्वस्वीकारस्य च श्रुति-स्मृति-युक्त्यनुभवविरोधात्।

तथा हि। ज्ञानं किमात्मनो भिन्नमभिन्नं वा भिन्नाभिन्नं वा? नाद्यः। घटवद्धर्म-धर्मिभावानुपपत्तेः। ननु—घटादिरसम्बद्धत्वादात्मधर्मो न भवति। ज्ञानं तु आत्मसम्बन्धीति युक्त एव धर्म-धर्मिभावः—इति चेत्। न। सम्बन्धस्य सर्वज्ञेनापि निरूपयितुमशक्यत्वात्।

तथा हि। सम्बन्धः किं संयोगो वा तादात्म्यं वा? समवायो वा? नाद्यः। द्रव्ययोरेव संयोगस्वीकारात्। आत्मनस्तव मते द्रव्यत्वेऽपि ज्ञानस्य गुणत्वात्। न द्वितीयः। मीमांसकसम्मतत्वेऽपि तवानङ्गीकारात्। न तृतीयः सर्वथाऽसम्भवात्।

तथा हि। समवायः किं समवायिनि सम्बन्धान्तरेण सम्बद्धः? उत असम्बद्धः? सम्बद्धे तु तस्यापि सम्बन्धान्तरं वाच्यम्। एवं तस्यापि इति स्फुटैव अनवस्था। असम्बद्धे तु स्वस्यैवासिद्ध्या कथं स्वातिरिक्तयोः धर्म-धर्मितासिद्धिः। न च—समवायस्य न सम्बन्धान्तरेण सम्बद्धता, किन्तु स्वेनैव रूपेण—इति वाच्यम्। स्वरूपसम्बन्धोऽपि किं समवायादतिरिक्तः तत्स्वरूपो वा? आद्ये कथं नानवस्था? द्वितीये स्वस्य स्वप्रतियोगिकसम्बन्धत्वासम्भवात्। स्वं न

---

१ 'अस्य' इति ख. पुस्तके।

स्वीयं—इत्यनुभवेन बाधाच्च । स्वयमेव सम्बन्धत्वेन चात्माश्रयत्वात्[1] । प्रथममुद्गरे समवायस्य विस्तरेण निराकृतत्वाच्च ।

अथ प्रतीतिबलात्तदखण्डं स्वीक्रियते—इति चेत् । न । असम्बद्धया प्रतीत्या विषयासिद्धेः । ननु—विषय-विषयिभावसम्बन्धेन विषयसम्बद्धाप्रतीतिः—इति चेत् । न । घटविषयकज्ञानेन यो घटस्य सम्बन्धः स किं तेनैव गृह्यते अन्येन वा ? आद्ये तेन स्वमविषयीकुर्वता कथं स्वस्य विषयेण सह सम्बन्धो गृह्यते ? सम्बन्धज्ञानस्य सम्बन्धिद्वयगोचरत्वनियमात् । अन्यथा सम्बन्ध इत्येव गृह्येत । न तु अस्य अनेन सम्बन्ध इति । तादृक् ग्रहे च नोभयित्वसिद्धिः । न चोभयित्वग्राहकमानशून्यः सम्बन्धो ऽस्ति । अथ—स्वं विषयीकुर्वता स्वस्य विषयसम्बन्धो गृह्यताम्—इति चेत् । न । आत्माश्रयात् । स्वस्य स्वविषयत्वे मानाभावात् ।

ननु—स्वयमेव स्वस्य स्वविषयत्वे मानं—इति चेत् । न । विषयत्वस्य स्वानतिरिक्तत्वे—स्वस्य स्वं विषय-इति वाक्यस्य स्वमित्यर्थः । तथाच उद्देश्याऽसिद्धेः । विषयत्वस्य स्वातिरेकेण घटेनेव तेन समं विषयिविषयभावे मानाभावाच्च ! एतेन प्राभाकरवल्गितं ज्ञानस्य स्वप्रकाशत्वमपि निरस्तम् । द्वितीये तु स्फुटैवानवस्था इति दिक् ।

तस्माद्भिन्नत्वपक्षे ज्ञानात्मनोर्गुण-गुणिभावो नोपपद्यते । द्वितीये भिन्नपक्षे तु ज्ञानस्य आत्मस्वरूपत्वेन सुतरां धर्मधर्मिभावानुप-

---

१ '०श्रयात्' इति क० पुस्तके ।

पत्तिः । न हि तस्य तदेव धर्मी भवति । न हि शुक्लः शुक्लस्य धर्मी दृष्टः । नापि तृतीयो भिन्नाभिन्नत्वपक्षः । परस्परविरोधात् । न हि एकमेवैकदा एकस्मिन् एकस्माद्भिन्नमभिन्नं वा भवितुमर्हति । विरोधात् । अथोच्येत—प्रत्यक्षसिद्धत्वाद्भेदाभेदौ न विरुद्धौ । यथा—गौरयं—इति पिण्डादव्यतिरेकेण गोत्वं प्रतीयते । तदेव च पिण्डान्तरे प्रत्यभिज्ञायमानत्वाद्भेदेनावगम्यते । अतः प्रत्यक्षेणैव भेदाभेदयोः प्रतीयमानत्वात् क्व विवादः ?—इति चेत् । न । प्रत्यक्षस्यान्यथासिद्धत्वात् । भिन्नमपि हि वस्तु प्रत्यक्षेणात्यन्तसन्निधानादिदोषेणाभिन्नवत् प्रतीयते । यथा दीपज्वाला भिन्नापि कुतश्चित्कारणादभिन्नवत्प्रतीयते । यथा वा एकस्माच्चन्द्राद् द्वितीयश्चन्द्र इति । अतः प्रत्यक्षस्यान्यथासिद्धत्वात् न तेन प्रमाणसिद्धस्य भेदाभेदविरोधस्य निराकरणं सम्भवतीति ।

अथैवमुच्येत—चैतन्यस्य द्वे रूपे स्तः । आत्मस्वरूपता चैतन्यस्वरूपता चेति । तत्र आत्मस्वरूपतया आत्मनो न भिद्यते । भिद्यते च चैतन्यरूपतया । अतो भिन्नाभिन्नाभ्यां रूपाभ्यां भिन्नाभिन्नत्वमविरुद्धम्—इति चेत् । न । अत्रापि धर्मिधर्मभावस्य सम्पायितुमशक्यत्वात् ।

तथा हि । येन रूपेण तदभिन्नं न तेन रूपेण धर्मिभिन्नम् अभिन्नत्वादात्मैव । येन रूपेण भिन्नं न तेन रूपेणापि धर्मित्वम् । भिन्नत्वात् घटादिवत् इत्युक्तं प्राक् । यच्चोक्तं रूपाभ्यां भिन्नाभिन्नत्वमविरुद्धमिति तदपि न युक्तिमत् । ते रूपे किं चैतन्याद्भिन्ने अभिन्ने वा ? भिन्नाभिन्ने वा ? । न तावद्भिन्ने पूर्वोक्तदोषा-

पत्तेः । एवमभिन्ने भिन्नाभिन्ने ऽपि बोद्धव्यम्[1] । तयोरपि रूपान्तराभ्यां भिन्नाभिन्नाभ्यां भिन्नाभिन्नत्वाभ्युपगमे ऽनवस्थापातात् । अग्रे विस्तरेण भेदाभेदवादिनं[2] प्रति निराकार्यमाणत्वाच्च अलं मृतमारणेनेति । तस्मान्नात्मा सर्वथा ज्ञानाश्रयः । किन्तु ज्ञानस्वरूप एव । एतेन सदानन्दयोरप्यात्मस्वरूपत्वं व्याख्यातम् । अनेनैव च 'आत्मत्वसामान्यवान् न आत्मा' इत्यादिलक्षणमप्यपास्तम्* ।

एवं गुण-गुणिभावस्य दुर्निरूपत्ववदात्मनानात्वस्वीकारस्यापि दुर्निरूपत्वमेव । युक्तिविरोधात् । श्रुतिविरोधाच्च ।




१ नास्तीदं वाक्यं क. ग. पुस्तकयोः ।

२ 'भेदस्य अभेदस्य च वादिनं' इति क. पुस्तके ।

* अत एव अद्वैतमकरन्दे ऽप्युक्तम् ।

जडाजडविभागोऽयं चेतने मयि कल्पितः ।
भित्तिभागे समे चित्रचराचरविभागवत् ॥
चेतोपरागरूपा मे साक्षितापि न तात्त्विकी ।
उपलक्षणमेवैतन्निस्तरङ्गचिदम्बुधेः ॥
स्वरूपमेव मे सत्त्वं न तु धर्मो नभस्त्ववत् ।
मदन्यस्य सतोऽभावान्न हि सा जातिरिष्यते ॥
स्वरूपमेव मे ज्ञानं न गुणः सगुणो यदि ।
अनात्मत्वमसत्त्वं च ज्ञेयाज्ञेयत्वयोः पतेत् ॥
तथाप्याभातिकोऽप्येषः विचाराभावभावतः ।
अपश्यामि चिदाकाशे विचारार्कोदयावधि ॥

तथा हि। एकस्य पुरुषस्य सुखादिसामग्र्या उत्पद्यमान-सुखादि कथं सर्वैर्नानुभूयते। सर्वेषां जीवानां विभुत्वेन सर्वशरीरान्तर्भावाविशेषात्। अथ—यस्य कार्यकारणसङ्घातः तस्यैव सुखादिर्नान्यस्येति नियम—इति चेत्। न। तस्यापि सर्वात्मसन्निधावुत्पद्यमानस्य विशेषहेतोरभावात् कथमेकात्मसम्बन्धित्वम्!। अथ—यत्कर्मवशात् शरीरमुत्पन्नं तत्तस्य इति नियमः—इति चेत्। न। कर्मणो ऽपि देहेन्द्रियादिव्यापारद्वारा उत्पद्यमानस्य सर्वात्मसन्निधौ सर्वात्मसम्बन्धाविशेषात्। अथ—देहेन्द्रियादिव्यापारस्य साधारण्ये ऽपि विजातीयात्ममनःसम्बन्धस्य असाधारण्यम्—इति चेत्। न। तस्यापि सर्वान्प्रत्यविशेषात्। अथ—स्वकीयमनःसम्बन्धो भेदनियामकः—इति चेत्। न। सर्वदा सर्वात्मसंयुक्तं मनः कस्यचिदेव नान्यस्य इति वक्तु-

---

विज्ञानविरतिः सुप्तिस्तज्जन्म स्वप्न-जागरौ॥
तस्माद्विज्ञाः कथं मे स्युर्नित्यज्ञानस्य ते त्रयः।
अहमस्मि सदा भामि कदाचिन्नाहमप्रियः।
ब्रह्मैवाहमतः सिद्धं सच्चिदानन्दमद्वयम्॥

इत्यादिग्रन्थेन। एतेन—विजानातीति व्युत्पत्त्या विज्ञानमस्येति व्युत्पत्त्या वा 'विज्ञानम्' इति कर्तरि ल्युडङ्गीकारेण च नित्यज्ञानवत्त्वलाभः। एवमानन्दो ऽस्यास्तीति मत्वर्थीयाच्प्रत्ययेन आनन्दवत्त्वलाभश्च। अन्यथा नपुंसकलिङ्गानुपपत्तेः—इत्यादि तार्किकवल्गितमपास्तं वेदितव्यम्। "आनन्दो ब्रह्मेति व्यजानात्। केवलो निर्गुणश्च। चिद्रूप एवाविकारो ह्युपलब्धा नित्यशुद्धो बुद्धः परः प्रत्यगेकरसः" इत्याद्यनेकश्रुति-स्मृतिविरोधस्य प्रत्यक्षसिद्धत्वात्। लिङ्गव्यत्ययस्य श्रौतत्वेनाप्युपपत्तेरिति दिक्।

मन्यैक्यत्वात्[1]* । वक्ष्यमाण "तत्त्वमसि। अहं ब्रह्मास्मि। अयमात्मा ब्रह्म। सत्यं ज्ञानमनन्तं ब्रह्म। विज्ञानमानन्दं ब्रह्म। आकाशवत्-सर्वगतश्च नित्यः। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः। निष्क्रियं निर्गुणं शान्तं निर्विकल्पं निरञ्जनम्"† इत्यादिश्रुतिविरोधश्च। तस्मादात्मनानात्वस्वीकारे ऽपि न सुख-दुःख-बन्ध-मोक्षादिव्यवस्था-सिद्धिः। कथंचिदुपपादने च "सदेव सौम्येदमग्र आसीत्‡। एक-मेवाद्वितीयं ब्रह्म। नेह नानास्ति किञ्चन"। इति श्रुत्यनुरोधाल्ला-घवाच्च नित्य-शुद्ध-बुद्ध-मुक्तस्वभावात्मैकत्वमङ्गीकर्तव्यम्।

---

१ '०दिति दिक्' इति अधिकं ग. पुस्तके।

---

* न च—सुख-दुःखादिवैचित्र्यान्यथानुपपत्तिरेव भेदनियामिका—इति वाच्यम्। वक्ष्यमाणान्तःकरणभेदरूपोपाधिभेदेनाप्युपपत्तेः। यथा च केषांचिन् मते—श्रोत्रैक्येऽपि तत्तत्कर्णशष्कुल्युपाधिभेदेन शब्दग्रहव्यवस्था तथैवात्र उपाधिभेदेनेति ज्ञेयम्।

† अज्यते अनेन इति अञ्जनम् उपाधिः। तन्निवर्तकं तद्रहितं वा निरञ्जनम्। निरुपाधिकमित्यर्थः।

‡ 'इदम्' इदङ्कारास्पदत्वेन गृह्यमाणमखिलं स्वात्मातिरिक्तं जगत्। 'अग्रे' उत्पत्तेः प्राक्। 'सदेव' सत्स्वरूपं ब्रह्मैव आसीत्। 'सौम्य' प्रियदर्शन। 'एकम्' तार्किकादिस्वीकृतात्मनानात्वरूपसजातीयभेदशून्यम्। 'अद्वितीयम्' तैरेव स्वीकृतविजातीयपरमाण्वाकाशादिशून्यम्। 'एव' सजातीयविजातीयाभावशून्यम्। निर्धर्मकमखण्डं ब्रह्मेत्यर्थः। 'आसीत्' इति कालवासनावासितं शिष्यं प्रत्येव। न तु वस्तुतः। स्वमते ब्रह्मातिरि-क्तस्य। कल्पितत्वस्वीकारात्।

ननु—अस्तु श्रुतिलाघवाभ्यामात्मैकत्वम् । तथापि सुखदुःख-बन्ध-मोक्षादिव्यवस्था तवापि दुरुपपादैव—इति चेत् । न । सुखदुःखाद्याश्रयीभूतान्तःकरणभेदात् ।

इन्द्रोमायाभिः पुरुरूप ईयते ।

इत्यादिश्रुत्युक्ताविद्याभेदाद्वा सर्वव्यवस्थोपपत्तेः । नन्वस्त्वविद्याभेदाज्जीवभेदव्यवहारः । तथाप्यन्तःकरणस्य मनसो निरवयवत्वात् अणुरूपत्वाच्च कथं सुखदुःखादिरूपेण परिणामः— ? इति चेत् । शृणु । न तावदन्तःकरणं निरवयवम् सादिद्रव्यत्वेन सावयवत्वात् । सादित्वं च अस्मन्मते—"तन्मनो ऽसृजत्" इति श्रुतिसिद्धम् । तच्चाग्रे चतुर्थमुद्गरे विस्तरेण सृष्टिप्रक्रियायां वक्ष्यमाणम् । न च—तर्हि अनित्यत्वप्रसङ्गः—इति वाच्यम् । ब्रह्मातिरिक्तस्य कल्पितत्वाभ्युपगमेन इष्टत्वात् । सावयवत्वादेव च कामसङ्कल्पादिरूपेण परिणामित्वं सम्भवति । तथाच श्रुतिः ।

कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा ह्रीर्भीर्धीरित्येतत्सर्वं मन एव ।

इति । मनसः परिणाम एव इत्यभेदेन कार्यकारणभावो मृद्घटवत् ।

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय* ।

---

* 'रूपं रूपं' अन्तःकरणमन्तःकरणं प्रति । 'प्रतिरूपः' प्रतिबिम्बरूपः 'बभूव' जातः । किमर्थं तर्हि । 'प्रतिचक्षणाय' अहमिति व्यवहाराय इति योजनीयम् ।

इति। अथ 'मन एव' इति वाक्यस्यायथार्थसम्भवो ऽपि सुवचः। तथा हि। आत्ममनःसंयोगेन आत्मन्येव कामादिः—इति चेत्। न। "स यत्तत्पश्यति शृणोति जिघ्रति" इत्याद्यनन्वागतः। तेन भगवति "असङ्गो ह्ययमात्मा" इत्यादिवाक्यार्थान्यथानुपपत्त्या पूर्ववाक्यस्यात्मपरत्वकल्पने मानाभावात्। तदुक्तं वार्तिककृद्भिः।

यत्र यद् दृश्यते द्रष्टा जाग्रत्स्वप्न-सुषुप्तिषु।
तत्रैव तन्नेतरत्रेत्यनुभूतिर्हि सम्मता॥
स यत्तत्रेक्षते किञ्चित्तेनाऽनन्वागतो भवेत्।
दृष्ट्वैव पापं पुण्यं चेत्येवं श्रुतिषु डिण्डिमः॥

इति। भगवद्वाक्यं च।

इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।
एतद् क्षेत्रं समासेन सविकारमुदाहृतम्॥

इति। किञ्च। न केवलं[1] श्रुतिप्रमाणत एव अन्तःकरणस्य सावयवत्वेन मध्यमपरिमाणवत्त्वम्। अपि तु। लाघवतर्केणापि। अन्तःकरणस्य तावत्सुख-दुःखादौ जनकत्वमुभयवादिसम्मतम्। तत्र त्वत्सम्मतसमवायिकारणस्यैव उचितत्वाच्चक्षुरादिवन्मनसो मध्यमपरिमाणवत्त्वमनुमीयते। न च—अणुत्वानुमाने किञ्चिल्लिङ्गमस्ति। नापि नित्येन्द्रियत्वाच्छ्रोत्रवद्विभुत्वानुमानं प्राभाकरसम्मतम्। नित्यत्वस्यैवासिद्धत्वात्।

"एतस्मादात्मन आकाशः सम्भूतः"

इत्यादिश्रुत्या आकाशस्यापि नित्यत्वाभावेन तत्कार्यश्रोत्रस्य

---

१ ख० पुस्तके तु 'किञ्चान्तःकरणस्य सुख-दुःखादौ जनकत्वं' इति पाठः।

सुतरां नित्यत्वाभावात्। अतएव जन्यस्य विभुत्वाभावात् मध्यमपरिमाणत्वानुमानस्य श्रोत्रे न व्यभिचारः। यदिन्द्रियं यद्गुणग्राहकं तदिन्द्रियं तद्गुणवत् इति व्याप्तिः। यथा चक्षुरादेः स्वग्राह्यगुणवद्भूतारभ्यत्वं साध्यते तथा मनसो ऽपि पञ्चभूतगुणग्राहकत्वेन तद्वत्त्वनिश्चयात् स्वग्राह्यगुणवत्पञ्चभूतारभ्यत्वम्। साध्यताविशेषाभावात्। न च विजातीयानामनारम्भकत्वं विशेषः। सुवर्णसूत्रैः पट्टसूत्रैश्च कार्पाससूत्रैश्च विजातीयैरेकपटारम्भदर्शनात्। तत्र अवयव्यनङ्गीकारे ऽन्यत्रापि तथानङ्गीकारसम्भवादवयविनो दत्तजलाञ्जलित्वप्रसङ्गात्। तस्मादपञ्चीकृतवक्ष्यमाणपञ्चमहाभूतारभ्यं सत्वप्रधानं सङ्कोचविकासशालि स्वच्छं द्रव्यं चक्षुर्वन्मूर्तद्रव्याभिघातयोग्यं देहपरिमाणपरिमितं मनो ऽभ्युपगन्तव्यम्*। सिद्धान्ते सुख-दुःखेच्छा-ज्ञानादीनां तदाश्रयत्वाभ्युपगमात्। तेषां च सर्वशरीरव्याप्तित्वेनोपलम्भात्। तदाश्रयस्य मनसो ऽपि सर्वशरीरव्यापित्वात्। अथाणुत्वाभावे युगपत्सर्वेन्द्रियसम्बन्धसम्भवाद्युगपन्नानाज्ञानोत्पत्तिप्रसङ्गः—इति चेत्। सत्यम्। एकेनेन्द्रियेणैकमेव ज्ञानं जन्यते इति नियमस्तावदावयोः समानः। अन्यथा युगपच्चाक्षुषज्ञानद्वययोरुत्पत्तिः किं न स्यात्। नानेन्द्रियजज्ञानानां तु युगपदुत्पत्तिरिष्यत एव दीर्घशष्कुलीं भक्षयतः शब्दस्पर्श-रूप-रस-गन्धानां युगपदनुभवात्। सुषुप्त्यन्यथा-

---

* अत्र पाश्चात्यैरभिधीयते। 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इति। एककाले ज्ञानानामनुत्पत्तिर्यतः स एव धर्मो मनसो लिङ्गम्। जीवात्मनो युगपन्नानाज्ञानधारणे स्वाभाविकी काचिच्छक्तिर्विद्यते। तद्विशिष्ट आत्मा मनःपदेन व्यवह्रियते इत्यादि।

नुपपत्त्या त्वङ्मनःसंयोगस्य ज्ञानमात्रकारणत्वेन त्वयाभ्युपगमात्। रसनावच्छिन्नत्वङ्मनःसंयुक्तस्य गुडस्य युगपद्रसस्पर्शोपलम्भः तवापि दुर्वारः। तस्मान्नास्मदभ्युपगते मनसि श्रुति-स्मृति-न्यायसिद्धे विमतिः सम्भवति। एतेन पूर्वोक्तं मनसो ऽणुत्वं तार्किकसम्मतं वक्ष्यमाणमीमांसकसम्मतं विभुत्वं च निरस्तम्।

ननु—कामादेरन्तःकरणधर्मत्वे 'अहमिच्छामि, अहं जानामि, अहं बिभेमि' इत्याद्यनुभवो आत्मधर्मत्वमवगाहमानः कथमुपपद्यते?—इति चेत्। शृणु। अयःपिण्डस्य दग्धृत्वाभावे ऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासेन यथा अयो दहतीति व्यवहारः। तथा सुखदुःखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासात् 'अहं सुखी' इत्यादिव्यवहारः। विस्तरस्तु स्वरूपप्रकाशे द्वितीयपरिच्छेदे ऽनुसन्धेय इति। ननु—तथापि अन्तःकरणस्य इन्द्रियतया अतीन्द्रियत्वात् कथं प्रत्यक्षविषयत्वम्?—इति चेत्। मैवम्। न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति। न च—"मनःषष्ठानीन्द्रियाणि" इति भगवद्वचनं प्रमाणमस्ति—इति वाच्यम्। अनिन्द्रियेणापि मनसा षट्त्वसङ्ख्यापूरणाविरोधात्। न हि इन्द्रियगतसङ्ख्यापूरणमिन्द्रियेणैवेति नियमः।

वेदानध्यापयामास महाभारतपञ्चमान्।

इत्यादाविव तद्गतपञ्चत्वसङ्ख्याया अवेदेनापि भारतेन पूरणदर्शनात्।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरा[1]त्मा महान्परः॥

---

१ 'यो बुद्धेः परतस्तु सः' इति क० पुस्तके।

महतः परमव्यक्तमव्यक्तात्पुरुषः परः।

पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः* ॥

इत्यादि श्रुत्या मनसोऽनिन्द्रियत्वाभ्युपगमाच्चेति सर्वमनवद्यम्।

## इति मनसोऽनिन्द्रियत्वप्रतिपादनम्।

ननु—मनसोऽनिन्द्रियत्वाभ्युपगमे सुखादिप्रत्यक्षस्य न स्यात्। इन्द्रियजन्यत्वाभावात्—इति चेत्। न। ईश्वरज्ञाने व्यभिचारात्। अनुमित्यादेरपि मनोजन्यतया साक्षात्कारत्वापत्तेश्च। तस्मात्सिद्धं कर्तृत्वभोक्तृत्वादीनामन्तःकरणाश्रयत्वम्। न तु नित्यस्य विभोरात्मनः। तस्याद्वितीयत्वेन निर्गुणत्वात्। तथा च श्रुतयः। "निर्गुणं निष्कलं" इत्यादि।

यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना† बहुधैकोऽनुगच्छन्।

उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥

---

* एवमिदं व्याख्येयम्। 'बुद्धेः' अस्मदादिव्यष्टिबुद्धेः सकाशात्। 'महानात्मा' समष्टिबुद्धिरूपः। 'परः'—

मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः।

इति वायुपुराणवचनात् मनो-महदादिभ्यः परः। 'महतः' हैरण्यगर्भ्याः बुद्धेः। 'परमव्यक्तं' अव्याकृतं सर्वजगद्बीजं मायाख्यम्।

मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम्।

इति श्रुतेः। "तद्धेदं तर्ह्यव्याकृतमासीत्" इति च। अव्यक्तात्सकाशात्सकलजडवर्गप्रकाशकः। 'पुरुषः' पूर्ण आत्मा। 'परः' उत्कृष्टः। तस्मादपि कश्चिदन्यः परः स्यादत आह। 'पुरुषान्न परं किञ्चित्' पुरुषात्सकाशात्किञ्चिदपि परं नास्ति। कुत एवं यस्मात् 'सा काष्ठा' समाप्तिः सर्वाधिष्ठानत्वात्। 'सा परा गतिः' तत् निरतिशयं स्थानम्। "सोऽध्वनः पारमाप्नोति। तद्विष्णोः परमं पदं" इत्यादि श्रुतिप्रसिद्धा परा गतिरपि सैव इत्यर्थः।

† 'अपो भिन्ना' अप्सु भिन्नासु इत्यर्थः।

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥

इति। स्मृतिश्च।

एक एव तु भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

इति। न च पूर्वोक्तगौतमसूत्रविरोधः। तस्य यावद्ब्रह्मज्ञानं व्यावहारिकभेदपरत्वेनाप्युपपत्तेः। एतेनैक्यस्य भावनापरत्वम्—इति जल्पितमप्यपास्तम्। तस्मान्नात्मवादस्य दुर्निरूपत्वेन सिद्धं श्रुति-स्मृति-युक्त्यनुभवानुसारेणात्मैकत्वं इति दिक्।

## इति ज्ञानात्मनोर्गुणगुणिभावखण्डनपूर्वकात्म-नानात्वखण्डनम्।

एवं वास्तवात्मभेदं निराकृत्य घटपटाद्यनात्मभेदोऽपि निरा-क्रियते। ननु—मायाकार्यत्वं प्रपञ्चस्य आरम्भपरिणामखण्डने प्रथम-मुद्गरे प्रतिपादितत्वात्कथमनात्मनां परस्परं भेदाशङ्का?—इति चेत्। न। तस्यैवासिद्धेः। ब्रह्मकार्यस्य बहुशः श्रवणात्।

सदेव सौम्येदमग्र आसीत्।
यतो वा इमानि भूतानि जायन्ते।
तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः।

यथाग्नेः क्षुद्रा विस्फुलिङ्गाः। एवमेवैतस्मादात्मनः सर्वे देवाः सर्वे लोकाः सर्व एवात्मनो व्युच्चरन्ति।

इत्यादिश्रुतिभ्यः।

जन्माद्यस्य यतः* [शा. भा. अ. १ पा. १ सू. २]।

इति न्यायाच्च। नन्वज्ञानकार्यमपि बहुशः श्रूयते। तथा हि।

मृत्युनैवेदमावृतमासीत्।

साभासाज्ञानं मृत्युः।

त[1]द्धीदं तर्ह्यव्याकृतमासीत्।

इन्द्रो मायाभिः पुरुरूप ईयते।

अजामेकां लोहितशुक्लकृष्णाम्।

मायान्तु प्रकृतिं विद्यात्।

नासदासीन्नो सदासीत्।

तम आसीत्तमसा गूढ़म्।

इत्यादिश्रुतिभ्यः।

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्† [शा. भा. अ. ३ पा. २ सू.]।

---

१ 'तर्हीदं' इति ग० पुस्तके।

---

* जन्म उत्पत्तिः आदिरस्य इति तद्गुणसंविज्ञानो बहुव्रीहिः। जन्मस्थितिभङ्गं समासार्थः। 'अस्य' इति प्रत्यक्षादिसन्निधापितस्य इदमा निर्देशः। षष्ठिजन्मादिधर्मसम्बंधार्था। 'यतः' इति कारणनिर्देशः। इदमत्र तात्पर्यम्। अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद्भवति। 'तद्ब्रह्म' इति वाक्यशेषः।

† 'तु' शब्दः पक्षं व्यावर्तयति। नैतदस्ति यदुक्तं 'सन्ध्ये सृष्टिः पारमार्थिकी' इति। मायामय्येव सन्ध्ये सृष्टिः। न परमार्थगन्धोऽप्यस्ति। कुतः। 'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' न हि कार्त्स्न्येन परमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपवान् तस्मात् मायामात्र इत्यर्थः। कार्त्स्न्यं तु देशकालसम्पत्तिरबाधश्च इति।

इति न्यायाच्च । एवं तर्हि श्रुतीनां सूत्रयोश्च परस्परविरोधान्नोभयमपि कारणमस्तु । किं तर्हि जगत्कारणं ?—इति चेत् । यथायोग्यं परमाण्वादिकमेव । तस्मादनात्मभेदे प्रत्यक्षादिसिद्धे जगति आत्मभेदाभावेऽपि कथमद्वैतसिद्धिः—इति चेत् । महदनिष्टमापादितं पुच्छशृङ्गाभ्यां विकलेन तार्किकबलीवर्देन अद्वैतवादिनं प्रति । तर्हि—प्रत्यक्षसिद्धोऽयं घटपटादिभेदः—इति वदन् प्रष्टव्यः । किं धर्मिप्रतियोगिस्वरूपस्तत्त्वान्तरं वा? तत्र "प्रत्यक्षग्राह्यः तत्वान्तरमेव" इति वैशेषिकास्तार्किकाश्च । "पदार्थधर्मत्वेन तत्स्वरूपेण च द्विविधो भेद" इति साङ्ख्याः पातञ्जलाश्च । इदमेव मतं भेदवादित्वेन प्रसिद्धैर्माध्वैरपि अङ्गीक्रियते । "अधिकरणस्वरूप एव भेदः सोऽपि प्रत्यक्षग्राह्यः" इति प्राभाकराः । "अधिकरणस्वरूपोऽप्यभावोऽनुपलब्ध्यैव ग्राह्यः" इति भाट्टाः । "कार्यकारणयोर्भेदाभेद इति" भट्टभास्करानुयायिनः त्रिदण्डिनो जैनाश्च । तदेतत्क्रमेण निराक्रियते ।

किं प्रत्यक्षं भेदमात्रं गृह्णाति उत धर्मिप्रतियोगिभेदात् ? नाद्यः । धर्मिप्रतियोगिप्रतीतिमन्तरेण भेदस्य प्रत्येतुमशक्यत्वात् । द्वितीयेऽपि क्रमेण ग्रहणं युगपद्वा ? अथ यदा क्रमेण तदापि भेदं गृहीत्वा प्रत्यक्षं धर्मि-प्रतियोगिनौ गृह्णाति वैपरीत्येन वा ? अथ युगपत् तथापि 'दण्डीदेवदत्त' इतिवत् विशेषण-विशेष्यतया गृह्णाति उताङ्गुलित्रयवत्परस्पराऽसंसृष्टतया ? इति । तत्र क्रमपक्षे भेदग्रहपुरःसरो धर्मिप्रतियोगिग्रहपक्षो न युक्तः । भेदज्ञानं प्रति धर्म्यादिज्ञानस्य कारणत्वेनोक्ते क्रमग्रहणायोगात् । अथ तद्विपरीतो धर्मिप्रतियोगिग्रहपूर्वको भेदग्रहः । तदपीदं विचारणीयम् ।

किं स्वरूपेण धर्म्यादिग्रहणं भेदनिरूपकम्, उत घटत्वादिना, यद्वा धर्मित्वेन प्रतियोगित्वेन वा? नाद्यः। क्षीरनीरयोस्तादात्म्यापन्नयोः स्वरूपेण भासमानयोरपि तदीयभेदाग्रहणात्। नापि द्वितीयः। घटत्वादिना प्रतियोगादिग्रहस्य भेदापेक्षत्वेन अन्योन्याश्रयात्। अतएव तृतीयः। भेदज्ञानाधीनं प्रतियोग्यादिज्ञानं धर्मिभिन्नस्य भेदनिरूपकस्य प्रतियोगित्वात्। एवं धर्मिज्ञानस्यापि भेदज्ञानपूर्वकत्वमूहनीयम्। तज्ज्ञानाधीनं च भेदज्ञानं प्रसिद्धमिति कथं नान्योन्याश्रयः। किञ्च। भेदः किं भिन्ने धर्मिणि प्रवर्तते उत अभिन्ने? न तावदभिन्ने। तत्र भेदग्राहकत्वस्य भ्रमत्वस्य भ्रमत्वप्रसङ्गात्। अभिन्नं नाम भेदानधिकरणम्। तत्र चेत् भेदं गृह्णीयात् तज्ज्ञानं कथं न भ्रमः स्यात्। यदि आद्यः तत्किं स्वेनैव भेदेन भिन्ने धर्मिणि स्वयं भेदो वर्तते उत भेदान्तरेण भिन्ने? नाद्यः। आत्माश्रयात्। स्वभिन्ने स्वस्य वृत्तेः*। द्वितीयश्चेत्। सोऽपि अभिन्ने

* 'भिन्ने भेदः' इत्युक्तादात्माश्रयादि कथं इति चेत् उच्यते। भिन्ने नाम-भेदविशिष्टे भेदाश्रये। तथाच विशेषणीभूतो एकस्तृतीयान्तपदेन निर्दिष्टः। अपरो विधीयमानः प्रथमान्तशब्दनिर्दिष्टः। भेदाश्रयत्वं विना तृतीयान्तनिर्दिष्टस्य विशेषणत्वायोगात्। विशेष्यान्वयिना सम्बद्धस्यैव विशेषणत्वात्। द्वौ चेदन्योन्याश्रयः। तृतीयापेक्षायां चक्रकम्। चतुर्थे त्वनवस्था इत्यर्थः। एतदेवोक्तं विद्यारण्यमुनिभिः तत्त्वविवेके।

सविकल्पस्य उच्यत्वे उच्यस्य स्यादवस्तुता।
निर्विकल्पस्य उच्यत्वं न दृष्टं न च सम्भवि॥

इति चोद्यमुक्त्वा—

विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत्।
आद्ये व्याहतिरन्यत्राऽनवस्थात्माश्रयादयः॥

इत्यादिना।

धर्मिणि उत भिन्ने? इति विकल्पे प्रथमे भेदस्य कल्पितत्वम्। द्वितीये स्वेन भिन्ने चेत् आत्माश्रयः। यद्भेदनिरूपणार्थं स्वयमागतः तेन भिन्ने चेत्तदा अन्योन्याश्रयः। अथ एतद्दोषपरिहाराय द्वितीयभेदस्य भिन्ने धर्मिणि स्थित्यर्थं तृतीयस्वीकारश्चेत्तदा चक्रकम्। भेदद्वयव्यवधानेन स्वस्यापेक्षणात्। अथ तत्रापि पूर्वदोषनिवृत्तये चतुर्थः स्वीक्रियते चेत् तदानवस्था। अथ—गत्यन्तराभावादनवस्थाप्याश्रीयते—इति चेत्। तर्हि ते भेदाः किं क्रमेण धर्मिणि वर्तन्ते उत युगपत्? क्रमेण चेत् तर्हि धर्मिणोऽनादित्वप्रसङ्गः। उत्तरोत्तरभेदेन पूर्वपूर्वभेदकार्यस्य धर्मिणि भिन्नव्यवहारस्य असिद्धिः। पूर्वपूर्वभेदस्य वैयर्थ्येन प्राग्लोपापत्तिश्च। युगपच्चेत्तर्हि भिन्ने भेदस्थितिपक्षक्षतिः। अथ—एतद्दोषपरिहाराय एकविशिष्टे परस्थितिराश्रीयते—इति चेत्। तर्हि अविनिगमप्रसङ्गः। एतद्भेदविशिष्टे एतद्भेदस्थितिरित्यत्र विनिगमकाभावात्। किञ्च। एवमपि भेदाः स्वीक्रियेरन्। यदि भेदपरम्परावगाहिनी काचित्संविदुदयमासादयेत्। न च सा अस्तीति। तस्मात्प्रमाणाभावान्नानन्तभेदस्वीकारः। अथैतत्सर्वदोषपरिहाराय दण्डीदेवदत्तवद्धर्मिप्रतियोगिनौ। भेदश्च युगपदेव प्रत्यक्षमवकलयति। अतएव—नाङ्गुलित्रयवत्परस्परासंसृष्टतया—इत्यपि न। तत्प्रतीतेर्वैशिष्ट्यावगाहित्वनियमात्।

ननु—तर्हि विशेषणविशेष्यभावेन प्रत्यक्षं भेदं गृह्णातु—इति चेत्। तर्हि भेदावगाहिन्येव प्रतीतिर्विशेषणप्रतीतिः? उत भेदतद्धर्मिप्रतियोगिविषयकप्रतीतिरिति?। नाद्यः। कार्यकारणबुद्ध्योरेकत्वायोगात्। न द्वितीयः। विशेषणत्वेन ज्ञानस्य भेदज्ञानाधीनत्वात्। विशेषणा-

नवच्छिन्नेन निर्विकल्पकस्वरूपेण भासमानस्य भेदज्ञानाजनकत्व-स्यावेदितत्वात् इति दिक्।

## इति अतिरिक्तभेदखण्डनम्।

अथास्तु तर्हि साङ्ख्यादिसम्मत एव पदार्थधर्म-तत्स्वरूपभेदेन द्विविधो भेदः। तथा हि। एकस्तावत्पदार्थानामन्योन्यसामानाधिकरण्याऽयोग्यतालक्षणः। यथा रजतादेः शुक्तिकादिसंसर्गायोग्यतादिलक्षणः। स च पदार्थधर्म एव। पदार्थस्वरूपेऽवगते तद्गतधर्मविशेषावगमनियमात्। अन्यस्तु पदार्थानामसङ्कररूपः। स च पदार्थस्वरूपावगति*रेव।

ननु—अयमस्माद्भिन्न इति धर्मिप्रतियोग्यपेक्षो भेदः। तद्ग्रहणं च धर्मिग्रहणाद्यपेक्षम्। तथा च कथं स्वरूपग्रहणेन भेदग्रहणम् ?—इति चेत्। उच्यते। न तावद्भेदस्य धर्मिप्रतियोग्यपेक्षा। रूप-रसादिस्वरूपस्यैव तद्भेदत्वात्। तस्य च प्रतियोग्याद्यनपेक्षत्वात्। असङ्करो हि भेदः। स च रूपस्य रूपात्मनैव रसात्सिद्धिः। न हि रूप-रसयोः स्वव्यतिरेकेण धर्मान्तरापेक्षो ऽसङ्करः प्रतिभाति। तयोः स्वरूपस्य सङ्करात्मनैवावभासनात्। या तु तत्र धर्मिप्रतियोग्यपेक्षा सा तत्र भेदशब्दप्रयोगनिबन्धना। तथा हि।

रूप-रसादिशब्दास्तावद्रूप-रसादिस्वरूपनिमित्ताः प्रयुज्यन्ते। भेदादिशब्दास्तु तत्रैव बुद्धिसन्निधापितपदार्थान्तरोपाधिसापेक्षाः। यथा वृक्षादिशब्दाः वृक्षादिषु स्वरूपमात्रापेक्षया प्रयुज्यन्ते। वनादिशब्दास्तु तत्रैव एकदेशावस्थानाद्युपाध्यपेक्षया। ततो धर्मि-

---

* स्वरूपे एव इत्यर्थः।

प्रतियोग्यपेक्षया भेदशब्दप्रयोगनिबन्धनत्वात् स्वरूपातिरिक्तभेदे प्रमाणाभावात्। निर्विकल्पकविज्ञानेऽपि [1]रूप-रसादिस्वरूपस्यैव असङ्करात्मना ऽवभासनात् स्वरूपभेदाभेदो नातिरिक्तः—इति चेत्।

अत्रोच्यते। यदि कश्चि[2]त्पदार्थानां धर्मभूतो भेदः प्रतिभासते प्रतिभासतां नाम। न तत्प्रतिभासो निराक्रियते। यावद्ब्रह्मज्ञानं वक्ष्यमाणकल्पितप्रपञ्चभेदावभासस्येष्टत्वात्। यत्तु घटादिस्वरूपमेव भेद इति परिकल्पनम्। तन्न। प्रतीतिविरोधात्। व्यवहाराभावप्रसङ्गाद्भेदाभावप्रसङ्गाच्च।

तथा हि। शुक्लो घट-इतिवत्-भिन्नो घट-इति घटधर्मित्वेन भेदः प्रतिभासते। न तु-भेदो घट-इति घटस्वरूपत्वेन। अतो भेदघटयोर्धर्मधर्मिप्रतीतेराबालपण्डितं प्रसिद्धत्वात्। प्रसिद्धेश्च बाधाभावात्। तदपलापे सर्वप्रतीत्यपलापप्रसङ्गाच्च। भेदस्य वस्तुस्वरूपकल्पना सकललोकप्रतीतिविरुद्धा। किञ्च। भेदो घटस्वरूपमेव चेत् तर्हि भेदघटादिशब्दानां पर्यायत्वप्रसङ्गः। तथा सति-घटो भिन्नः-इति भेदशब्दस्य अनेकघट-पटादिशब्दैः सह प्रयोगो न स्यात्। ततश्च शब्दार्थव्यवहारोऽस्तमियात्। यच्चोक्तं—वृक्ष-वनादिशब्दाविव वृक्षेषु स्वरूपोपाधिनिमित्तौ घट-भेदशब्दौ घटस्वरूपे वर्तेते इति—तदसत्। एकदेशानेकदेशावस्थानादिधर्मविशिष्टा किल वृक्षवनादिशब्दाभिधेया न स्वरूपेण वृक्षादिशब्दवाच्या—इति अस्त्येव

---

१ 'रसादिरूपस्यैव' इति ग॰ पुस्तके।

२ 'पदार्थानां धर्मभूतो' इत्येव ख॰ ग॰ पुस्तकयोः।

कियानपि अर्थभेदः। ह्रस्व-दीर्घादिशब्दाः पुनर्न्यूनाधिकदेशकालव्यापित्वधर्मनिबन्धनाः वृक्षादिषु प्रयुज्यन्ते। न तत्स्वरूपमात्रनिबन्धना एव। यथा पित्रादिशब्दाः पुत्रादिषु जननादिसम्बन्धप्रयुक्ताः प्रवर्तन्ते। सर्वथापि त्वपर्यायशब्दानां वाच्यार्थभेदोऽपरिहार्य एव। ततश्च भेद-घटशब्दयोर्वाच्यार्थभेदाभावे सति पर्यायत्वादनेकैर्भिन्नार्थशब्दैः सह प्रयोगानुपपत्तेः शब्दव्यवहारोऽनुपपन्नः स्यात्—इति व्यवहारान्यथानुपपत्त्यापि घटादिस्वरूपादर्थान्तरं भेद-इति निश्चीयते। अनुमानं च—भेदो घटशब्दवाच्यादर्थान्तरम्। तदपर्यायशब्दवाच्यत्वात्। घटादिशब्दवाच्यवत्-इति—भेदशब्दो न घटपर्यायः। पटादिशब्दसामानाधिकरण्येनापि प्रयुज्यमानत्वात्। शुक्लादिशब्दवत्।

अपि च। भेदस्य घटस्वरूपमात्रत्वे घटादेरविदारणात्मकत्वात् लोके विदारणरूपो भेदो न सिद्ध्येत्। ततश्च अन्योन्यानात्मकत्वलक्षणवत्त्वसङ्करासिद्धेरद्वैतवाद एव भवता सूत्रैश्चितां कुर्वता समर्थितः स्यात्। घटादेर्वा भेदमात्रत्वे भेदस्य विदारणात्मकत्वादेको घटो न सिद्ध्येत्। तथा तदंशः। तदंशेऽप्येको न सिद्ध्येदिति शून्यमेव जगत् स्यात्।

अथ मतं भेदात्मनैकबुद्धिबोध्यत्वाद्भेदात्मकत्वेऽपि घटादेरेकत्वमविरुद्धम्—इति चेत्। तर्हीदं ब्रूहि। किं समस्तजगदुदरवर्ती एक एव भेदः उतानेकः? आद्ये तदा भेदस्यैकत्वात्तन्मात्रत्वाच्च सर्वस्य वस्तुजातस्य पुनरप्यद्वैतवादापत्तेः। द्वितीये। यद्यनेके भेदास्तथापि तेषामनेकत्वमेकत्वं चेत्तावन्मात्रत्वात्सर्वभेदानामद्वैतवाद-

प्रसङ्गः। अतावन्मात्रत्वेऽपि भेदभेदिनोर्भेदप्रसङ्गः। ततश्च घटादि-भेदो घटादिस्वरूपादर्थान्तरमेवापतति। तस्मात्सर्वलोकानुभव-विरोधात्। शब्दार्थव्यवहारानुपपत्तेः अद्वैतवादस्य शून्यवादस्य वा प्रसङ्गाच्च घटादिस्वरूपमेव भेद इति न घटते।

किन्तु घटादिस्वरूपादर्थान्तरभूतो धर्मिप्रतियोग्यपेक्षश्च भेदः प्रमाणेनानवसेयो*ऽपि यावदैक्यात्मबोधं साक्षिवेद्यतया अवभासते इति न स्वरूपभेदावकाशः। नापि भेदस्यात्यन्तापह्नवः। यत्पुन-रुक्तं निर्विकल्पकज्ञानेऽपि भेदोऽवभासते इति। तत्र वक्तव्यम्। किमिदं निर्विकल्पकं ज्ञानं नाम? यदि विकल्पः शब्दः तद्रहितम्। तर्हि बाल-मूकादिज्ञानं निर्विकल्पकमित्युच्येत। तदा तेषां वाचक-शब्दापरिज्ञाने ऽप्ययमस्माद्भिन्न इति धर्मिप्रतियोगिज्ञानसम्भवात्त-दपेक्षभेदप्रतिभासे ऽपि न कश्चिद्विरोधः।

अथ विकल्पो भेदः तद्रहितं प्रथमाक्षिसन्निपातजं विज्ञानं निर्विकल्पकमित्यभिप्रायः तदा—भेदरहितविज्ञाने भेदो ऽवभासते—इति विरुद्धभाषित्वं निर्व्यलीकमापद्येत। तस्मान्न वस्तुस्वरूपं भेदः इति दिक्।

अत एव प्राभाकर-भाट्टयोः सम्मताधिकरणरूप एवाभावः। स च तार्किकादिवत् 'प्रत्यक्ष एव' इति प्राभाकराः। 'अनुपलब्धिगम्य एव' इति भाट्टाः—इति यत्तदपि न।

तथा हि। अनुपलब्ध्या—जानामि—इत्यनुभवसिद्धजातिविशेष-

---

* अनिश्चित इत्यर्थः।

वृत्त्यनुपलब्धिः । तत्करणमनुपलब्धिः । सा* च निर्णयात्मकज्ञान-स्वरूपायाः उपलब्धेरभावः ।

तथा हि । वस्तुतो घटाभाववति घटो ऽस्तीति भ्रमसमये घटाभावेन सह सन्निकर्षे सत्यपि तज्ज्ञानं नोत्पद्यते । अतः तत्र घटानुपलब्धिः करणम् । तदभावाच्च न तत्र तज्ज्ञानं जन्यते । चक्षु-रादिकं चाधिकरणग्रहणार्थमनुपलब्धेर्योग्यतासम्पादनार्थं चोपयुज्यते । योग्यता च—यद्यत्र घटः स्यात्तदोपलभ्येतेति तर्कसम्पत्तिरेव इति । एतादृश्यनुपलब्धिः प्रत्यक्षसहकारिण्येवेत्यतो नानुपलब्धिः प्रमाणा-न्तरम् । पृथक् प्रमाणान्तरकल्पने गौरवात् इति तार्किकादयः सर्वे—इति चेत् । नैवम् । उभयत्रापि मानाभावात् ।

तथा हि । वस्तुतो घटवति भूतले घटाभावभ्रमसमये घट-चक्षुःसंयोगे सत्यपि घटज्ञानानुत्पत्तेरभावानुपलब्धेरपि भावग्रहे हेतुत्वापत्तेः । न चेष्टापत्तिः । अपसिद्धान्तात् । प्रमाणाभावाच्च । तस्मान्नानुपलब्धिः सहकारिणी । न वा पृथक् प्रमाणान्तरम् । न च —तर्ह्यभावज्ञानमनुपपन्नमिति वाच्यम् । मायाकल्पितप्रपञ्चनिरूपित-स्याभावस्य यावद्ब्रह्मज्ञानं प्रातीतिकस्यैव स्वीकारात् । तस्मान्नाधि-करणस्वरूपो भावो नाप्यतिरिक्तो नापि पदार्थस्वरूपः । किन्तु वक्ष्यमाणरीत्याऽनिर्वचनीय एवेति दिक् ।

## इति स्वरूपभेदखण्डनम् ।

---

* करणभूता अनुपलब्धिः इति ज्ञेयम् ।

अथास्तु तर्हि कार्यं कारणाद्भिन्नाभिन्नम्। न तु अद्वैतवादिसम्मतमनिर्वाच्यं कार्यं कारणे कल्पितम्। न वा सर्वथा भिन्नमेव। मानाभावात्। इह खलु भेदाभेदवादिनो बहवः सन्ति।

तथा हि। क्षपणका*स्तावदाचक्षते सर्वमिदं जगद्भिन्नमभिन्नं च। भिन्नाभिन्नात्मकत्वेनावभासमानत्वात्। 'सन् घटः' 'सन्पटः'—इति सदात्मना तावत्सर्वमेकात्मकं प्रतिभाति। घट-शकटादिरूपेणानेकात्मकं चोपलभामहे। ततश्चोभयात्मकत्वानुभवादेकानेकात्मकमेवेदं जगत्। नानेकात्मकमेव। नाप्यद्वैतमेव। न चैतदेकानेकात्मकत्ववस्तुनो धर्मः। धर्मस्याप्यनेकात्मकत्वात्। एकानेकात्मकरूपव्यतिरेकेण वस्त्वन्तरस्यानुपलम्भाच्च। ततः प्रत्यक्षसिद्धमेकानेकात्मकत्वं सर्वस्य। अनुमानं च। विमतं सर्वमनैकान्तं, सत्त्वात् हैरम्बा-

* 'क्षपणकाः' जैनमार्गसिद्धान्तप्रवर्तकाः इति केचित्। क्षपयति विषयरागमिति क्षपणः। क्षपण एव क्षपणकः। स्वार्थे कः। बौद्धसन्न्यासिषु क्षपणक, शाक्य, श्रमणकेत्यादयः तारतम्येन वर्तन्ते। यथा कुटीचक-बह्वोदकहंसादयः। महाभारते आदिपर्वणि पौष्योपाख्याने "सो ऽपश्यदथ पथि नग्नं क्षपणकम्" [अ. ३ श्लो. २७] इति। 'क्षपणकं पाषण्डभिक्षुकं' इति नीलकण्ठः।

आनन्दगिरिकृते शङ्करविजये षट्चत्वारिंशत्तमे प्रकरणे क्षपणकमतखण्डनमुक्तम्। तत्र तु क्षपणकमतं 'काल एव ब्रह्म' इत्यादि अनूद्य— "नदीव प्रभवेत् काचिदक्षय्यात्स्यन्दते यथा" [यजुरारण्यके] इत्यादिना आचार्यभगवत्पादैः खण्डितमित्याद्युक्तम्। स च काल एव ब्रह्मेति वदन् क्षपणको ऽन्य इति प्रतिभाति।

द्विवत्। ततश्च कार्यकारणयोरपि भिन्नाभिन्नतेति चेत्। अत्र भट्टानुयायिभिः समाधीयते। 'न सर्वं वस्तुजातमिदं भिन्नाभिन्नम्। अनुपलम्भात्। व्यवहाराभावप्रसङ्गाच्च। न हि घट-शकटयोः स्वरूपेणैव भेदमुत्पश्यामः। घटः शकटं—इत्यादिसामानाधिकरण्याभावात्। यस्त्वयं सत्त्वादिरूपेणाभेदः सामान्यनिबन्धनः ततो न सर्वमनैकान्तम्। अपि च सर्वं सर्वात्मकं चेत्तर्हि सकलव्यवहारविलोपप्रसङ्गः।

तथा हि। जलाहरणार्थी कदाचित् घटमिव शकटमप्याददीत। तस्य तदात्मकत्वात्। अथ अघटात्मकमपि तदिति नानिष्टप्रसङ्ग—इति चेत्। तर्हीदमत्र विकल्पनीयम्। किमघटत्वं नाम घटात्मकत्वाभावः? किं वा रूपान्तरं? इति। यदि घटात्मकत्वाभावः तदापि विकल्पनीयम्। किं भावाभावयोरन्योन्यात्मकत्वमेव उतान्यत्वमेव अथोभयात्मकत्वमपि? इति। यद्यन्योन्यात्मकत्वमेव तदा शकटस्य घटात्मकत्वाभावो नाम घटात्मकत्वमेवेति जलाहरणार्थी शकटमप्याददीत। उदकं पिपासुश्च कदाचित् ज्वालामालामप्याददीत। अथैतद्दोषपरिहारार्थमन्यत्वमेव भावाभावयोरिति मन्वीथाः तर्हि शकटस्य घटाभावरूपत्वात्तयोस्त्वान्यत्वमेवेति न सर्वस्य अनैकान्तत्वम्।

अथ भावाभावयोरप्यनैकान्तत्वमेव। तर्हि घटाभावो ऽपि घटः। तदभावो ऽपि तथैवेति भावाभावयोरविशेषप्रसङ्गः। ततश्च न भावव्यवहारो नाप्यभावव्यवहार इत्यखिललोकयात्रापि लुप्येत।

अथ शकटस्य अघटात्मकत्वं नाम रूपान्तरं—इति चेत्। तदैकस्य

रूपद्वयाभ्युपगमात् तयोश्च सामान्यविशेषादिव्यतिरेकेण अनुपलम्भात् । सामान्यविशेषभावेनैव भिन्नाभिन्नत्वं वस्तुनः, न स्वरूपेण—इत्यायातम् । यत्तु—सर्वमनैकान्तं सत्वात्, हैरम्बादिवत्—इति । तच्च साध्यविकलो दृष्टान्तः । न खलु हैरम्बादेरपि स्वरूपे ऽनैकान्तत्वमस्ति । विशिष्टावयवविन्यासस्य एकावयविद्रव्यत्वात् । न च—नरकरिरूपे प्रत्यक्षोपलब्धे कथमेवं कल्पना* ?—इति वाच्यम् । अवयवसामान्यमात्रोपलम्भात् । न खल्ववयवसामान्यमात्रोपलम्भेन मैत्रस्य चैत्रात्मकत्वप्रसिद्धिरस्ति । तस्मादसदेवैतत्सर्वमनैकान्तम्, सत्वात्—इति विस्तरेण द्वितीयमुद्गरे निराकृतत्वाच्चेति दिक् ।

किन्तु । सामान्यविशेषादेव भिन्नाभिन्नत्वमुपलभ्यते । तथा हि । षण्डो गौरित्यस्मिन्प्रत्यये सामान्य-विशेषयोः सामानाधिकरण्यादभेदोऽवगम्यते । कालाक्षी गौरित्यस्मिन्प्रत्यये गोत्वस्य व्यक्त्यन्तरात्मत्वप्रतीतेः षण्डव्यक्तेर्भेदो ऽवगम्यते । तदेवं प्रत्ययाभ्यां सामान्यस्य व्यक्तेश्च भेदाभेदावध्यवसीयेते । यथा चक्षुः-स्पर्शनाभ्यां वह्नेरौष्ण्य-प्रकाशत्वे । ननु—तत्र एकैकविशेषग्रहणानन्तरमुभयविशेषणविशिष्टवस्तुविषयं प्रत्ययान्तरमेवास्तीति चेत् । तर्हि अस्तु इहापि तथैव इति—किमनुपपन्नमिति । ततश्च स्वरूपेण सामान्यं व्यक्तेरभिन्नम् । व्यक्त्यन्तरात्मना तु भिन्नम् । व्यक्तिरपि सामान्यरूपादभिन्ना । व्यक्त्यन्तरात्मना तु भिन्ना—इति सामान्य-विशेषयोर्भिन्नाभिन्नत्वं प्रत्यक्षसिद्धम् । एवं कार्य-कारणयोरपि मृद्घट इति सामानाधिकरण्यादभेदो ऽवगम्यते । मृदः कलशात्मकत्वानवगमाच्च मृद्घटयोर्भेदो ऽवगम्यते । ततश्च

* ऐकान्तिकत्वकल्पनमित्यर्थः ।

कार्यकारणयोरपि भिन्नाभिन्नत्वं प्रत्यक्षसिद्धमेव। तथा च न कार्यमनिर्वाच्यं कारणे कल्पितमिति सिद्धम्। अयमेव न्यायो गुणगुणिनोरंशांशिनोर्विशिष्टस्वरूपयोरपीति। अन्येऽपि बहवो वादिनो एतन्मतावलम्बनेनैव स्वस्वबुद्ध्यनुसारेण भेदाभेदप्रकारान् कल्पयन्ति।

तथा हि। केचिदाचक्षते। "योऽसौ कार्य-कारणयोर्भेदरूपो धर्मविशेषः[1], स तयोः स्वरूपमेव। अभेदस्तु तादात्म्यलक्षणः सम्बन्ध"—इति। अन्ये तु—"भेदो नाम कार्य-कारणयोः कश्चित् धर्मः। अभेदस्तु तदभावः"—इति। अपरे तु—"भेदाभेदौ उभावपि वस्तुनो धर्मौ रूपरसाविव भावरूपौ च"—इति। सर्वे चैते स्वस्वपक्षसमर्थनाय सामानाधिकरण्यानुपपत्तिमेवाचक्षते। न चैतत्सम्यग्दर्शिनो मन्यन्ते एकस्य भेदाभेदवत्त्वे प्रमाणाभावात्। तत्राद्ये पक्षे वक्तव्यम्। योऽसावनयोर्भेदरूपो धर्मविशेषः[2] स किं ताभ्यामन्य एव आहोस्विदनन्यः उतान्याऽनन्यः? अथ अन्यश्चेत् स्वाश्रयेण स्वव्यतिरिक्तः सम्बन्धो वक्तव्यः। सम्बन्धिभ्यां भिन्नत्वे सति सम्बन्ध्याश्रयत्वं सम्बन्धसामान्यलक्षणस्य सर्वसम्मतत्वात्। न च—सम्बन्धरूपत्वात् स्वयं सम्बन्धान्तरं नापेक्षत—इति वाच्यम्[3]। तथा[4] सति संयोगे व्यभिचारात्। संयोगो हि स्वयं

---

१ '०रूपो धर्मविशेषः' इति क. पुस्तके नास्ति।

२ 'धर्म' इत्येव क. पुस्तके। 'विशेष' इति नास्ति।

३ 'इति चेत्' इति ग. पुस्तके।

४ 'तथा सति' इति नास्ति ख. पुस्तके।

सम्बन्धो ऽपि सन् स्वाश्रयेण किल तादात्म्यसम्बन्धमपेक्षते। न च —तादात्म्यं तादात्म्येनैव तिष्ठति। न तु तत्र सम्बन्धान्तरकल्पनम्। तार्किकसम्मतस्वरूपसम्बन्धवत्—इति वाच्यम्। न्यायविरोधात्। विवादाध्यासितः सम्बन्धः स्वाश्रयेण स्वव्यतिरिक्तं सम्बन्धमपेक्षते। सम्बन्धत्वात्। गुणत्वाद्वा संयोगवत्। तादात्म्यं स्वव्यतिरिक्तसम्बन्धेन स्वाश्रयतन्त्रं भवितुमर्हति। स्वाश्रयादनत्यन्तभिन्नत्वात्। भूतलतन्त्र-घटवत् इति। स्वाश्रयादत्यन्तभिन्नत्वे च सम्बन्धानुपपत्तिः। सम्प्रति-पन्नसंयोगसम्बन्धस्य स्वाश्रयादत्यन्तभेदानुपगमात्। दृष्टान्तभूतस्य समवायस्य च प्रथममुद्गरे विस्तरेण दूषितत्वाच्च। तद्वदेवासिद्धि-प्रसङ्गोऽपि दुर्वारः इति। तस्मान्न तादात्म्यं स्वाश्रयादत्यन्तभिन्नम्। अथ अभिन्नमिति कल्प्येत। तदापि निरूप्यतां किमिहापि तादात्म्यलक्षणो भेदः किं वा एकत्वलक्षणः? इति। आद्ये तादात्म्यस्य तादात्म्यान्तरस्वीकारे ऽनवस्थानान्न कुत्राप्यभेदः सिद्ध्येत। द्वितीये तु एकत्वलक्षणस्य वस्तुमात्रत्वात्—तादात्म्यं नाम धर्म—इति मृषोक्तिः स्यात्। अथोभयदोषपरिहाराय—भिन्नाभिन्न—इत्युच्यते। तत्राप्य-भेदशब्दस्तादात्म्यमिति चेत्। तस्य च भिन्नाभिन्नत्वे सति तदभेदो ऽप्येवं तदभेदो ऽप्येवं इत्यनवस्था[1]प्रसङ्गः*। तस्मान्न प्रथमपक्षो यु-

---

१ 'स्वरूपभेदस्य पूर्वं निराकृतत्वाच्चे' त्यधिकं ख. पुस्तके।

---

* एवं सति स्वरूपभेदापत्तिरिति न शङ्क्यम्। स तु पूर्वमेव निराकृत इति इह नोक्तः।

क्तिमान्। यदपि मतं—कार्य-कारणयोर्भेदो नाम कश्चन धर्मः, अभेदस्तु तदभाव—इति। तदपि पर्यालोचनीयम्।

किं भेदाभेदौ एकाश्रयौ उत भिन्नाश्रयौ। यद्येकाश्रयौ तदा भेदाभेदौ न युगपदेकस्मिन्सम्भवतः। भाव-तदभावयोर्युगपदेकत्र समवायानुपपत्तेः। अथ भिन्नाभिन्नाश्रयौ? न तर्हि कार्यं कारणाद्भिन्नम्। एकस्योभयाश्रयत्वाऽनभ्युपगमात्। तस्मान्न द्वितीयपक्षोऽपि साधीयान्। या पुनरेषा कल्पना—भेदाभेदौ कार्य-कारणधर्मौ। रूप-रसाविव भावरूपौ—इति। तत्राप्यभिप्रायो वर्णनीयः। किं भेदाभेदौ कार्य-कारणाभ्यामत्यन्तभिन्नौ किं वा भिन्नावेव? अथवा उभयरूपौ अनुभयरूपौ वा? इति। यदि तावदाद्यः कल्पः तदा भेदाभेदयोः कार्यकारणाभ्यां यो भेदः सोऽपि ताभ्यां भिन्नश्चेत्तदा तद्भेदोऽपि—एवमनवस्थानात् न क्वचिद् भेदसिद्धिः। तदुक्तं खण्डनकृद्भिः।

अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः।
अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः॥

इति। अभिन्नश्चेत् कार्य-कारणाभ्यां तद्भेदाभेदयोरन्यत्वाभावात् कार्य-कारणातिरेकेण तद्भेदाभेदधर्माऽसिद्धिः। अथ स भिन्नाभिन्नः कल्प्येत। तर्हि तयोरपि स्वधर्मिणोर्भिन्नाभिन्नत्वे सति अनवस्था स्यात्। अतो न कार्य-कारणाभ्यां तद्गतभेदाभेदौ भिन्नौ। नाप्यभिन्नौ। भेदस्य तत्रापि धर्मत्वे भेदाभेदादिभावेन चानवस्थानादिदोषप्रसङ्गात्। स्वरूपमात्रत्वे च भेदाभेदयोरेवाभावप्रसङ्गात्। अथ—कार्यकारणयोर्भेदाभेदौ ताभ्यां भिन्नाभिन्नाविति मतम्। तदा

तद्भेदाभेदयोरपि भेदाभेदान्तरकल्पनायां अनवस्थानात् । अथैतद्दोषपरिहारेच्छया—भेदाभेदौ न भिन्नौ, नाप्यभिन्नौ, नापि भिन्नाभिन्नौ कुतश्चित् । किन्तु । भेदाभेदावेव समस्तव्यवहारनिमित्तभूतौ प्रत्यक्षेण चोपलभ्यमानाविति कल्प्येत । तर्हि इदं ब्रूहि । भेदाभेदयोर्धर्मिणा सम्बन्धाभावे कथं तद्धर्मत्वं? इति । अस्ति चेत् सम्बन्धः सोऽपि न तावत् संयोगलक्षणः । गुणकर्मादावपि त्वया भेदाभेदस्वीकारात् । स्वयं चाद्रव्यत्वाभ्युपगमात् । द्रव्यधर्मत्वाच्च संयोगस्य । नापि समवायो ऽनभ्युपगमात् । पूर्वमेव निराकृतत्वाच्च ।

अथ—तादात्म्यलक्षणः सम्बन्धोऽस्तीति चेत् । स किं भेदसहिष्णुरभेदरूप एव वा ? आद्ये । कथं न समवायवदनवस्थादिदोषप्रसङ्गः । द्वितीये भेदाभेदयोरपि अभेदप्रसङ्गेन स्वपक्षहानिश्च । अथ—सम्बन्धाभावे ऽपि तत्र प्रतिभासमानत्वात् तद्धर्मत्वस्वीकार—इतिचेत् । तर्हि तौ भ्रान्तिकल्पितौ स्याताम् । तत्राविद्यमानत्वे सति प्रतिभासमानत्वात् । शुक्तिकादाविव रजतादिसंसर्गः । भ्रान्तिकल्पितयोश्च ममापि स्वीकाराच्च । अथ—माभूद्धर्मत्वम् । स्वतन्त्रावेव सर्वव्यवहारनिमित्तभूतौ भविष्यतः । धर्मत्वं चौपचारिकं—इति चेत् । तर्हि घटादिवत्स्वतन्त्रयोरेवोपलब्धिः स्यात् । अथास्वात्मवत्स्वतन्त्रयोरप्यन्योपाधिक एवोपालम्भः —इति चेत् । न । बाह्येन्द्रियग्राह्यत्वात् । गुणादिवदन्यधर्मत्वनिमित्त एव अन्योपाधिकोपलम्भ इति निश्चयात् च । तदेवं भेदाभेदयोर्वस्तुधर्मत्वप्रसिद्धेरस्वतन्त्रोपलब्धित्वाच्च धर्मत्वमाश्रयणीयम् । तच्च धर्मिणा सम्बन्धमपेक्षते । स च सम्बन्धो दुर्निरूप इत्युक्तम् । तस्मात् यद्यपि

अन्ये ऽपि भेदाभेदपक्षा दुर्युक्तिका एव तथापि क्वचिदंशे प्रतीत्यनुसाराद्दाशङ्केरन्नपि। अयं तु क्षपणकपक्षादपि पापीयान्[1] मीमांसक पक्ष इति उपेक्षित[2] इति दिक्।

एतेन—न ह्येकस्मिन्वस्तुनि सामानाधिकरण्यं दृष्टम्। नाप्यत्यन्तभिन्नयोरश्व-महिषयोरिव। ततश्च कार्य-कारणयोर्मृदयं घट-इत्यादिसामानाधिकरण्यं अनुपपद्यमानं तयोर्भेदाभेदौ कल्पयतीति प्रागुक्तमपि[3] निरस्तम्। का गतिस्तर्हि सामानाधिकरण्यस्य?—इति चेत्। कार्यस्य कारणे ऽध्यासमात्रं ब्रूमः—इत्युक्तं प्राक्। अग्रे च वक्तव्यम्।

ननु—तद्वदत्र न बाधो ऽनुभूयते। तत्कथमिदमध्यासनिबन्धनं सामानाधिकरण्यं—इति चेत्। अहं मनुष्य—इतिवदिति[4] ब्रूमः। श्रौतश्च बाधः प्रसिद्ध एवाकरे। अग्रे च वक्ष्यमाणः—

वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यम्।

इत्यादि इति दिक्। नन्वस्तु तर्हिप्रपञ्च-ब्रह्मणोर्भेदाभेद—इति भट्टभास्करसम्मतम्। इदमेवाधुनिकैः रामानुजैरप्याश्रीयते। तथाहि।

ब्रह्मैवेदं सर्वम्। आत्मैवेदं सर्वम्।

---

१ 'यवीयान्' इति क. पुस्तके।

२ 'उपेक्षितो ऽस्माभिरिति' इति ग. पुस्तके।

३ 'प्रागुक्तमपि' इत्यधिकं ख. पुस्तके नास्ति।

४ '०ष्यवदिति' इति क. पुस्तके पाठः।

इत्यादिश्रुतिभ्यः ब्रह्मणः सर्वात्मकत्वाभ्युपगमात्। ब्रह्मात्मना सर्वमभिन्नम्। प्रमाण-प्रमेयादिरूपेण च भिन्नम्। अन्यथैकान्ताद्वैतपक्षे प्रत्यक्षादिप्रमाणविरोधात् लौकिकव्यवहारलोपप्रसङ्गः। कर्मकाण्डानारम्भश्च प्रसज्ज्येत। एकान्तभेदाभ्युपगमे च ज्ञानकाण्डस्य निर्विषयत्वादनादरप्रसङ्गः। तच्चोभयमयुक्तम्। ततश्च प्रत्यक्षादेः प्रामाण्यसिद्धये व्यवहारलोपपरिहाराय च कर्म-ज्ञानकाण्डयोरारम्भसिद्धये च ब्रह्मात्मना सर्वमभिन्नम्। प्रमाण-प्रमेयादिरूपेण भिन्नम्। एवं कार्यकारणत्वादिकमपि लोके भिन्नाभिन्नत्वेन आश्रयितुमुचितं—इति चेत्। असङ्गतमेवैतत्। भेदाभेदस्वरूपस्य निरूपयितुमशक्यत्वात्।

तथा हि। किं येन रूपेण सर्वस्य भेदः तेनैवाभेदोऽपि? उत रूपान्तरेण? इति। आद्ये भेदाभेदयोरेकत्वाद्वस्तुतो भेदोऽभेद एव स्यान्न उभयत्वसिद्धिः। द्वितीये तयोरूपयोः रूपिणः सकाशादत्यन्तभेद एव उताभेद एव? किं वा उभयमिति। प्रथमे रूपरूपित्वानुपपत्तिः। यथा तयोरूपयोरन्योन्यम्। द्वितीये तु। रूपिमात्रं स्यात् रूपमात्रं वा इति। तथा च न रूपरूपित्वसिद्धिः। तृतीये तु। रूपयोरूपिणः सकाशाद्यौ भेदाभेदौ तौ किमेकेन भवतः किं वा द्वाभ्याम्? अथैकेन चेत्। तर्हि कार्य-कारणयोर्भेदाभेदौ तयोरपि तथा स्यात्। तत्र च भेदाभेदौ न सम्भवतः। अथ द्वाभ्यां चेत्। तयोरपि स्वकीयरूपिणोर्भिन्नाभिन्नत्वे सति अनवस्थापातात्। तस्मान्न न्यायसिद्धं भिन्नाभिन्नत्वम्। अथ—प्रतीतिसिद्धमिति चेत्। तदापि न प्रमाणप्रतीतिसिद्धम्। एकस्य प्रमाणस्य

युगपद्विधि[1]व्यवच्छेदव्यापारद्वयस्यासम्भवात्। प्रमाणानां सम्भूय प्रमापकत्वानुपपत्तेश्च। तस्माल्लोके ऽपि कार्य-कारणादेराध्यासिकमनिर्वाच्यत्वलक्षणमेव भिन्नाभिन्नत्वम्। यत् पुनरुक्तं कर्म-ज्ञानकाण्डयोः प्रत्यक्षादीनां च प्रामाण्यलाभाय लोकव्यवहारसिद्धये च भेदाभेदाश्रयणमिति। तदपि न। अद्वैतबोधकप्रमाणस्य तत्त्वावेदकत्वेन प्रामाण्यम्। द्वैतप्रतिभासस्य पुनरासंसारविमोचात् व्यावहारिकमतत्त्वावेदनलक्षणं प्रामाण्यम्। ततश्च समस्तलौकिक-वैदिकव्यवहारसिद्धिरिति। तस्माल्लोके ऽपि कार्य-कारणयोरभेद एव परमार्थतः। भेदस्त्वाध्यासिकः। तथा च अद्वितीयनिरतिशयानन्दप्रकाशलक्षणं ब्रह्मैव परमार्थवस्तु। वक्ष्यमाणप्रमातृ-प्रमाणादिभेदभिन्नत्वाध्यासिकलक्षणमखिलमिदं जगत्तत्रैव अविद्यया अध्यस्तमिति सिद्धम्॥

## इति भेदाभेदखण्डनम्।

---

यत् पूर्वमुक्तं जगत्कारणत्वविषययोः श्रुत्योरज्ञान-ब्रह्मगोचरयोः मिथ्याविरोध–इति। तन्न। ब्रह्मान्यत् मिथ्या, दृश्यत्वात्, शुक्तिरजतादिवत्—इत्याद्यनुमानसिद्धानिर्वचनीयजगतो ऽनाद्यनिर्वचनीया विद्यैव कारणम्। न ब्रह्म। तस्य कूटस्थस्य कार्य-कारणविलक्षणत्वात्।

---

१ 'व्यवच्छेदात्मकव्यापार'० इति ग. पुस्तके।

तदेतद्ब्रह्म अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः * ।

इति श्रुतेः। कथं तर्हि जगत्कारणत्वं ब्रह्मणः श्रुतौ प्रसिद्धम्? जगत्कारणाधिष्ठानत्वेन कारणत्वोपचारात्। तदुक्तम्।

ब्रह्माज्ञानाज्जगज्जन्म ब्रह्मणोऽकारणत्वतः।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते॥

इति। उक्तं च वार्तिककृद्भिः।

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते॥
संसाराख्यमहाव्याधेः किं मूलमिति चिन्त्यते।
तद्ध्वस्त्यै चिकित्सेयं यदा फलवती भवेत्॥
अविज्ञातनिदानेन भिषजा यच्चिकित्सितम्।
तदनर्थकरं यद्वत्प्रकृते ऽप्यवगम्यताम्॥
मायामूलं द्वैतमेतदित्यज्ञाते कथञ्चिदम्।
अद्वैतं बुद्धिमारोहेत् स्यादतो ऽन्या तु नैव धीः॥
देहादृष्टक्रियाकर्तृरागाद्यासार्थसप्तकात्।



---

* 'तदेतदि'ति। 'तदेतत्' अज्ञान-तत्कार्यात्मकं जगत्। 'ब्रह्मैव' न जगतो रूपान्तरमस्तीति भावः। न विद्यते पूर्वं कारणं यस्य तत् 'अपूर्वम्'। न विद्यते अपरं कार्यं यस्य तत् 'अनपरम्' अकारणमित्यर्थः। तस्य परोक्षत्वं निराकरोति। 'अयम्' इति। अपरोक्षमित्यर्थः। आत्मनः संसारित्वव्यावर्तनायाह। 'ब्रह्म' इति। आत्मानं विशिनष्टि। 'सर्वानुभूः' इति। सर्वात्मा चिदात्मत्वादनुभूः इति। इति शब्दः पूर्वपरामर्शार्थः। इति श्रुतिव्याख्या।

द्वारात्संसारहेतुः स्यात् आत्माज्ञानं तु लोकवत् ॥
आत्माज्ञानमनर्थानां मूलं लोके ऽपि नेतरत् ।
स्वपराक्रममज्ञात्वा युद्ध्यन् म्रियत एव हि ॥
एवं स्वात्मानमज्ञात्वा संसारानर्थमाप्नुयात् ।
अनर्थाज्ञानयोः कार्यकारणत्वं प्रपञ्च्यते ॥
जिहासितस्यानर्थस्य हेतुः स्यात्सशरीरिता ।
न प्रियाप्रियविच्छेदः सशरीरस्य कर्हिचित् ॥
'धर्माधर्मौ च देहस्य योनि'रित्यागमो ऽब्रवीत् ।
विहितं प्रतिषिद्धं च[1] कर्म मूलं तयोरपि ॥
कर्तुरेव भवेत्कर्म रागाद्द्वेषाच्च कर्तृता ।
शोभनाशोभनाध्यासौ राग-द्वेषप्रयोजकौ ॥
उक्ताध्यासो ऽप्यन्यवस्तुसद्भावात् स्यान्न चान्यथा ।
वस्त्वन्तरस्य सद्भावो आत्माज्ञानेन कल्पितः ॥
एवं देहादिवस्त्वन्तसप्तकव्यवधानतः ।
संसारानर्थहेतुः स्यादात्माज्ञानं जगत्सृजेत् ॥
प्रत्यग्याथात्म्यसम्मोहाज्जगत्सदिति भासते ।
प्रत्यग्याथात्म्यसम्बुद्धौ न सत्तन्नासदुच्यते ॥
अवास्तवत्वाज्जगतो नादयत्वं विहन्यते ।
दृश्यमज्ञानजत्वेन न वस्तु स्वप्नदृश्यवत् ॥
नासतो जन्मना योगः सतः सत्वान्न चेष्यते ।
कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ॥

---

१ 'विहितं तद्विरुद्धं च' इति क. पुस्तके ।

वास्तवीं जनिमाकर्थ्य तैर्वाच्यं सृष्टिकारणम् ।
प्रधानं परमाण्वादिप्रवर्तकमपेक्ष्यते ॥
तत्प्रवर्तक ईशश्चेत्सोऽपि केन प्रवर्त्यते[१] ।
लीनत्वात्काम-कर्मादि न प्रवर्तयितुं क्षमम् ॥
शक्तिर्नियामिका चेत् सा केनान्येन नियम्यते ।
अविचारितरम्याऽतः सृष्टिरात्मनि कल्पिता ॥
तथाप्यैक्यात्मबोधाय श्रुत्या सृष्टिरुदीर्यते ।
बुद्ध्यारोहाय मन्दानां सृष्टौ दृष्टान्त उच्यते ॥
अचेतनो यथा तन्तुरूर्णनाभेः सचेतनात् ।
जातश्चिदात्मनस्तद्वत्प्राण-लोकाद्यचेतनम् ॥

इति । ननु—शुक्त्यादौ रजतमित्यादिभ्रमस्थले देशान्तरानुभूतरजतस्यैव दुष्टेन्द्रियसन्निकर्षेण ज्ञानलक्षणया भानोपपत्तौ अनिर्वचनीयरजतोत्पत्तिकल्पनं व्यर्थम् । गौरवग्रस्तं च । तथा चान्यथाख्यातिसम्भवे पूर्वोक्तानुमानस्य दृष्टान्तासिद्ध्या कथं जगतः कल्पितत्वेन मिथ्यात्वम् ?—इति चेत् । न । अनिर्वचनीयख्यात्युपगमे सामानाधिकरण्येन बाधाकारासम्भवात् । सर्वेषां वादिनां भ्रमबाधयोर्वैय्यधिकरण्यापत्तेः ।

तथा हि । दोषसहकृतेनेन्द्रियेणा[२]त्र विप्रकृष्टस्यैव रजतस्य ज्ञानलक्षणया पुरोऽवस्थितत्वेन ग्रहणानन्तरं बाधे सति-तत्र रजतं—इति न त्वत्र—इति तदाकारः स्यात् । अख्यातिवादे तु असंसर्गाग्रहादनु-

१ क. पुस्तके 'प्रवर्तितः' इति पाठः । अयमेव साधीयान् ।
२ 'अत्र' इति क. ग. पुस्तकयोर्नास्ति ।

भवस्मरणात्मकस्य ज्ञानद्वयस्य—इदं रजतं—इत्यभेदग्रहः । असंसर्गग्रहे च ग्रहणस्मरणयोर्विवेकेन—तद्रजतं—इति बाधाकारः स्यात् । आत्मख्यातौ चान्तरे विज्ञानाकारे रजते बहिष्ट्वमध्यस्यते—इति तद्बाधे सत्यपि-अन्तारजतं न बहिः इति तदाकारः स्यात्। असत्ख्यातौ तु भ्रमकाले ऽपि भानासम्भवः । असतः प्रमाणाऽगोचरत्वात् ।

तथा हि । ननु—अलीकं किं भावरूपं द्रव्यादिषट्पदार्थवत् ? अभावरूपं वा प्रागभावादिवत् ? आहो तदुभयविलक्षणं च—इति चेत् । न । कालत्रये ऽपि सत्वेन प्रतीत्यनर्हत्वरूपालीकस्वरूपाङ्गीकारात् । अथ वा सर्वदेश-कालनिष्ठात्यन्ताभावप्रतियोगित्वे सति-सत्तादात्म्यशून्यत्वं अलीकत्वं—इति लक्षणात् ।

"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्राच्चेति चेत् । न । सर्वथा स्वरूपासम्भवात् ।

तथा हि । तदलीकं किं सत्[1] उत असत् ? आहो ऽनिर्वचनीयम् ? यद्वा तत्त्रयातिरिक्तम् । आद्ये । सत्त्वं किं मीमांसकसम्मतं कालसम्बन्धित्वं वा ? यद्वा प्राभाकरसम्मतं ज्ञानसम्बन्धित्वं वा ? अथ वा बौद्धसम्मतमर्थक्रियाकारित्वं वा ? तार्किकादिसम्मतं सत्तासमवायित्वं वा ? तथा च अलीके एतच्चतुष्टयान्यतरसत्वसम्बन्धाभावात् कथं लक्षणसमन्वयः । यथा कथञ्चित्तत्स्वीकारे सत्ख्यातित्वप्रसङ्गाच्च । किञ्च । सत्त्वमपरोक्षं वा उत परोक्षं वा ? यद्वा परोक्षापरोक्षम् । अपरोक्षमपि किं बाह्यमाभ्यन्तरं वा ? तदुभयमपि

---

१ 'सन् घट इति प्रतीत्या' इति ग. पुस्तके ऽधिकम् ।

न। द्रव्य-तद्गुणाद्यभावात् । अत एव परोक्षमपि न। व्यापिज्ञानाद्यभावेन अनुमानाद्यविषयत्वात् । नापि परोक्षापरोक्षम् । महानसीयपर्वतीयवह्निवत्। अपरोक्षत्वस्य पूर्वमेव निरासात् । परोक्षत्वाङ्गीकारे चान्यथाख्यातिप्रसङ्गात्। एतेनैव तत्त्रयातिरिक्तमपि न। नाप्यनिर्वाच्यम् । तस्याविद्योपादानत्वेन अविद्यातत्कार्यान्यतरप्रसङ्गेन अलीकत्वस्यैव असम्भवात् । तस्मान्न दृष्टान्तासिद्धा अनुमानासम्भव इति सुतरां न जगतः मायिकत्वाऽसम्भवः। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्न पक्षैकदेशे दृष्टान्ते सिद्धसाधनं दोषः ।तार्किकादिभिरपि स्वीकारात्। ब्रह्मणि बाधवारणाय ब्रह्मान्यदित्येव पक्षः। दृश्यत्वं च चिद्विषयत्वम् । स्वव्यवहारे स्वातिरिक्तसंविदपेक्षत्वं वा । मिथ्यात्वं च सद्भिन्नत्वे सत्यसद्भिन्नत्वम्। सत्वं च कालत्रयाबाध्यत्वम्। असत्त्वं च कालत्रयेऽपि सत्वेन प्रतीत्यनर्हत्वम्। अथवा स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम् । यद्वा ज्ञाननिवर्त्यत्वम्। अनिर्वाच्यत्वं वा। ननु—किमिदमनिर्वाच्यत्वं निरुक्तिविरहो वा? तन्निमित्तज्ञानविरहो वा? तन्निमित्तार्थविरहो वा? नाद्यः। अनिर्वाच्य इत्यनयैव निरुक्त्या व्याघातात् । नापि द्वितीयः । निरुक्तिरूपफलसत्वेन तन्निमित्तविरहस्य वक्तुमशक्यत्वात् । अतएव न तृतीयः । अर्थस्यापि वक्तुं शक्यत्वेन तन्निमित्तार्थविरहाभावाच्च । नापि सद्विलक्षणत्वे सति असद्विलक्षणत्वम् । सदसद्रूपेणाप्युपपत्तिः—इति चेत् । नैवम् । सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे च सति सदसद्विलक्षणत्वमनिर्वाच्यम् । सत्वासत्वाभ्यां विचारासहत्वे सति सदसत्वेनापि विचारासहत्वं वा । प्रतीयमानत्वे सति अधिष्ठानातिरिक्तस्वरूप-

शून्यत्वं वा ऽनिर्वाच्यत्वम्। एतेन—अनिर्वाच्य—इत्यनयैव निरुक्त्या व्याघात—इत्यादि वल्गितमपास्तम्। अलीकवादिनं प्रति तु-अलीकभिन्नत्वमपि पक्षे विशेषणं देयमेव।

ननु—ईश्वरमायाकल्पितत्वेन जगतो मिथ्यात्वसम्भवः। तच्च मिथ्यात्वानुमानं सम्भवति। तदेव तु न सम्भवति। तथा हि। विश्वं नेश्वरमायाकल्पितम्, ईश्वरस्यापरोक्षत्वात्, चैत्रापरोक्षघटवत्, यथा स न चैत्रमायाकल्पितः—इति चेत्। न। ऐन्द्रिजालिकस्यात्यपरोक्षे तन्मायाकल्पिते व्यभिचारात्। ननु—ईश्वरज्ञानविषयस्य वियदादिप्रपञ्चस्य मिथ्यात्वस्वीकारे ईश्वरे भ्रान्तत्वप्रसङ्ग—इति चेत्। नैवम्। मिथ्याभूतस्य मिथ्यात्वेन ग्रहणे ऐन्द्रजालिकवद् भ्रान्तत्वायोगात्। ननु—दण्ड-घटयोरुभयोरपि मिथ्यात्वस्वीकारे कथं कार्य-कारणभावः। न हि मिथ्याभूतेन दण्डेन घटो जन्यते। सार्वलौकिकानुभवविरोधात्—इति चेत्। न। कार्यस्य कारणेन सह प्राक्कालसम्बन्धमात्रस्यैव प्रयोजकत्वात्। न तद्गतसत्यत्वमपि। तत्र मानाभावात्। तदुक्तं खण्डनकृद्भिः।

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वाऽसत्त्वकथा वृथा॥
आन्तर्भावितसत्त्वं चेत्कारणं तदसत् ततः।
नान्तर्भावितसत्त्वं चेत्कारणं तदसत्त्ततः* ॥

---

* अत्रायं प्रयोगः। किमु गवि गोत्वं त्वयोच्यते उत अगवि गोत्वम्? यदि गवि गोत्वं स्वीक्रियते तर्हि अनर्थकमेतत्। अगवि च गोत्वं यदि भवदिष्टं तर्हि सम्प्रति भवतु भवत्स्वपि गोत्वम्। अतो न तद्गतस्य तत्र प्रामाण्यं युज्यते इति ज्ञेयम्।

इति। ननु—प्रत्यक्षादिप्रमाणविषयाणां पदार्थानामकल्पितत्व-मवश्यं वाच्यम्। अन्यथाऽद्वैतश्रुतिभिन्नानां सर्वेषां प्रमाणानामप्रामाण्यापत्तेः—इति चेत्। न। तत्किं प्रत्यक्षादेः प्रामाण्यं व्यवहारसमर्थार्थ-विषयत्वेन वा सर्वथा ऽबाधितार्थविषयत्वेन वा? आद्ये। कल्पितार्थवि-षयत्वेनाप्युपपत्तेः। द्वितीये। अबाधितार्थग्रहणं किं स्वतः परतो वा? न प्रथमः। प्रत्यक्षादेः सम्भावितदोषत्वेन स्वप्रामाण्यं प्रति दोषाऽभा-वग्राहकमानान्तरसापेक्षत्वेन स्वतस्त्वाभावात्। नापरः। गृहीत-प्रामाण्यस्य प्रामाण्यनिश्चयपरत्वे ऽनवस्थानात्। अगृहीतप्रामाण्यस्य तथात्वे प्रामाण्यनिश्चयस्य वैयर्थ्यात्। प्रथमेनैव विषयनिश्चयाच्च। तदुक्तम्।

प्रत्यक्षादिप्रमाणानां प्रामाण्यं परतो यदि।
अनवस्था स्फुटा तत्र स्वतस्त्वे दोषसंश्रयः[१]॥

इति। तस्मादबाधिताज्ञानज्ञापकत्वाभावात्तत्परत्वाभावाच्च न प्रत्यक्षादिप्रमाणानामागमबाधकत्वम्। किन्तु। आगमस्यैव तत्त्वेन बाधकत्वम्। तदुक्तम्।

तत्परत्वात् परत्वाच्च निर्दोषत्वाच्च वैदिकम्।
पूर्वस्य बाधकं 'नायं सर्प' इत्यादिवाक्यवत्॥

इति। एतेन वक्ष्यमाणेन च "तवाद्वैतश्रुतिर्भङ्गी" इत्यादि-मूढजल्पितमप्यपास्तम्[२]।

---

१ 'दोषसंश्रयः' इति क. पुस्तके।
२ 'इति पूर्वं मूढजल्पितं' इति ग. पुस्तके।

ननु—तथापि उपजीव्यत्वेन* प्रत्यक्षस्यैव प्राबल्यं दुर्वारम्। तेन न परेण पूर्वस्य बाधः। प्रत्युत वर्ण-पदादिस्वरूपग्राहकतया मिथ्यात्व-बोधकमद्वैतागमं प्रति प्रत्यक्षस्योपजीव्यत्वादागमस्यैव तद्विरुद्धमि-थ्यात्वाऽबोधकत्वरूपो बाधो युज्यते। न च—मिथ्यात्वश्रुत्या वर्ण-पदादिसत्यत्वांशोपमर्दे ऽपि उपजीव्यस्वरूपांशोपमर्दाभावात् न उपजीव्यविरोध—इति वाच्यम्।

नेह नानास्ति किञ्चन।

इत्यादिश्रुतिभिः स्वरूपेणैव प्रपञ्चाभावबोधनात्—इति चेत्। नैवम्। 'वृषमानय' इत्यादिवाक्यं श्रवणदोषात् 'वृषभमानय' इत्यादिस्वरूपेण श्रुतवतो ऽपि शाब्दप्रमितिदर्शनेन—शाब्दप्रमितौ वर्ण-पदादिप्रत्यक्षमात्रं भ्रमप्रमासाधारणमेवापेक्षितं इति अद्वैता-गमेन वर्ण-पदादिप्रत्यक्षमात्रमुपजीव्यम्। तथा च स्वरूपोपमर्दे ऽपि नोपजीव्यविरोधः इति। अथ वा शाब्दप्रमितौ वर्ण-पदादि-स्वरूपसिद्ध्यनपेक्षायामप्ययोग्यशब्दात्प्रमित्यनुदयात् योग्यतास्वरूप-सिद्ध्यपेक्षास्ति। तदपेक्षायामपि नोपजीव्यविरोधः। "नेह नानास्ति" इत्यादिश्रुतिभिर्निषेधे ऽपि यावद्ब्रह्मज्ञानं अनुवर्तमानस्यार्थक्रिया-कारिणो ऽसद्विलक्षणस्य अनिर्वचनीयस्य प्रपञ्चस्वरूपस्याङ्गीकारात्। अन्यथा प्रत्यक्षादीनां व्यावहारिकप्रमाणानां निर्विषयत्वप्रसङ्गात्। न च—स्वरूपनिषेधे कथं वियदादिप्रपञ्चस्य स्वरूपलाभः। निषेधस्य प्रतियोग्यसहिष्णुत्वनियमात्—इति वाच्यम्। शुक्तावपि—इदं रजतं

* उपजीव्यत इत्युपजीव्यम्। अवश्यापेक्षितमिति यावत्। तादृशमुप-जीव्यं—जीव्यमुपजीवति यत्तदुपजीवकमनुमानादिरित्यर्थः।

—नेदं रजतं—इति प्रतीतिद्वयानुरोधेन अधिष्ठानगतात्यन्ताभावस्य बाधपर्यन्तानुवृत्तिकाऽसद्विलक्षणप्रतियोगिसहिष्णुत्वाभ्युपगमात्। एतेन—वियदादिप्रपञ्चस्य स्वरूपेण निषेधे शशशृङ्गवदसत्त्वमेव स्यात्—इति निरस्तम्। ब्रह्मज्ञाननिवर्त्याऽनिर्वचनीयस्वरूपाङ्गीकारेण वैषम्यात् इति। तस्मान्न प्रथमप्रवृत्तेन वर्तमानमात्रग्राहिप्रत्यक्षेण अद्वैतागमस्य अनन्तरप्रवृत्तस्य बाधः कर्तुं शक्यते श्रुतिप्रमाणस्य प्रमाणराजत्वात् इति दिक्। एतेन[1] शास्त्रं मिथ्या सत्यं वा? इत्यादि वल्गितमप्यपास्तम्।

ननु—दृश्यत्वावच्छेदेन ब्रह्मातिरिक्तस्य वियदादिप्रपञ्चस्य मिथ्यात्वसिद्धावपि तन्मिथ्या किं मिथ्या उत सत्यम्? आद्ये मिथ्यात्वमिथ्यात्वे ममसम्मतसत्यत्वे सत्यत्वापातः। एकस्मिन्धर्मिणि प्रसक्तयोर्विरुद्धयोर्धर्मयोः एकतरमिथ्यात्वे ऽपरसत्यत्वनियमात्। द्वितीये मिथ्यात्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तेः उभयथाप्यद्वैतव्याघातः—इति चेत्। अत्रोच्यते। मिथ्यात्वमिथ्यात्वे ऽपि प्रपञ्चसत्यत्वानुपपत्तेः। तत्र हि विरुद्धयोरेकमिथ्यात्वे ऽपरसत्यत्वं यत्र निषेध्यतावच्छेदकमुभयवृत्ति न भवेत्। यथा परस्परविरहरूपयोरजतत्वतदभावयोः शुक्तौ तत्र निषेध्यतावच्छेदकभेदनियमात्। प्रकृते च निषेध्यतावच्छेदकमेव दृश्यत्वं—इति। यथा गोत्वाश्वत्वयोरेकस्मिन्गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यम्—इति न एकतरनिषेधे ऽन्यतरस्य सत्यत्वं ब्रह्मणापि शक्यते सम्पादयितुं तद्वत्। तस्मान्मिथ्यात्वमिथ्यात्वे ऽपि

---

१ इदं वाक्यजातं ख. पुस्तके नास्ति।

24

न जगत्सत्यत्वापत्तिः । अथ वा वियदादिप्रपञ्चसमानसत्ताकत्वं[१] मिथ्यात्वम् । तच्च धर्मिणः सत्यत्वप्रतिक्षेपकत्वम् । धर्मस्य* स्वविरुद्ध-धर्मप्रतिक्षेपकत्वे ह्युभयवादिसम्मतं धर्मिसमसत्ताकत्वं तन्त्रम् । न तु पारमार्थिकत्वम् । अघटत्वादिप्रतिक्षेपके घटत्वादौ अस्माकं पार-मार्थिकत्वाभावात् । ब्रह्मणः सप्रपञ्चत्वं न धर्मिसमसत्ताकं—इति न निष्प्रपञ्चत्वप्रतिक्षेपकम् । अत एव मिथ्यात्वस्य व्यावहारिकत्वे धर्मिणो ऽपि व्यावहारिकत्वनियमात् । यद्वा यो यस्य स्वविषयसाक्षात्का-रानिवर्त्यो धर्मः स तत्र स्वविषयधर्मप्रतिक्षेपकः । यथा शुक्तौ शुक्तितादात्म्यम् । तद्विषयसाक्षात्कारानिवर्त्यमशुक्तित्वविरोधि । तत्रैव च रजततादात्म्यं तन्निवर्त्यं अरजतत्वाविरोधि इति व्यवस्थादर्शनात् एवं च मिथ्यात्वं कल्पितमपि प्रपञ्चसाक्षात्कारानिवर्त्यमिति सत्य-त्वप्रतिक्षेपकमेव । ब्रह्मणः सप्रपञ्चत्वं तु ब्रह्मसाक्षात्कारनिवर्त्यमिति च निष्प्रपञ्चत्वप्रतिक्षेपकमिति ।

एतेन शब्दगम्यस्य ब्रह्मणः सत्यत्वे शब्दयोग्यतायाः शाब्दधी-प्रामाण्यस्य च सत्यत्वं वक्तव्यम् । तथा च ब्रह्मातिरिक्तसत्यवस्तुसत्वेन द्वैतावश्यम्भाव इति वियदादिप्रपञ्चो ऽपि सत्यो ऽस्तु—इति पूर्वोक्तं निरस्तम् । व्यावहारिकस्यार्थक्रियाकारित्वस्य व्यवस्थापितत्वेन व्याव-हारिकयोग्यतयापि सत्यब्रह्मसिद्धिसम्भवात् । न च—ज्ञानकाण्ड-कर्म-

---

१ 'प्रपञ्चस्य' इति क. पुस्तके ।

---

* 'धर्मस्य' मिथ्यात्वादेरित्यर्थः ।

काण्डयोर्व्यावहारिकप्रामाण्याङ्गीकारेण कथमग्निहोत्रादिवाक्यप्रतिपादितस्य* स्वर्गस्य मिथ्यात्वम्? कथं वा सत्यादिवाक्यविषयस्य ब्रह्मणः पारमार्थिकत्वम्?—इति चेत्। नैवम्। अग्निहोत्रादिवाक्ये तादृशपदाभावात्। तत्सत्वे ऽपि वा प्रबलब्रह्माद्वैतश्रुतिविरोधात् तदसिद्धिरित्येव वैषम्योपपत्तेः। तथा च।

एकमेवाद्वितीयं ब्रह्म। नेह नानास्ति किञ्चन।

सत्यं ज्ञानमनन्तं ब्रह्म।

इत्यादिशास्त्रमेव स्वप्रमेयानुरोधेन स्वस्यापि कल्पितत्वमापादयति। अन्यथा स्वप्रामाण्यानुपपत्तेः। शब्दार्थ-योग्यतयोः समानसत्ताकत्वनियमस्य निष्प्रमाणकत्वात्। घटज्ञानप्रामाण्यस्य[1] घटत्ववत्सत्यभूतब्रह्मज्ञानप्रामाण्यस्यापि तदतिरिक्तघटितत्वेन मिथ्यात्वोपपत्तेश्च। तस्मादारम्भणाधिकरणन्यायेन† कृत्स्नस्यापि वियदादि-

१ एतन्नास्ति क. पुस्तके। ग. पुस्तके तु 'घटज्ञानं घटप्रामाण्यस्य सत्यत्वोपपत्तिमाश्रित्येव घटत्वबोधकम्' इति वर्तते। तन्न युक्तमिति प्रतिभाति।

* अग्निहोत्रेण स्वर्गो भवतीत्यस्मिन्नर्थे प्रमाणभूताः श्रुतयः। "अग्निहोत्रेण स्वर्गं लोकं लभते। अक्षय्यँ ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादयः।

† "तदनन्यत्वमारम्भणशब्दादिभ्यः" [शा. सू. अ. २ पा. १ सू. १४] एष एव आरम्भणन्यायः। 'तदनन्यत्वं' तयोः कार्यकारणयोः अनन्यत्वं। कार्य आकाशादिकं बहुप्रपञ्चं जगत्। कारणं परं ब्रह्म। तस्मात् कारणात् परमार्थतो ऽनन्यत्वं व्यतिरेकेण अभावः कार्यस्य अवगम्यते। कुतः 'आर-

प्रपञ्चस्य मिथ्यात्वं वज्रलेपायते। एतेनापि गुरुशास्त्रं मिथ्यासत्यमित्याद्यापादितं निराकृतं वेदितव्यम्।

## इति जगत्सत्यत्वखण्डनपूर्वकजगन्मिथ्यात्वोपपत्तिः।

---

ननु—वियदादिप्रपञ्चो न मिथ्या। अर्थक्रियाकारित्वात्। न हि शुक्तौ प्रतीतस्य रजतस्य सत्यरजतवद्व्यवहारः सम्भवति। अनुभवविरोधात्—इति चेत्। न। स्वप्नवदभ्युपगमात्। न च—स्वाप्नजलादिसाध्यावगाहनादिरूपार्थक्रिया असत्या भवतु नाम। कथं जाग्रज्जले ऽनुभूयमाना असत्या?—इति वाच्यम्। स्वसमानसत्ताकार्थक्रियाकारित्वेन साम्यात्। प्रतिपादितं चैतत्,

---

म्भणशब्दादिभ्यः आरम्भणशब्दः तावत् एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायां उच्यते।

यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं स्यात्।
वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्॥

इति श्रुतिः। एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृण्मयं घट-शरावोदञ्चनादिकं मृदात्मत्वाविशेषाद्विज्ञातं भवेत्। यतो वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते विकारो घटः शरावोदञ्चनञ्चेति। न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति। नामधेयमात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यमित्यादि यथायथमूह्यमिति सङ्क्षेपः। विस्तरस्तु शारीरकभाष्यतोऽवगन्तव्यः।

न तत्र रथा न रथयोगाः न पन्था नो भवन्ति ।
अथ तत्र रथान् रथयोगान् पथः सृजति ॥

इत्यादि-स्वप्नश्रुतिव्याख्याने वार्तिककृद्भिः ।

सर्वेन्द्रियवियोगे ऽपि सुखिदुःखिलमात्मनः* ।
स्वप्ने दृष्टमतः सङ्ग आत्मनस्तात्त्विको भवेत् ॥
नैवं मृषात्वात्[१]स्वप्नस्य मनोमात्रविजृम्भणात् ।
बाह्येन्द्रियवियोगे ऽपि न मनो लुप्यते तदा ॥
महाराजादयस्तस्य स्वप्नानुभवगोचराः ।
न वास्तवा इति ज्ञेयाः शयानेभ्यः पृथक्त्वतः ॥
गृहे शयाना ये दृष्टास्ते तु स्वप्ने वनं गताः ।
जाग्रद्दृष्टं मृषा स्वप्ने स्वप्नस्थं जागरे मृषा ॥
अन्योन्यव्यभिचारित्वात्स्वप्न-जाग्रदवस्थयोः ।
मिथ्यात्वमित्यसावर्थः स्वप्नश्रुत्या विवक्षितः ॥

इति । कल्पितपदार्थस्य अर्थक्रियाकारित्वे युक्त्यन्तरं च । यथा जागरे घटादिप्रकाशनक्षमतत्तत्पुरुषान्तरनिरीक्ष्यमाणाऽऽलोकवत्यपवरके सद्यः प्रविष्टेन कल्पितस्य सन्तमसः प्रसिद्धसन्तमस उचितार्थ-

---

१ 'मृषात्वे' इति ग. पुस्तके ।

---

* स्वप्नावस्थायां बाह्येन्द्रियवियोगे ऽपि सुखित्वं दुःखित्वं दृष्टं अतः तात्त्विक एवात्मनः सङ्ग इत्याशङ्क्य स्वप्नस्य मृषात्वात् मनोमात्रविजृम्भणत्वाच्च नैवमिति परिहरति । सर्वेन्द्रियाणां लोपे ऽपि मनो न लुप्यते स्वप्नावस्थायाम् । अत्र दृष्टान्तः 'महाराजादय' इति ।

क्रियाकारित्वं दृष्टम्। तेन तं प्रति घटाद्यावरणं दीपानयनेन तदपसरणं—इत्यादेरनुभवसिद्धत्वाच्च। किञ्च स्वाप्नपदार्थानामपि न केवलं प्रबोधबाह्यार्थक्रियामात्रकारित्वम्। स्वप्नाङ्गनाभुजङ्गमादीनां जाग्रद्बाह्यसुख-भयादिजनकत्वस्यापि दर्शनात्। स्वाप्नविषयजन्यस्यापि सुखभयादेः प्रबोधानन्तरमपि पुनः पुनर्मुखप्रसादशरीरकम्पादिना सह तदनुवृत्तिदर्शनात् प्रागपि सत्त्वमेवावसीयते। अत एव प्राणिनां पुनरपि सुखजनकविषयगोचरस्वप्ने वाञ्छा। अतादृशस्वप्ने च द्वेषः। सम्भवति च स्वप्ने ऽपि ज्ञानवदन्तःकरणवृत्तिरूपस्य सुखभयादेरुदयः। न च—स्वप्नाङ्गनादिज्ञानमेव सुखभयादिजनकम्। तच्च सदेव[1]—इति वाच्यम्। तस्यापि दर्शनस्पर्शनादिवृत्तिरूपस्य स्वप्नप्रपञ्चसाचिप्रत्यक्षस्य कल्पनामात्रसिद्धत्वात्। न हि उपरतेन्द्रियस्य चक्षुरादिवृत्तयः सत्या भवन्ति। न च—तद्विषयापरोक्षमात्रं सुखजनकम्। तच्च साक्षिस्वरूपं सदेव—इति वाच्यम् दर्शनात् स्पर्शने कामिन्याः यदा ऽस्पर्शनात् पाणिना स्पर्शने भुजङ्गमस्य अमर्मस्थले न स्पर्शनात् मर्मस्थले स्पर्शनेन सुखविशेषस्य भयविशेषस्य चानुभवसिद्धत्वेन स्वप्ने ऽपि तत्तत्सुखभयादिविशेषस्य कल्पितदर्शन-स्पर्शनादिवृत्तिविशेषजन्यत्वस्य अवश्यं वक्तव्यत्वादिति। तस्मान्मिथ्याभूतस्यापि वियदादिप्रपञ्चस्य अर्थक्रियाकारित्वे सिद्धे न तदर्थं परमार्थसदेवेति दिक्।

## इति मिथ्यापदार्थस्याप्यर्थक्रियाकारित्वसिद्धिः।

---

१ 'तच्च सदेव सदिति वाच्यम्' इति. ग. पुस्तके।

यच्चोक्तं नाहमीश्वर—इति प्रत्यक्षेण किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिपरस्परविरुद्धधर्माश्रयत्वलिङ्गेन भेदसिद्धिः—इति। तत्स्वरूपभेदादिखण्डनेनैव निराकृतमपि युक्त्यन्तरेणापि निराक्रियते।

तथा हि। भेदप्रत्यक्षस्य सम्भावितकरणदोषस्य असम्भावितदोषवेदजन्यस्य[1] ज्ञानेन बाध्यमानत्वात्। अन्यथा चन्द्रगताधिकपरिमाणग्राहि ज्योतिःशास्त्रस्य चन्द्रप्रादेशग्राहिप्रत्यक्षेण बाधापत्तेः। किञ्च। पाकरक्ते घटे-रक्तो ऽयं न श्यामः—इतिवत् 'सविशेषणे हि विधिनिषेधौ विशेषणमुपक्रामतो विशेष्याबाधके सति' इति न्यायेन जीव-परभेदग्राहिप्रत्यक्षस्य विशेषणीभूतधर्मविषयत्वमेव। न धर्मिविषयत्वम्। सच्चिदानन्दस्वरूपाविशेषात्। अतः—मेरुः पाषाणमयः। पर्वतत्वात्। हिमालयादिवत्—इत्यनुमानमपि न। आगमबाधात्। नापि प्रत्यक्षादिना आगमस्य बाधः। पूर्वमेव दूषितत्वात्। किञ्च। ईश्वराद्भिन्नो जीवः जीवाद्भिन्नश्चेश्वरः—इति ईश्वरप्रतियोगिकभेदस्य जीवानुयोगित्वम्। एवं जीवप्रतियोगिकभेदस्य ईश्वरानुयोगित्वम्। तथा च उभयप्रतियोगिकोभयानुयोगिकभेदस्य ग्रहीतुमशक्यत्वात्। न हि प्रतियोगि अनुयोगिप्रत्यक्षं विना भेदप्रत्यक्षं भवति। अभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वात्। अथ भेदज्ञानं प्रतियोग्यंशे संस्कारापेक्षणात् स्मृतिरूपमस्तु। प्रत्यभिज्ञानमिव तत्तांशे—इति चेत्। न। तथापि भेदगतप्रतियोगिवैशिष्ट्यांशे स्मृतित्वाभावात्। न च—कनकाचलो भेदप्रतियोगी, वस्तुत्वात्—इति भेदप्रतियोगिवैशिष्ट्यगोचरानुमित्या तत्संस्कार-

---

१ 'भेदजन्यज्ञानेन' इति क. पुस्तके। '०दोषवेदजन्यस्य' इति ख. पुस्तके।

सम्भवः। भेदज्ञानं विना अनुमानप्रवृत्त्ययोगेन आत्माश्रयापत्तेः। पक्ष-साध्य-पक्षताद्यभेदभ्रमे सति सिद्धसाधनादिना अनुमानाप्रवृत्त्या तदभेदज्ञानविघटनीयस्य तद्भेदज्ञानस्यापेक्षितत्वात्। अस्तु तर्हि भेदांश इव प्रतियोगिवैशिष्ट्यांशे ऽपि प्रत्यक्षत्वं—इति चेत्। न। प्रतियोगिनो ऽप्रत्यक्षत्वे तद्वैशिष्ट्यप्रत्यक्षायोगात्। सम्बन्धिद्वयप्रत्यक्षं विना सम्बन्धप्रत्यक्षासम्भवात्। ईश्वरस्य च प्रत्यक्षप्रमाणाविषयत्ववदनुमानविषयत्वस्यापि पूर्वमेव निराकृतत्वादिति दिक्।

नापि "द्वासुपर्णा०" इत्याद्यागमबाधः। तस्य बुद्धि-जीवपरत्वात्। ब्रह्मबुद्धिपरत्वाद्वा। किञ्च। लोकासिद्धभेदानुवादादि "द्वासुपर्णे"त्यादि वाक्यापेक्षया वक्ष्यमाणोपक्रमोपसंहाराद्यवगताद्वैततात्पर्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात्। नापि—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।

इत्यादिस्मृतिविरोधः। उत्तमपुरुषस्य क्षेत्रज्ञपरत्वेन भाष्यकृद्भिर्व्याख्यातत्वात्। न च जीव-परयोरभेदे ऽपि विरुद्धधर्माश्रयत्वानुपपत्तिः। शीतस्यैव जलस्य औपाधिकौष्ण्याश्रयत्वात्। स्वभावतो निर्गुणस्यैव जीवस्य अन्तःकरणोपाधिकर्तृत्वाश्रयत्वप्रतिभासोपपत्तेः। यदि च जलादावौष्ण्यमारोपितं तदा प्रकृते ऽपि तुल्यम्। न च—सिद्धान्ते कर्तृत्वस्य क्वचिदप्यभावादारोप्यभ्रमे हि तत्संस्काराभावे कथमारोप—इति वाच्यम्। अनिर्वचनीयवादाङ्गीकारेण लाघवादारोप्यविषयसंस्कारस्यैव हेतुत्वात्। न च—प्राथमिकारोप्ये का गतिः?—इति वाच्यम्। कर्तृत्वाद्यध्यासस्य प्रवाहानादित्वात्। यच्चोक्तं पूर्वम्। 'नवविशेषगुणोदय एव जीवानां संसारः। तदेव च

दुःखम्। युगपत्तन्निवृत्तिश्च मोक्षः। स च "दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानां०" [न्या. द. अ. १ आ. १ सू. २] इति सूत्रसिद्धो यस्मात् तस्मादात्यन्तिकदुःखनिवृत्तेरविनाशित्वात् परमपुरुषार्थत्वात् च अत्र विवेकिनां कामनोपपद्यते। न त्वितरवादिसम्मतमोक्षे—इति तत्सर्वमसङ्गतमेव।

तथा हि। न हि स्वाभाविकधर्माणां धर्मिनिवृत्तिं विना समुच्छेदः सम्भवति। घटे सति तद्गतयावद्विशेषगुणनिवृत्त्यदर्शनात्। उक्तं च वार्तिककृद्भिः।

आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम्।
न हि स्वभावो भावानां* व्यावर्त्तेदौष्ण्यवद्रवेत्॥

इति। तथा च धर्मिणि सत्येव तेषां निवृत्तिरित्यङ्गीकरणे शून्यवादप्रसङ्गः। अत एवोक्तं ब्रह्मसिद्धिकारैः।

"नाविशेषगुणनिवृत्तिलक्षणा विदेहमुक्तिः उच्छेदपक्षान्न भिद्यते। न हि सतो ऽप्यात्यन्तिको दर्शनाभावो ऽभावाद्विशिष्यते। कश्च सर्वप्रियतमस्यात्मनो ऽभावमभिकाङ्क्षेत् ? तथा सति अपुरुषार्थो मोक्षः स्यात्"।

---

१ ख. पुस्तके इदं नास्ति।
२ 'प्रियतममात्मनः' इति ख. पुस्तके।
३ '०काङ्क्षेदित्यपुरुषार्थ' इति ग. पुस्तके।

---

* भावानां पदार्थानां स्वभावः न हि व्यावर्त्तेत्। यथा वह्नेरौष्ण्यं स्वभावः। स न कथमपि व्यावृत्तो भवति तथा, इति तात्पर्यम्।

इति। सर्वविशेषगुणनिवृत्तिविशिष्टे चात्मनि प्रमाणाभावात् अज्ञायमानस्य च सर्वदुःखाभावस्य अपुरुषार्थत्वाच्च अन्धकारप्रवृत्त-नृत्यवदसत्त्वच्च त्वप्राप्तिर्दुष्परिहरैव। अथ—अज्ञायमानस्यापि स्वरूपेण पुरुषार्थत्वं—इति चेत्। न। मानाभावेन तत्स्वरूपस्यैवासिद्धेः। तत्प्रमाणाभिमतानामनुमानादीनां आभासत्वात्। अथ—

अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः।

इति श्रुतिरेव तत्र मानं—इति चेत्। न। जीवतोऽपि देहाभिमानरहितस्य सुखदुःखसम्बन्धाभावबोधनपरत्वात् तस्याः। न च—विशेषगुणरहितावस्था। विशेषप्रमापकत्वाभावात् तत्प्रतिपादकपदाभावाच्च। किञ्च। सुखदुःखध्वंसस्यापि न पुमर्थत्वम्। पुनर्दुःखोत्पादसम्भवात्। इदानीन्तनदुःखध्वंसवत्। अथ—दुःखप्रागभावस्य दुःखकारणत्वात् तन्निवृत्तौ तु दुःखान्तरानुत्पाद इति मतम्—तदपि न। कियतां प्रागभावानां निवृत्तावपि अन्येषां सद्भावात्। सर्वेषामेकदा[1] निवृत्तौ मानाभावात्। प्रागभावनिवृत्तेः पुरुषव्यापारासाध्यतया तदर्थं पञ्चाध्यायीप्रभृतिशास्त्राभ्यासश्रवण-मनन-निदिध्यासनादिप्रयासानां निष्फलत्वापत्तेः। दुःखोत्पत्त्यर्थमेव प्रवृत्तिप्रसङ्गाच्च। परमपुरुषार्थभूतसर्वप्रकारसुखनिवृत्तित्वेन द्वेषस्यैवाचोचितत्वात्। को हि सर्वप्रकारसुखविरहेण शुष्ककाष्ठवदवस्थातुमिच्छेत्। श्रवणादिसाध्यात्मतत्त्वज्ञाने जातेऽपि सञ्चितकर्मणां कायव्यूहेन भोगानन्तरं मोक्षभागित्वस्वीकारेण तत्त्वज्ञानस्यापि व्यर्थत्वात्।

किञ्च कायव्यूहेनापि तेषामशेषाणां भोगो न सम्भवति।

---

१ '०मेकधा' इति क. पुस्तके।

सञ्चितकर्मणामनन्तत्वेनाष्टाङ्गयोगेनापि परिच्छेत्तुमशक्यत्वात्। सर्वज्ञेनापीश्वरेण* अनन्तत्वेनैव विषयीकरणाच्च।

तमेव विदित्वातिमृत्युमेति†। नान्यः पन्था विद्यते ऽयनाय।

ब्रह्म वेद ब्रह्मैव भवति। तरति शोकमात्मवित्।

इति श्रुतेः।

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।

योगी मायाममेयां यत्[१] तस्मै ज्ञानात्मने नमः॥

इति।

ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिण्डिमः।

इति स्मृतेश्च।

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।

इति भगवद्वचनाच्चेत्यादि।

अविद्याया परं पारं तारयसि।

इत्यादिश्रुतार्थापत्तिश्च ब्रह्मज्ञानात् ब्रह्मभावः श्रूयमाणः तद्व्यवधायकाज्ञाननिवृत्तिमन्तरेण नोपपद्यत इति ज्ञानादज्ञाननिवृत्तिं गमयति। न तु साधनान्तरसापेक्षम्।

तथा।

---

१ 'यत्तस्मै' इति क. पुस्तके। 'मायाममेयाय' इति ग. पुस्तके च।

---

* 'ईश्वरेण' भगवता श्रीकृष्णेन गीतायां सञ्चितकर्मणामनन्तत्वमेव प्रतिपादितं तृतीयेऽध्याये। तत्रैवानुसन्धेयम्। विस्तरभयादत्र नोक्तम्।

† अत्र 'मृत्यु' शब्देन अविद्यैव ग्राह्येति पूर्वाचार्याः।

अनृतेन हि प्रत्यूढाः। नीहारेण प्रावृताः।

अन्यद्युष्माकमन्तरं बभूव।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।

इत्यादिश्रुति-स्मृतिभ्यो ऽज्ञानमेव मोक्षव्यवधायकमवगतम्। किञ्च। भगवद्भजनाञ्जननिर्मलीकृतचक्षुःप्रत्यक्षेणैवाज्ञाननिवृत्तिमनुभवति। तत्र का विप्रतिपत्तिः। तथा च ब्रह्मात्मतत्त्वज्ञानातिरिक्तसाधनान्तरस्य कायव्यूहादेरनपेक्षितत्वात् वृथैव स्वीकार इति। तस्माद्ब्रह्मात्मतत्त्वज्ञानेन वक्ष्यमाणेन सञ्चितकर्मणामशेषाणां नाशः। क्रियमाणानां चासम्बन्धः। तथा च पारमर्षं सूत्रम्।

तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ तद्व्यपदेशात्[1]*।

[शा. भा. अ. ४ पा. १ सू. १३]

इति।

---

१ 'पूर्वाद्ययोः' इति वङ्गदेशमुद्रिते भामतीपुस्तके वर्तते। परमेतदशुद्धम्।

---

* 'तदधिगमे' तस्य ब्रह्मणः अधिगमे सति। 'उत्तर-पूर्वाघयोः' पूर्वोत्तरपापयोः। 'अश्लेष-विनाशौ' उत्तरस्य अश्लेषः पूर्वस्य विनाशः। 'भवतः कस्मात् 'तद्व्यपदेशात्' तथा हि। ब्रह्मविद्याप्रक्रियायां सम्भाव्यमानसम्बन्धस्य आगामिनो दुरितस्य अनभिसम्बन्धं विदुषो व्यपदिशति। "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते इति"। तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति। "तद्यथेषिकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति सङ्क्षेपः।

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते ऽर्जुन।

इत्यादिभगवद्वचनाच्च। एतन्मूलभूता श्रुतिश्च।

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे*॥

इति।

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।

इति च पूर्वोदाहृतं स्मृतिवचनं प्रारब्धपरमिति। न सञ्चितपरम्।

तत्सुकृतदुष्कृते विधुनुते।

इत्यादिश्रुत्यन्तराच्च। यच्च न्यायभाष्ये उक्तम्।

"शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमो ऽपवर्गः।
बहुच कृच्छ्रं घोरं पातकं लुप्यते" इति।

"कश्च बुद्धिमान् सर्वदुःखोच्छेदं सर्वदुःखासंविदमपवर्गं न रोचयेदिति। यथा मधु-विषसम्पृक्तान्नवत्"।

---

* अस्याः श्रुतेरियं व्याख्या। परो ऽपि हिरण्यगर्भः सो ऽप्यवरो ऽपकृष्टो ऽध्यस्तत्वात् यस्मात् स 'परावरः' तस्मिन्। 'हृदयग्रन्थिः' हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासो ऽनाद्यविद्यानिर्मितत्वेन ग्रन्थिवत् दृढसंश्लेषरूपत्वात् ग्रन्थिरित्युच्यते। 'सर्वसंशयाः'—आत्मा देहातिरिक्तो न वा? अतिरिक्तो ऽपि किं स्वप्रकाशज्ञानस्वरूपः ज्ञानाश्रयः कर्ता भोक्ता वा? अकर्तापि केवलभोक्ता वा? अभोक्तापि किं ब्रह्मस्वरूपो न वा? ब्रह्मस्वरूपो ऽपि किं एतज्ज्ञानेनैव मोक्षः? इत्यादयः। 'छिद्यन्ते' नश्यन्तीत्यर्थः। 'क्षीयन्ते चास्य कर्माणि' अनारब्धान्यागामिजन्मकारणानि। तदेतद्ग्रन्थ्यादित्रयमविद्यानिर्मितत्वात् ब्रह्मत्वदर्शनेन निवर्तते इति तात्पर्यम्।

इति । तदप्यप्रामाणिकमेव । दुःखाभावस्यापि सुख*शेषत्वेन पुरुषार्थत्वात् । स्वतन्त्रपुरुषार्थद्वयकल्पने गौरवात् मानाभावाच्च । सुखकाले दुःखाभावस्य नियतत्वात् । दुःखाभावकाले च सुषुप्तिप्रलयादौ सुखस्याभावाच्च । न सुखस्य दुःखाभावार्थत्वेन पुरुषार्थत्वसम्भावनापि । व्यभिचारात् । अधिकसुखेच्छया लब्धसुखोपेक्षा युज्यते । न तु केवलदुःखाभावाय—इति प्रेक्षाकारिणां पन्थाः । किञ्च । दुःखध्वंसस्य नित्यत्वमप्यनुपपन्नमेव ।

तथा हि । सर्वस्मिंश्च मते मोक्षस्यागन्तुकत्वाभ्युपगमे भावत्वेऽभावत्वे वा जन्यत्वेनावश्यं विनाशित्वम् । जन्यमात्रस्यैव लाघवेन विनाशित्वप्रयोजकत्वात् । प्रतियोगिनिष्ठस्य कस्यचिदतिशयस्य भावरूपस्यैव विनाशिनो ध्वंसत्वाभ्युपगमात् । अधिकरणानतिरिक्ताभावानभ्युपगमाद्वा न ध्वंसे व्यभिचारः । घटो ध्वस्त—इति प्रतीतेर्ध्वंसाश्रयत्वेन वा तत्प्रतियोगिकत्वाश्रयत्वेन वा घटविषयीकरणत्वात् । तस्मिन्काले घटासत्वे च निराश्रयधर्माप्रतीत्या[१]योगात्† । घटस्य ध्वंस—इति षष्ठ्यर्थसम्बन्धस्य—राहोः शिरः—इतिवत् दृष्टत्वान्न तार्किकाभ्युपगतनिष्प्रतियोगिकध्वंससिद्धिः । ननु—घटस्य ध्वंसकालेऽपि सत्वे पूर्ववत्प्रत्यक्षं स्यात्—इति चेत् । न । प्रत्यक्षमन्तरेणापि कुड्यादिव्यवहितस्य सत्ताङ्गीकारात् । प्रत्यक्षत्वाऽव्याप्येन सत्वेन तदा-

१ 'आश्रयरहित०' इति क. पुस्तके ।

* 'सुखशेषत्वेन' सुखव्याप्यत्वेन इत्यर्थः ।

† 'निराश्रयधर्मप्रतीत्ययोगात्' इत्येव वक्तुमुचितमिति प्रतिभाति ।

पादनाऽयोगात्, व्यवधानानां फलैकान्नियतत्वाच्च । कुड्यादिविलक्षण-व्यवधानं तु ध्वंसान्यथानुपपत्तिरेव गमयतीति न दोषः। न चैवं सति तत्कार्यवादोक्तदोषापत्तिः । सदसद्विलक्षणत्वेन उभयपक्षोक्त-परिहारात् । तस्मादात्मनो दुःखाभावो नाम कश्चिदतिशयो गुणाधानलक्षणो मलक्षालनलक्षणो वा वक्तव्यः। उभयथापि तस्य ध्रुवमनित्यत्वम् । उत्पत्त्याप्ति-विकृति-संस्कृतिलक्षणानां चतुर्णामपि क्रियाफलानां विनाशित्वनियमात्। मोक्षस्य च सर्ववादिभिरवि-नाशित्वाभ्युपगमात् । तदुक्तं वार्तिककृद्भिः ।

उत्पत्तिराप्ति-विकृतिः संस्कृतिश्च क्रियाफलम् ।
मुक्तिर्विलक्षणैतेभ्यः तेनेहानर्थको विधिः ॥

इति । भगवद्भाष्यकारैश्च महता प्रबन्धेन प्रतिपादितमेतत्सम-न्वयाधिकरणे इति दिक् ।

ननु औपनिषदपक्षे ऽपि अनुपपत्तिः समाना।

तथा हि। अज्ञाते कामनानुदयात्। ज्ञाते तत्र कामना वाच्या। तथा च कथमहेयानुपादेयनित्यसिद्धे आत्मनि सा भवतु। सिद्धे इच्छाविरहात् । संसारावस्थायामपि मोक्षापत्तेश्च । तदुक्तम्।

किञ्च[1] मानादविज्ञाता विमुक्तिः काम्यते न च ।
ज्ञातायां त्वात्मनित्यत्वात् नितरां नास्ति कामना॥

इति । न च—संसारावस्थायां अविद्यावृतत्वात् विद्यमानो ऽप्यद्व-यानन्दो न भासते। विद्यया त्वविद्यायां निवृत्तायां स्वप्रकाशत्वादानन्द-रूपेण स्वयमेव प्रकाशते—इत्यविद्यानिवृत्तिविशिष्टत्वेन काम्यता—

---

१ 'यथा' इति क. पुस्तके। 'तदन्माना०' इति ग. पुस्तके च दृश्यते।

इति वाच्यम्। अविद्यानिवृत्तेर्दुर्निरूपितत्वस्य पूर्वमेव दर्शितत्वात्। किञ्च। सा निवृत्तिरात्मभिन्ना तत्स्वरूपा वा? आद्ये द्वैतापत्तिः। अद्वैतश्रुतिव्याकोपश्च। द्वितीये पूर्वोक्तदोषः—इति चेत्। अत्रोच्यते। न सिद्धत्वमात्रेण आत्मनीच्छाविरहः। सिद्धत्वं किं सत्त्वं वा? ज्ञायमानत्वं वा? अप्रतिबद्धसाक्षात्कारत्वं वा? नाद्यः। विस्मृतग्रैवेयकप्राप्तौ रज्जुभुजङ्गमनिवृत्तौ च व्यभिचारात्। अत एव न द्वितीयो ऽपि। तस्येच्छाप्रद्योतकत्वात्। तृतीयस्तु भवतीच्छापरिपन्थी। स तु प्रकृते नास्ति। असम्भावनादिप्रतिबन्धात्। अत एव पित्तदूषितरसनस्य सितामश्नतो मधुरत्वेन तां जानतो ऽपि न माधुर्यनिमित्ततृप्तिविशेषोत्पत्तिः। पित्तदोषेण माधुर्यसाक्षात्काराभावात्। तथा च द्विविधमिष्टम्। वस्तुतो ऽप्राप्तं ग्रामादि, प्राप्तमपि भ्रमव्यवहितं कण्ठचामीकरादि। एवं परिहार्यमपि द्विविधम्। वस्तुतः परिहृतं गर्तादि, सर्वदा परिहृतं रज्जुभुजङ्गादि; भ्रममात्रादपरिहृतमिव। तत्र आद्य*योः क्रियाव्यवधानौ प्राप्ति-परिहारौ। द्वितीययोस्तु† साक्षात्कारमात्रसाध्यौ। अत्रैव च परमपुरुषार्थत्वं मन्यन्ते। क्रियाव्यवधानाभावात्। तथा च परमानन्दप्राप्त्यविद्यानिवृत्त्योरपि भ्रमव्यवहितत्वादसिद्धत्वप्रत्ययेन कामनाविषयत्वमुपपद्यत एव। तदुक्तम् वार्तिके।

न युक्तं कामनामुक्तौ पुंसां नास्तीति भाषितुम्।
देश-कालानवच्छिन्नसुखाद्यर्थित्वदर्शनात्॥

---

* 'आद्ययोः' ग्राम-गर्तयोरित्यर्थः।

† 'द्वितीययोः' कण्ठचामीकर-भुजङ्गमयोः प्राप्ति-परिहारौ साक्षात् दर्शनेनैव भवत इत्याशयः।

परिहार्यं तथानिष्टं कण्टकादि जिहासति ।
रज्ज्वां सर्पादि किञ्चिच्च त्यक्तमेव जिहासति ॥
नियतोपायसाध्यत्वादप्राप्य[1]-परिहार्ययोः ।
विधितः प्रतिषेधाच्च साधनापेक्षिता भवेत् ॥
अज्ञानान्तरितत्वेन सम्प्राप्त-त्यक्तयोः पुनः ।
याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्पते ॥

इति । यत्तु अविद्यानिवृत्तेर्दुर्निरूपत्वमुक्तं तन्न । पञ्चमप्रकारत्वाभ्युपगमात् ।

तथा हि । आत्मातिरिक्तैवाविद्यानिवृत्तिः । सा च न सत्या । अद्वैतश्रुतिविरोधात् । नाप्यलीका । ज्ञानसाध्यत्वायोगात् । नापि सदसदात्मिका । विरोधात् । नाप्यनिर्वाच्या । तस्याः सादित्वेन अविद्योपादानकत्वे मुक्तावपि अविद्यानुवृत्तिप्रसङ्गात् । किन्तु । उक्तप्रकारचतुष्टयोत्तीर्णपञ्चमप्रकार इति अन्यथानुपपत्तेः सर्वतो बलीयस्त्वात्[2] । अद्वैतश्रुतेश्च सदद्वैतमात्रविषयत्वात् न विरोधः । एवमस्थूलादिवाक्यमप्यनुगृहीतं भवति । स्थूलत्वाद्यभावानामात्मनि प्रमेयत्वात्[3] । अद्वितीयशब्देनापि द्वितीयाभावबोधनाच्च । अन्यथा केवलात्मबोधेन सजातीय-विजातीयभेदाभावाप्रतीतौ किमद्वैतश्रुत्या विरुद्ध्येत् । तस्मादभावाभ्युपगमो ऽद्वितीयसाधक एवेति न

---

१ '०दप्राप्त०' इति क. पुस्तके दृश्यते । ख. पुस्तके तु '०दप्राप्तपरिहार्ययोः' इत्युपलभ्यते ।

२ 'बलवत्त्वात्' इति ख. पुस्तके ।

३ 'प्रतीतत्वात्' इति ख. ग. पुस्तकयोः ।

काद्यनुपपत्तिः—इति दृष्टिसिद्धिकारादयः । वस्तुतस्तु । अभावस्या-चैतन्यात्मकत्वात् स्वप्रकाशचैतन्यसम्बन्धेनैव भानमभ्युपेयम् । कूटस्थ-स्यासङ्गस्य भावस्य वास्तवसम्बन्धायोगात् । काल्पनिकत्वे ऽवश्यवाच्ये सर्वस्या अपि कल्पनायाः अविद्यामूलत्वात् अभावकल्पनाप्यविद्या-मूला इति न अनिर्वचनीयवैलक्षण्यम् । तदुक्तं वार्तिककृद्भिः ।

नान्यदज्ञानतो ऽस्तित्वं द्वितीयस्यात्मनो यथा ।
निवृत्तिस्तद्वदेवास्य नावगत्यात्मनो ऽपरा ॥[१]

इति । अस्थूलादिवाक्यानां च स्थूलादिविलक्षणात्मरूपमात्रबो-धकत्वम् । न तत्तदभावबोधकत्वम् । कल्पितपदार्थभावाभावयोरधि-ष्ठानस्वरूपमात्रत्वात् । यथा अज्ञातं शुक्तिद्रव्यमेव रजतभावात्म-कम् । तदेव ज्ञातं रजताभावात्मकम् । तदसाधारणस्वरूपस्यैव रज-ताभावत्वात् । एवमत्राप्यज्ञात आत्मा सर्वद्वैतभावात्मकः । तद-साधारणरूपस्यैव द्वैताभावरूपत्वात् । तदुक्तम् ।

स्थूलापकृतिरत्र स्यात् वस्तु यत्पारमार्थिकम् ।
नाभावनिष्ठो ऽन्यत्रापि निषेधः किमुतापरे ॥
अक्षरं येन रूपेण स्थूलं वस्तु निषेधति ।
तेनैवांशादि निःशेषं तस्य सर्वविरोधतः ॥
अन्येनान्येन रूपेण विरुद्धात् हन्ति पावकः ।
विरोधिना तथा तदत्रेह स्थूलाद्यपक्रियाम् ॥
मानित्वादिनिषेधः स्याद्यथैवाक्रियरूपतः ।
प्रत्यक्कूटस्थरूपेण तथा सर्वनिषेधकृत् ॥

१ '०वगम्या' इति क. पुस्तके ।

कूटस्थबोधपूर्णत्वं प्रत्यक्त्वं वस्तुनः स्वतः ।
एतदस्य विरोधित्वं कार्यकारणवस्तुभिः ॥

इति । भूतलादिस्वरूपस्यैवाभावव्यवहारहेतुत्वं प्राभाकरैरङ्गीक्रियते । तार्किकैरपि घटाभावो—घटो न भवति—इत्यादौ अभावप्रतियोगिकाभावान्तरानभ्युपगमात् तत्स्वरूपस्यैवाभावबुद्धिहेतुत्वमङ्गीकृतम् । तद्वदस्माकं किं न स्यात् । एतदेवाभिप्रेत्य उक्तम् ।

नाभावनिष्ठो ऽप्यत्रापि निषेधः,—

इति । तस्मादखण्डानन्दाद्वितीयचैतन्यसन्मात्र आत्मा ज्ञातः सन् अविद्यानिवृत्तिः इत्युच्यते । अत्रैव च सर्वपुरुषार्थविश्रान्तिः । कृत कृत्यं प्राप्तं प्रापणीयम् ।

आत्मलाभान्न परं विद्यते ।

इति स्मृतेः । तस्मादनिर्वाच्याया* अविद्याया निवृत्तिरपि अनिर्वाच्यैव इति सिद्धम् । अथ—तदनुवृत्तौ तदुपादानाज्ञानस्याप्यनुवृत्तिनियमादनिर्मोक्षप्रसङ्ग—इति चेत् । न । तदनुवृत्तौ प्रमाणाभावात् । उत्पत्तेः प्रथमसमयमात्रसंसर्गिभावविकारत्ववत् निवृत्तेरपि चरमसमयमात्रसंसर्गिभावविकारोपपत्तेः । अत एव यथा पूर्वं पश्चाच्च उत्पत्स्यते । उत्पन्न—इति च भाविभूतभावेन व्यवह्रिय-

---

* 'अनिर्वाच्यायाः' निर्वचनं कर्तुमयोग्यायाः । वेदान्तिभिरादृताया मायायाः विद्याविद्याख्यौ द्वौ भेदौ । "विद्यां चाविद्यां च यस्तद्वेदोभयँ सह" इति श्रुतेः । 'सत्त्वासत्त्वाभ्यामनिर्वचनीया अघटितघटनासामर्थ्यवती काचन ईश्वरशक्तिर्माया' इति मायाया लक्षणात् । तद्भेदभूता अविद्यापि अनिर्वचनीयैवेति तात्पर्यम् ।

माणाया उत्पत्तेः प्रथमसमयमात्रे—उत्पद्यत—इति वर्तमानव्यवहारः। एवं पश्चान्निवर्तिष्यते। निवृत्त—इति—च भाविभूतभावेन व्यवह्रियमाणाया निवृत्तेः चरमसमयमात्रे निवर्तते। नश्यति—ध्वंसत—इति वर्तमानव्यवहारः। निवृत्तेरनुवृत्तौ तु चिरं नष्टे ऽपि घटे—इदानीं निवर्तत—इत्यादिव्यवहारः स्यात्। आख्यातानां प्रकृत्यर्थवर्तमानत्वाद्यर्थाभिधायित्वात्। अथ—तेषां स्वस्वाभिहितसङ्ख्याश्रयप्रकृत्यर्थकर्तृकर्मगतवर्तमानत्वाद्यर्थवाचकत्वं वा? स्वाभिहितप्रकृत्यर्थानुकूलव्यापारगतवर्तमानत्वाभिधायित्वं वा अस्तु। तथा च। निवृत्तिक्रियाकर्तुः चिरं चूर्णितस्य घटस्य तदुत्पत्त्यनुकूलव्यापारस्य वा अवर्तमानत्वात् न उक्तातिप्रसङ्गः—इति चेत्। न। आद्ये। उत्पन्ने ऽपि घटे—उत्पद्यत—इति व्यवहारापत्तेः। उत्पत्तिक्रियाकर्तुर्घटस्य विद्यमानत्वात्। द्वितीये आमवातजडीकृतकलेवरे उत्थानानुकूलयत्नवति उत्थानानुदये ऽपि—उत्तिष्ठति—इति व्यवहारापत्तेः। आख्यातार्थस्य प्रकृत्यर्थभूतोत्थानानुकूलस्य यत्नरूपव्यापारस्य वर्तमानत्वात्। तस्मात्प्रकृत्यर्थगतमेव वर्तमानाद्याख्यातार्थ इति ध्वंसस्थायित्वे चिरनिवृत्ते ऽपि घटे—निवर्तते—इति व्यवहारो दुर्वारः। यदि च मुद्गरादिप्रकलिते घटे ध्वंसो नाम कश्चिदभावः तत्प्रतियोगिकः स्थायी भूतलाद्याश्रित एव उपेयते, तदा कपालमालापसरणे तदनपसरणे ऽपि मणि-शरावादिविशेषदर्शने च किमिति प्रत्यक्षो न स्यात्। अथ—कपालसंस्थानविशेषादिना अनुमेयो घटादिध्वंसो न प्रत्यक्षः—इति चेत्। तर्हि तेन मुद्गरपातकालीनस्य उत्पत्तितद्भावविकारतया प्रतियोग्याश्रितस्य ध्वंसस्यानुमानं सम्भवतीति न ततः

पश्चादनुवर्तमानप्रतियोग्यधिकरणाश्रिताभावरूपध्वंससिद्धिः । इह भूतले घटो ध्वस्तः—इति भूतले ऽधिकरणत्वव्यवहारस्य—इह भूतले घट उत्पन्नः—इतिवद्भावविकारयुक्तप्रतियोग्यधिकरणत्वविषयत्वोपपत्तेः । घटध्वंसानन्तरं भूतले घटाभावव्यवहारस्य घटापसरणानन्तरं तदभावव्यवहारवत् समयविशेषसंसर्गात्यन्ताभावावलम्बनतोपपत्त्या ध्वंसविषयस्याकल्पनीयत्वात् ।

ननु—एवं सति घटोत्पत्तेः पूर्वं तदभावव्यवहारो ऽपि उत्पत्त्यन्ताभावेन चरितार्थ इति प्रागभावो ऽपि न स्यात्—इति चेत् । इष्टापत्तेः । अथैवं प्रागभावाधारकालः पूर्वकालो ध्वंसाधारोत्तरकाल—इति निर्वचनासम्भवात् काले पूर्वोत्तरादिव्यवहारः किमालम्बनः स्यात्—इति चेत् । उच्यते । घटादिषु प्रतियोगित्वादिव्यवहारवत् अखण्डः कश्चिद्धर्मगोचरो ऽस्तु। अभावरूपस्याऽ[1]पि ध्वंसाभ्युपगमे ऽपि तेषु ध्वंसत्वादेरखण्डस्य वक्तव्यत्वात् । अथ—जन्याभावं सखण्डमेव ध्वंसत्वं—इति चेत् । न । तर्हि ध्वंसप्रागभावरूपस्य घटस्य तत्ध्वंसत्वापत्तेः । अथ—सप्तमाभावपदार्थरूपाभावत्वं विवक्षितं—इति चेत् । न । घटस्य प्रागभावं प्रत्यपि ध्वंसत्वाभावप्रसङ्गेन घटकाले प्रागभावोत्तरकालव्यवहारस्य निरालम्बनत्वप्रसङ्गात् । अथ—प्रतियोग्यतिरिक्त एव प्रागभावध्वंसो ऽस्तु—इति चेत् । न । तथा सति तुल्यन्यायतया ध्वंसप्रागभावो ऽपि प्रतियोग्यतिरिक्तः स्यात् इति प्रागभावध्वंसस्यापि प्रागभावो ऽन्यः तस्यापि कश्चित् ध्वंसः तस्यापि प्रागभावो ऽन्यः इत्यप्रामाणिकानवधिकध्वंसप्रागभावकल्पनापत्तेः ।

१ '०स्यापि' इति ग. पुस्तके ।

न च अन्यध्वंसत्वमात्माश्रयादिदोषशून्यं निर्वक्तुं शक्यम्। एवं प्रागभावत्वमपि इत्यलं विस्तरेण।

तस्मान्न पूर्वं प्रागभावो न च पश्चात् ध्वंसाभावः। किन्तु मध्ये परं कियन्तं कालं अनिर्वचनीयोत्पत्ति-स्थिति-ध्वंसप्रागभावविकारवान् घटाद्यध्यासः। एवमविद्यानिवृत्तिरपि वक्ष्यमाणब्रह्मात्मसाक्षात्कारोदयानन्तरक्षणवर्ती अनन्यातिशयबाधरूपः कश्चिद्भावविकार एवेति। तस्याश्च मुक्तावनुवृत्त्यभावात् न तदनिर्वाच्यत्वे क्वापि क्षतिः इति। तदुक्तं विष्णुपुराणे।

एवमेकमिदं ब्रह्म न भेदि* सकलं जगत्।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः॥
तदेतदुपदिष्टं ते सङ्क्षेपेण महामुने।
परमार्थं[१] सारभूतं यदद्वैतमशेषतः॥
तद्भावभावनापन्नस्ततो ऽसौ परमात्मना।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥
अनेकजन्मसाहस्रीं संसारपदवीं व्रजन्।
मोहश्रमं प्रयातो ऽसौ वासनारेणुगुण्ठितः॥

---

१ 'परमार्थसारभूतं यत्तदद्वैतमशेषतः' क. पुस्तके। एतदशुद्धमिति प्रतिभाति।

---

* 'न भेदि' न भेदप्रतियोगि। भेदस्य प्रतियोगिनश्च ब्रह्मणि कल्पितत्वस्य ग्रन्थकृता पूर्वमेव दर्शितत्वादत्र न विस्तरः।

प्रक्षाल्यते यदासौ ऽस्य रेणुर्ज्ञानोष्णवारिणा ।
तदा संसारिपान्थस्य याति मोहश्रमः शमम् ॥
मोहश्रमे शमं याते स्वस्थान्तःकरणः पुमान् ।
अनन्यातिशयं बाधं परं निर्वाणमृच्छति ॥

इति ।

अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा विज्ञेयः* [मां. उ. १६]

इति माण्डूक्यश्रुतिश्च । एतेन – शर्करातक्रोजिनोरिव – इति वैष्णवम्मन्यानां उद्गार अपास्तः । अथ – एवमपि तत्वधीकालपर्यन्तमनुवर्तमानः संसारबन्धः क्वगत ? इति प्रश्ने किमुत्तरम् । अथ – भवद्दर्शने यदुत्तरं – इति चेत् । अस्मद्दर्शने आत्यन्तिको दुःखध्वंसः तत्वज्ञानेन जायते – इति चेत् । किं तावता । दुःखं तु क्वगतमिति चेत् । न कुत्रापि गतम् । तत्वज्ञानोत्तरं तु न प्रतीयते –

---

* यस्मात् 'अदृष्टं' तस्मात् 'अव्यवहार्यम्' । 'अग्राह्यं' कर्मेन्द्रियैः । 'अलक्षणं' अलिङ्गमित्येतदननुमेयमित्यर्थः । अतएव 'अचिन्त्यं' अत एव 'अव्यपदेश्यं' शब्दैः । 'ऐकात्म्यप्रत्ययसारं' जाग्रदाद्यवस्थानेष्वेको ऽयमात्मेत्यव्यभिचारी यः प्रत्ययः तेन अनुसरणीयम् । अथ वा । एक आत्मप्रत्ययः सारं प्रमाणं यस्य तुरीयस्य अधिगमे तत्तुरीयमैकात्म्यप्रत्ययसारम् । 'प्रपञ्चोपशमं' इति । जाग्रदादिस्थानधर्माभानमुच्यते । अत एव 'शान्तं' अविक्रियं 'शिवं' यतो 'ऽद्वैतं' भेदविकल्परहितं च 'चतुर्थं तुरीयं' 'मन्यन्ते स आत्मा विज्ञेय' इति यथायथं योजनीयम् ।

इति चेत् । तदेव कुतः । ध्वंसाधिकरणकालस्य प्रतियोग्यनधिकरणत्वभावनियमस्वीकारात्—इति चेत् । सत्यम् । सखे न खेदं गच्छ । तत्त्वज्ञानोत्पत्तिक्षणस्य दुःखाधिकरणकालपूर्वत्वाभावनियमेऽपि नापलपितुं शक्यते, तद्वदस्मदीयदर्शनेऽपि प्रमायाः स्वसमानविषयकाज्ञानतत्प्रयुक्तदृश्यविरोधित्वनियमः । शुक्त्यादिप्रमायां तथा दर्शनात् इति दिक् ।

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीब्रह्मानन्दसरस्वती श्रीपादशिष्य—काश्मीरकश्रीसदानन्दयतिविरचितायामद्वैतब्रह्मसिद्धौ गुरुशब्दाभिधेयविचारे न्याय-वैशेषिकमत खण्डनव्याजेन दुर्दुरूढवादिशिरसि तृतीयो मुद्गरप्रहारः समाप्तः ॥ ३ ॥

# अथ चतुर्थो मुद्गरप्रहारः ।

ओं शिवः सर्वम् ।

न्याय-वैशेषिकनये गुरुशब्दाभिधेयकम् ।
न [1]आप्तमिति मीमांसादर्शनेष्वथ निर्णयः ॥१॥
चतुर्थमुद्गरे तस्मिन्साङ्ख्य-पातञ्जले ऽपि च ।
प्रवर्तते वादि[2]भ्रान्तिनिवृत्त्यर्थं प्रयत्नतः ॥२॥

ननु—अस्तु तर्हि चिदचिद्रूपो ज्ञानपरिणामी मीमांसकसम्मत एवात्मा गुरुशब्दाभिधेयः—इति चेत् । तर्हि सो ऽपि निरीक्ष्य वक्तव्यः । कथं च तस्य बन्ध-मोक्षादिसिद्धिः—इति चेत् । उच्यते । चिदचिद्रूपो ऽपि प्रतिशरीरं भिन्नो विभुश्च तार्किकादिवदेव । अन्यथा सुख-दुःखादिसङ्करप्रसङ्गः । तत्रापि चिदंशेन द्रष्टृत्वं सो ऽहमिति प्रत्यभिज्ञाविषयत्वं च । अचिदंशेन च ज्ञान-सुखादि-रूपेण परिणामित्वमिति विशेषः । स च अहम्प्रत्ययेनैव वेद्यः । तदुक्तम् ।

---

१ 'न दृष्टं' इति ख. पुस्तके पाठः ।

२ 'वादिमतनिवृत्त्यर्थं' इति ग. पुस्तके । क. पुस्तके तु वादिमतवि-वृत्त्यर्थ' इति पाठः ।

अहम्प्रत्ययविज्ञेयो ज्ञातव्यः सर्वदैव हि* ।

इति। न च—परिणामित्वस्वीकारेणानित्यत्वप्रसङ्ग—इति वाच्यम्। अनङ्गीकारात्। तदुक्तम्।

विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यति।

इति। न च—सर्वोपनिषत्प्रतिपाद्यस्य ज्ञानस्वरूपाद्वितीयस्य आत्मनः कथं ज्ञान-सुखादिरूपेण परिणामित्वं—इति वाच्यम्। ज्ञानस्य धात्वर्थत्वेन उत्पत्तिविनाशप्रतीत्या नित्यत्वासम्भवात्। उपनिषदां च विधिशेषत्वेन आत्मतत्त्वप्रतिपादने तात्पर्याभावात्। यजमानस्तुतिपरत्वमात्राङ्गीकाराच्च। अन्यथा सर्वात्मकस्याद्वितीयस्य आत्मनः यागादौ प्रवृत्त्यसम्भवेन सर्वस्यापि कर्मकाण्डस्य वैयर्थ्य-प्रसङ्गाच्च। न च कर्मकाण्डस्थश्रुतीनां तत्र तात्पर्याभावे ऽपि—

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः†"

---

* प्रतीतित्वात् प्रत्ययः अहमितिप्रत्ययः 'अहम्प्रत्ययः' तेन 'विज्ञेयः'। आत्मनः 'अहं ब्रह्म' इति अहम्प्रत्ययगोचरत्वात्।

† याज्ञवल्क्यो मैत्रेयीमुपदिशति। पुत्रादिषु या प्रीतिः तस्या आत्म-प्रीतिसाधनत्वात् सा गौणी प्रीतिः। या पुनरात्मनि सैव मुख्या प्रीतिः। तस्मात् 'अरे' मैत्रेयी 'आत्मा द्रष्टव्यः' दर्शनार्हः दर्शनविषयमापादयितव्यः इति यावत्। 'श्रोतव्यः' पूर्वं आचार्यतः आगमतश्च। पश्चात् 'मन्तव्यः' तर्कतः। ततो 'निदिध्यासितव्यः' निश्चयेन ध्यातव्यः। श्रवण-मनन-निदिध्यासनसाधनैर्निर्वर्तितैः असौ दृष्टो भवति। यदा एतानि एकत्वमुपगतानि तदा सम्यक् दर्शनं ब्रह्म एकत्वविषयं प्रसीदति नान्यथा। इति भावः।

इत्यादिवेदान्तवाक्यानां तत्र तात्पर्यं सम्भवति—इति वाच्यम्। आत्मनस्त्वमतेऽपि[1] निर्गुणत्वान्निर्विकारत्वात्प्रत्यक्षाद्यग्राह्यत्वाच्च। तत्-प्रतिपादक"श्रोतव्य"इत्यादिवाक्यस्य कर्मकाण्डबहिर्भूतत्वेन विधि-च्छायामात्रत्वसम्भवात्। तत्र भाष्यकारेणापि सूत्रभाष्ये प्रथम-चरणे विधिच्छायास्वीकारात् च। न च—मनस एव ज्ञानसुखादि-रूपेण परिणामो ऽस्तु—इति वाच्यम्। तस्य नित्यद्रव्यत्वेन निरंशत्वेन विभुत्वेन च परिणामसम्भवात्। आकाशवत् न चाणुत्वमस्ति—इति वाच्यम्। मानाभावात्। न च—आत्म-मनसोर्विभुत्वस्वीकारे तत्-संयोगस्यापि नित्यत्वेन सुषुप्त्यभावप्रसङ्गात्। अणुत्वे तु यदा मनः पुरीततिनाड्यां प्रविशति तदा सुषुप्तिः, यदा च निःसरति तदा ज्ञानोत्पत्तिरिति अणुत्वसिद्धिः—इति वाच्यम्। समाधि-मूर्च्छा-दिवत् प्रारब्धेनैव सुषुप्तावपि ज्ञानसामान्याभावाङ्गीकारात्—इति प्राभाकराः।

जागरणे ऽपि न प्रमाता परिणामी। आरम्भवादस्यैव स्वी-कारात्। ज्ञानसुखादीनां समवायेनैव आत्मनि उत्पत्तिसम्भवात्। तथा च एकस्यैव स्वप्रकाशज्ञानस्य उत्पत्तौ स्वाश्रये समवायेन स्वस्मिंश्च तादात्म्येन घटादौ विषयतासम्बन्धेन च विषयीकरणात्—अहं जानामि घटं—इति त्रिपुटीप्रकाशोपपत्तेर्नानुव्यवसायसिद्धिः। न वा आत्मनो चिदचिदंशकल्पनाप्रयास इति दिक्।

भाट्टास्तु वेदान्तमतवदज्ञानानुभवमेव सुषुप्तौ स्वीकुर्वन्ति।

---

१ क. पुस्तके 'अपि' इत्येतन्नास्ति। ख. पुस्तके तु 'च' इत्येव वर्तते।

न हि सुषुप्तौ आत्मचैतन्यस्य लोपः सम्भवति। श्रुतिविरोधात्। तथा च श्रुतिः।

नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते।
अविनाशित्वान्न तु तद्द्वितीयमस्ति।
ततोऽन्यद्विभक्तं यत्पश्येत्*। [बृ. अ. उ. ५ ब्रा. ३ कं. २३]

इति। तदुक्तं श्रुतितात्पर्याभिज्ञैर्विद्यारण्यैः।

गूढं चैतन्यमुत्प्रेक्ष्य द्रव्यबोधस्वरूपताम्†।
आत्मनो ब्रुवते भाट्टाः चिदुत्प्रेक्षोत्थितस्मृतेः॥

---

* ननु—"यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति" इत्यत्र एवं न पश्यतीति सुषुप्ते जानीमः। यतो न चक्षुर्वा मनो वा दर्शने करणं व्यापृतमस्ति। व्यापृतेषु हि दर्शन-श्रवणादिषु पश्यतीत्यादिव्यवहारो भवति। तस्मान्न पश्यत्येवायं—इति चेन्न। पश्यन्नेव भवति। यस्मात् 'द्रष्टुः' दृष्टिकर्तुः या 'दृष्टिः' तस्याः 'विपरिलोपः' विनाशः सन् 'विद्यते'। यथा—अग्नेरौष्ण्यं यावदग्नि भावि। तथा च—अयमात्मा अविनाशि। अतः 'अविनाशित्वात्' आत्मनो दृष्टिरप्यविनाशिनी। यावद्दृष्टभाविनी हि सा।

कथं तर्हि "न पश्यति" [अस्या एव कण्डिकायाः प्रथमचरणो द्रष्टव्यः] इत्युच्यते? 'न तु तदस्ति' किं तत्? 'द्वितीयं' विषयभूतम्। किं विशिष्टम्? 'ततो द्रष्टुः' अन्यत् 'अन्यत्वेन विभक्तम्'। 'यत् पश्येत्' यदुपलभ्येत। यद्धि तद्विशेषदर्शनकारणं अन्तःकरणं चक्षूरूपं च तदविद्यया अन्यत्वेन प्रत्युपस्थापितमासीत्। तदेतस्मिन्काले एकीभूतम्। आत्मनः परेण परिष्वङ्गात् इत्यर्थः।

† 'गूढं' अस्पष्टं चैतन्यं निर्विकल्पकमिति यावत्। 'उत्प्रेक्ष्य' ऊहयित्वा चिज्जडात्मकतां वर्णयन्ति सुप्तोत्थितस्य जायमानात्स्मरणात् सौषुप्तचैतन्यस्य उत्प्रेक्षा भवतीत्यर्थः।

'जडो भूत्वा तदाखाप्सं' इति जाड्यस्मृतिस्तदा।
विना जाड्यानुभूतिं न कथञ्चिदुपपद्यते* ॥
द्रष्टुर्दृष्टेरलोपश्च श्रुतः सुप्तौ ततः स्वयम्।
अप्रकाश-प्रकाशाभ्यां आत्मा खद्योतवन्मतः ॥

इति। न च—मनसो मध्यमपरिमाणवत्त्वमेवास्तु—इति वाच्यम्। अनित्यत्वप्रसङ्गात्। वक्ष्यमाणमोक्षे नित्यसुखसाक्षात्कारानुपपत्तेश्च। ननु—अस्तु मनसोऽपरिणामित्वेन अचिदंशस्य परिणामित्वकल्पनम्। तथापि कर्मकाण्डविषयस्य स्वर्गादेः दृष्टनष्टाभिप्रायत्वेन मायामयत्वम्। ततश्च वैतथ्यम्। तथा च कर्मकाण्डवैयर्थ्यापादनस्येष्टत्वात्—इति चेत्। न। भोगस्थानानां स्वर्गादीनां भोगकालस्य च अनित्यत्वमात्रस्वीकारात्। तदुपायभूतागमस्य भोक्तुरात्मनश्च। नित्यत्वेन मायिकत्वस्यैवास्वीकत्वात्। प्रवाहरूपेण तेषामपि नित्यत्वाच्च। तदुक्तम्।

न कदाचिदनीदृशं जगत्। किन्तु ईदृशमेव।

इति सृष्टिप्रलयाद्यनङ्गीकारात्। अतएव तत्कर्तुरीश्वरस्याप्यनङ्गीकार एव। ननु—

यतो वा इमानि भूतानि जायन्ते।
यः सर्वज्ञः सर्ववित्।

---

* चिदुक्तेत्ताप्रकारमेव स्पष्टयति। 'जडोभूत्वा' इति। तदा सुषुप्तिकाले जडोभूत्वा अस्वाप्सं इत्येवंरूपा जाड्यस्मृतिः उत्थितस्य पुरुषस्य जायमाना सुषुप्तिकालीनजाड्यानुभवमन्तरेण अनुपपद्यमाना तदानीन्तनजाड्यानुभवं कल्पयतीति भावः।

यस्य ज्ञानमयं तपः ।

तस्मात्सर्वं जायते ।

इत्याद्याम्नायप्रतिपादितस्येश्वरस्य कथमनङ्गीकारः—इति चेत्। न। आम्नायस्य क्रियापरत्वेन ईश्वरप्रतिपादने तात्पर्याभावात् ।

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्* ।

[जैमिनिद. अ. १ पा. २ सू. १]

---

* पूर्वपक्षसूत्रमिदम्। "सो ऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्। प्रजापतिरात्मनोवपामुदखिदत्" इत्येवमादीनि वाक्यानि समाम्नातारः समामनन्ति। तानि किं कञ्चित् धर्मं प्रमिमते उत न? इति विचारणायां इदमभिधीयते। समाम्नातारः—क्रियार्थानि—क्रिया कथमनुष्ठेया? एतदर्थानि वाक्यानि समामनन्ति। अत 'आम्नायस्य' 'क्रियार्थत्वं' तस्मात् यानि वाक्यानि क्रियां नावगमयन्ति तानि तादृशानां 'अतदर्थानां' वाक्यानां 'आनर्थक्यम्' भवति। "सो ऽरोदीत्" इत्यादीनि वाक्यानि न कमप्यर्थं प्रमिमते। अथोच्येत— अध्याहारेण, विपरिणामेन, व्यवहितकल्पनया वा, व्यवधारणकल्पनया वा, गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यते—इति तन्न। रुद्रः किल ररोद—अतो ऽन्येनापि रोदितव्यमित्यस्य अशक्यत्वात्। इष्टवियोगेन अभिघातेन वा बाष्पनिर्मोचनं रोदनमित्युच्यते। तत् इच्छातो न भवति। न च कश्चिदात्मनो वपामुत्खिद्यतामग्नौ कृत्वा पशुना यष्टुं शक्नुयात्। इत्यादि योजनीयम्।

† तेष्वेव पदार्थेषु भूतानां वर्तमानानां 'तद्भूतानां' पदानां। 'क्रियार्थेन' समाम्नायः समुच्चारणं। न अनपेक्ष्य पदार्थान् पार्थगर्थ्येन। कुतः। 'तन्नित्यत्वात्'। अर्थनिमित्तकं हि पदानामुच्चारणम्। न हि अनपेक्षितपदार्थस्य वाक्यान्त्यवर्णस्य पर्ववर्णजनितसंस्कारसहितस्य शक्तिरस्ति पदार्थेभ्यो ऽर्थान्तरे वर्तितुम्।

तद्भूतानां क्रियार्थेन समाम्नायो[1] ऽर्थस्य तन्निमित्तत्वात्।

[अ. १ पा. सू. २५]

इति जैमिनिसूत्रञ्च। उक्तं च नैष्कर्म्यसिद्धौ।

आम्नायस्य क्रियार्थत्वादानर्थक्यमितो ऽन्यथा।

इति साटोपमाहोच्चैर्वेदवित् जैमिनिः स्वयम्[2]॥

इति। न च—नाम—

ब्रह्मेत्युपासीत।

इति वाक्येन वेदस्य ब्रह्मपरत्वं—इति वाच्यम्। तस्य वाग्धेन्वादिवत् सर्वज्ञत्वादिदृष्ट्या जीवोपासनप्रतिपादनपरत्वात्। न च—आम्नायस्योत्पादकत्वेन तत्सिद्धिः। तस्य नित्यत्वेन ब्रह्मणो हेतुत्वात्। जन्यत्वाङ्गीकारे च प्रमाणान्तरेणार्थोपलब्ध्या आनुपूर्व्यनियमः स्यात्। भ्रम-प्रमाद-करणापाटव-विप्रलिप्सादिदोषेण लौकिकवाक्यवदप्रामाण्यं च स्यात्। तस्मादनाद्यनन्तत्वाज्जगतो जीवानां बन्धसिद्धिः। एतदभिप्रेत्यैव वैदिककर्मानुष्ठानाद्विहितादात्मज्ञानपूर्वकात् देहेन्द्रियादिसम्बन्धस्य धर्माधर्मपरिचयनिमित्तादात्यन्तिककर्मोच्छेदरूपमुक्तौ इन्द्रियादिरहितस्य ज्ञानासम्भवात् जडत्वेन तादृगात्मप्राप्तेरपुरुषार्थत्वात् प्रवृत्तिरेव श्रेयसी। न निवृत्तिः—

इति। न केवलं मीमांसकानामेव प्रवृत्तावाग्रहः। अपि तु नैयायिकानामपि। तदुक्तम्।

वरं वृन्दावने शून्ये सृगालत्वं ममेप्सितम्।

---

१ 'समन्वयः' इति क. पुस्तके।

२ 'कविः' इति ख. ग. पुस्तकयोः।

न तु निर्विषयं मोक्षं गौतमो मन्यते क्वचित्[1]* ॥

इति रागिगीतायाम्। किञ्च। एकैकस्मिन् कल्पे ऽप्येकैको ऽप्ययं व्रजेत् तथाप्युच्छिन्नः संसारः स्यात्। अतीतकल्पानामनन्तत्वात्। न च—जीवानन्त्यं नियामकमिति वाच्यम्। तेषामनन्तत्वेऽपि नित्यत्वेन परिमितत्वात्। अत एव—दुःखप्रागभावमात्रपरिपालनं मोक्ष—इति प्राभाकराः। भट्टास्तु।

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञान-कर्मभ्यां सह मोक्षो[2] ऽपि जन्यते ॥

इति हारीतवचनात्।

तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने।

---

१ ग. पुस्तके तु—

कामं वृन्दावने ऽपि स्यात् शृगालत्वं हि ईप्सितम्।
नैव निर्विषयं मोक्षं मन्तु मर्हति गौतमः॥

इति पाठान्तरम्। 'वरं वृन्दावने क्वापि' इति ख. पुस्तके विशेषः 'क्वाप्यरण्ये वरं शून्ये' इति क. पुस्तके पाठान्तरम्।

२ 'लभते परमं पदम्' इति योगवार्तिके विज्ञानभिक्षुधृतः पाठः।

---

* अत्र 'वृन्दावने' इत्यनेन मथुरायाः आसन्न एकदेशो न ग्राह्यः। किन्तु वृन्दशब्देन वृक्ष-तृणादिसमूह एव ग्राह्यः। निर्जने निरुदके तृणपर्णादिसमूहावृते वने शृगालत्वमपि वरं सुख-दुःखरहिताद्वेदान्तिसम्मतान्मोक्षादिति फलितो ऽर्थः।

इति स्मृत्यन्तराच्च कर्मणो ऽपि मोक्षसाधनत्वश्रवणात् ज्ञान-कर्मसमुच्चयादेव* आत्मनो जडबोधात्मकस्य नित्यं ज्ञानं नित्यं सुखं चोदेति। ततश्च विषयविशेषानपेक्षया नित्यज्ञानेन नित्यसुखाभिव्यक्तिर्मुक्तिः—इत्याहुः। मानसज्ञानेन नित्यसुखाभिव्यक्तिर्वा, दुःखाभाव एव वा मुक्तिः—इति तदीयाः केचित्।

एवं त्रिदण्डिनो ऽपि—जीव-ब्रह्मणोर्वास्तवभेदाभेदमभ्युपेत्य ज्ञान-कर्मसमुच्चयाभ्यासादेव कारणात्मके ब्रह्मणि कार्यात्मकस्य जीवस्य कर्मवासनासहितभेदांशनिवृत्तिर्मोक्ष—इति वदन्ति। परमेश्वरप्राप्तिरित्यन्ये। सतरङ्ग-निस्तरङ्गभेदेन समुद्रद्वैविध्यवत् सविकार-निर्विकाररूपेणावस्थाद्वयं ब्रह्मणः परिकल्प्य ज्ञान-कर्मसमुच्चयाभ्यासादेव सविकारावस्थात्यागेन निर्विकारावस्थाप्राप्तिरेव मोक्ष—इत्यपरे। ऐकभविकन्यायवादिनस्तु। आत्मज्ञानमन्तरेणापि निषिद्ध-काम्ययोरननुष्ठानात् नित्य-नैमित्तिकानुष्ठानाच्च नागामिकर्मोत्पादः।

---

* ननु—

न केवलेन योगेन प्राप्यते परमं पदम्।
ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम्॥

इत्यादिवचनैर्योगशब्देन उक्तस्य कर्मणः अपेक्षां विना केवलेन ज्ञानेनैव मोक्षसिद्धेः कथमुच्यते ज्ञानकर्मसमुच्चयेन मोक्ष—इति चेत् न।

तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने।

इत्यादिवाक्यैस्तयोः समुच्चयाभिधानात् तयोरङ्गाङ्गिभावस्य सुप्रसिद्धत्वाच्च। "ज्ञानं तु केवल"मिति तु कर्माचरणेन शुद्धचित्तस्य ज्ञानप्राप्तिः। ततश्च साधनान्तरं विना मुक्तिरित्यभिधानार्थम्।

विद्यमानस्य चोपभोगेन क्षयात् सर्वकर्मोच्छेदलक्षणमपवर्गमाहुः ।
तदुक्तं नैष्कर्म्यसिद्धौ ।

'मुक्तः क्रियाभिः सिद्धत्वात् ज्ञानं तत्र करोति किम् ।
कथं चेच्छृणु तत्सर्वं प्रणिधाय मनो यथा ॥
अकुर्वतः क्रियाः काम्या निषिद्धास्त्यजतस्तथा ।
नित्यनैमित्तिकं कर्म विधिवच्चानुतिष्ठतः ॥
काम्यकर्मफलं तस्माद्देवादीमं[1] न ढौकते ।
निषिद्धस्य निरस्तत्वान्नारकीं नेत्यतो जनिम् ॥
वर्तमानमिदं याभ्यां शरीरं सुखदुःखदम् ।
आरब्धं पुण्यपापाभ्यां भोगादेव तयोः क्षयः ॥
नित्यानुष्ठानतश्चेमं प्रत्यवायो न संस्पृशेत् ।
अनादृत्यात्मविज्ञानमतः कर्माणि संश्रयेत् ॥
याश्चान्यश्चेह विद्यन्ते श्रुतयः स्मृतिभिः सह ।
विदधत्पुरुषयत्नेन कर्मातो भूरिसाधनम् ॥
यत्नतो वीक्षमाणोऽपि विधिं ज्ञानस्य न क्वचित् ।
श्रुतौ स्मृतौ वा पश्यामि विश्वासो नान्यतोऽस्ति नः ॥
अन्तरेण विधिं मोहाद्यः कुर्यात्साम्परायिकम् ।
न तत्स्यादुपकाराय भस्मनीव हुतं हविः ॥
"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।"

---

१ 'देवादिमत' इति ख. पुस्तके ।

इति मन्त्रो ऽपि निःशेषं कर्मण्यायुरवासृजत्* ॥
विरहय्य क्रियां नैव संहन्यन्ते पदान्यपि ।
न समस्त्यपदं वाक्यं यत् स्यात् ज्ञानविधायकम् ॥
†कर्मणो ऽङ्गाङ्गिभावेन स्वप्रधानतयाथ वा ।
सम्बन्धस्येह संसिद्धेर्ज्ञाने सत्यप्यदोषता ॥
अतः सर्वाश्रमाणां हि वाङ्मनःकायकर्मभिः ।
स्वनुष्ठितैर्यथाशक्ति मुक्तिः स्यान्नान्यसाधनात्' ॥
इति हृष्टधियां वाचः स्वप्रज्ञाध्मात‡चेतसाम् ।
घुष्यन्ते यज्ञशालासु भूमानद्धधियां किल ॥

इति दिक्। तस्मात् मीमांसकमहानुभावसम्मतात्मन एव गुरु-शब्दाभिधेयस्य सिद्धत्वान्न घट्टकुटीप्रभातवृत्तान्तन्यायेन शिरसि मुद्गरप्रहार उचितः—इति चेत्। अत्रोच्यते।

वेदान्तवाक्यानां विधिशेषस्यैव असम्भवः[१]। तथा हि। धर्मब्रह्म-

१ 'असम्भवात्' इति ख. पुस्तके।

* 'आयुः कर्मणि अवासृजत्' कर्माणि कुर्वन्नेव इह अस्मिन् लोके जिजीविषेत् जीवितुमिच्छेत्। इत्येतेन मन्त्रेणापि सर्वमायुः कर्मणि अवासृष्टं नियुक्तमित्यर्थः।

† ज्ञान-कर्मणोरङ्गाङ्गीभावेन कर्मणः प्रधानतया वा उभयोः सम्बन्धस्य सिद्धत्वात् ज्ञानप्राप्तौ सत्यामपि कर्मकरणं न दोषाय भवतीति भावः। ज्ञानकर्मसमुच्चयवादिमते ऽपि ज्ञानाभ्युपगमे ऽपि यतः कर्म न दोषाय।

‡ 'स्वप्रज्ञाध्मातचेतसाम्' स्वबुद्ध्यैव आध्मातं उत्फुल्लं विकसितं चेतः येषाम्।

प्रतिपादकमपौरुषेयं प्रमाणवाक्यं हि वेदः । स च मन्त्रब्राह्मणात्मकः । तत्र मन्त्राः अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः । तेऽपि त्रिविधाः । ऋग्यजुःसामभेदात् । तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋचः ।

"अग्निमीडे पुरोहितम्" ।

इत्याद्याः । ता एव च गीतिविशिष्टाः सामानि । तदुभयविलक्षणानि यजूंषि ।

"अग्नीदग्नीन् विहर" ।

इत्यादिसम्बोधनरूपा निगदमन्त्रा अपि यजुरन्तर्भूता एव । एवं ब्राह्मणमपि त्रिविधम् । विधिरूपं अर्थवादरूपं तदुभयविलक्षणं च इति । तत्र—शब्दभावना विधिः—इति भाट्टाः । विनियोगो विधिः-इति प्राभाकराः । इष्टसाधनता विधिः—इति तार्किकादयः सर्वे । सोऽपि चतुर्विधः । उत्पत्त्यधिकार-विनियोग-प्रयोग-भेदात् । तत्र—कर्मस्वरूपमात्रबोधको विधिः - उत्पत्तिविधिः । यथा—

"अग्निहोत्रं जुहोति । सोमेन यजेत" ।

इत्यादि ।

"आग्नेयोऽष्टाकपालः पुरोडाशो भवति" ।

इत्यादि च । एवं—सेतिकर्तव्यताकस्य करणस्य यागादेः फल-सम्बन्धबोधको विधिः—अधिकारविधिः । यथा—

"दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत" ।

इत्यादि । एवमङ्गसम्बन्धबोधको विधिः—विनियोगविधिः । यथा—

"व्रीहिभिर्यजेत । समिधो यजति" ।

इत्यादि । एवं-साङ्गप्रधानकर्मप्रयोगैक्य*बोधकः पूर्वोक्तविधित्रयमेलनरूपः प्रयोगविधिः । यथा—

"प्रयाजाद्यङ्गजातोपकृतेनाग्निष्टोमेन स्वर्गकामो यजेत" ।

इत्यादि । स च—श्रौतः—इत्येके । कल्प्यते—इत्यपरे† । एवं सङ्क्षेपेण विधिभागो निरूपितः ।

---

* 'प्रयोगैक्यबोधकः' प्रयोगः प्रतननं आनुपूर्व्याद्यापार इति यावत् । तस्य ऐक्यबोधनकर्ता इति भावः ।

† एवं कर्मस्वरूपमपि द्विविधम् । गुणकर्म अर्थकर्म च । तत्र—क्रतुकारकाण्याश्रित्य विहितं गुणकर्म । तदपि चतुर्विधम् । उत्पत्त्याप्तिविकृति-संस्कृतिभेदात् । तत्र—

"वसन्ते ब्राह्मणो ऽग्नीनादधीत । यूपं तक्षति" ।

इत्यादौ आधानतक्षणादिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्तिः ।

"स्वाध्यायो ऽध्येतव्यः । गां पयो दोग्धि" ।

इत्यादौ अध्ययन-दोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः प्राप्तिः ।

"सोममभिषुणोति । व्रीहीनवहन्ति । आज्यं विलापयति" ।

इत्यादौ अभिषवावघातविलापनैः सोमादीनां विकारः ।

"व्रीहीन् प्रोक्षति । पत्नी अवेक्षते" ।

इत्यादौ प्रोक्षणावेक्षणादिभिः व्रीह्याज्यादिद्रव्याणां संस्कारः । एतच्चतुष्टयं चाङ्गमेव । एवं—क्रतुकारकाण्यनाश्रित्य विहितं—अर्थकर्म । तच्च द्विविधम् । अङ्गं प्रधानं च । अन्यार्थमङ्गम् । 'फलवत्सन्निधौ अफलं तदङ्गं' इति न्यायात् । प्रधानफलातिरिक्तफलाजनकत्वं अङ्गत्वमित्यर्थः । अनन्यार्थं तु प्रधानम् । अङ्गमपि द्विविधम् । सन्निपत्योपकारकं आरादुप-

प्राशस्त्यनिन्दान्यतरलक्षणं विधिशेषभूतं वाक्यमर्थवादः। स पुनः त्रिविधः* । गुणवादो ऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवादः । यथा—

"आदित्यो यूपः । यजमानः प्रस्तरः" ।

इत्यादि । प्रमाणान्तरप्राप्तार्थको ऽनुवादः । यथा—

"अग्निर्हिमस्य भेषजम्" ।

---

कारकं च । तत्र आद्यम् । प्रधानस्वरूपनिर्वाहकं हविस्तण्डुलादि । फलोपकारि प्रयाजादिकं द्वितीयम् । एवं सम्पूर्णाङ्गसंयुक्तो विधिः प्रकृतिः । विकलाङ्गसंयुक्तो विधिर्विकृतिः । तदुभयविलक्षणो विधिर्दर्वीहोमः । एवमन्यदपि ऊहनीयम् ।

* ह्यन्यत्रभिरर्थवादस्य चातुर्विध्यमुक्तम् । तद्यथा । निन्दा-प्रशंसा-परकृति-पुराकल्प-भेदादर्थवादः चतुर्धा । तत्र निन्दार्थवादो यथा । "अ-सत्रं वा एतत् यदच्छन्दोऽयमरजं हि रजतं यो बर्हिषि ददाति । पुरास्य संवत्सरात् गृहे रुदन्ति" । अत्र विधेयात्मनिन्दाद्वारा विधेयप्राशस्त्यपरत्वम् । अरजमित्यादिरजतनिन्दाद्वारा विधेयभूतरजतदाननिषेधप्राशस्त्यपरत्वे विरोधाभावात् ।

प्रशंसार्थवादो यथा—"शोभते ऽस्य मुखं य एवं वेद । वायुर्वै क्षेपिष्ठा॰" इत्येवमादिः । अत्र प्रशंसैवावगम्यते ।

परेण इदं महता पुरुषेण कर्म कृतमिति प्रतिपादको ऽर्थवादः परकृतिः । स यथा—"अग्निर्वा कामयत" इत्यादिः ।

परत्र च कर्तृ-कार्यादिप्रतिपादकः पुराकल्पः । यथा—"तदशपत् धीया । धीया त्वा च ध्यासुः" इति ।

इत्यादि । प्रमाणान्तरं विना अर्थावबोधको भूतार्थवादः । यथा—

"इन्द्रो वृत्राय वज्रमभ्यनुदत्" ।



तदुक्तम् ।

विरोधे गुणवादः स्यात् अनुवादो ऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥

इति । अत्र त्रिविधानामपि अर्थवादानां विधिस्तुतिपरत्वे समाने ऽपि भूतार्थवादानां स्वार्थे ऽपि प्रामाण्यं देवताधिकरणन्यायेन सम्भवति । अबाधिताज्ञातज्ञापकत्वं हि प्रामाण्यम् । तच्च बाधितविषयत्वात् ज्ञातज्ञापकत्वाच्च न गुणवादानुवादयोः । भूतार्थवादस्य तु स्वार्थे तात्पर्यरहितस्यापि औत्सर्गिकं प्रामाण्यं मीमांसकप्रवरेणापि न निहन्यते । तदेवं निरूपितो ऽर्थवादभागः ।

विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम् । तच्च अज्ञातज्ञापकत्वे ऽपि अनुष्ठानाप्रतिपादकत्वात् न विधिः । स्वतः पुरुषार्थभूतपरमानन्दज्ञानात्मके ब्रह्मणि स्वार्थे उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतः प्रामाण्यभूतं वेदान्तवाक्यं सर्वानपि विधीन् अन्तःकरणशुद्धिद्वारा स्वशेषतां आपादयदन्यशेषत्वाभावाच्च नार्थवादः । तथा च श्रुतिः ।

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।
यज्ञेन दानेन तपसा नाशकेन* ।

---

* काम्यैकदेशवर्जितं कृत्स्नं कर्मकाण्डं ब्रह्मविद्यायामुपयुज्यते इति पूर्वमुक्तम् । तत्कथमित्याकाङ्क्षायां याज्ञवल्क्य आह । 'तमेतं एवम्भूतं औप-

इत्यादि। वार्तिककृद्भिरप्युक्तम्।

प्रत्यग्विविदिषासिद्धौ वेदानुवचनादयः।
ब्रह्मावाप्तौ तु तत्त्याग ईप्सन्तीति श्रुतेर्बलात्॥

इति।

सर्वकर्माखिलं पार्थ ज्ञानेपरिसमाप्यते*।

---

नियदं पुरुषं 'वेदानुवचनेन' मन्त्र-ब्राह्मणाध्ययनेन नित्यस्वाध्यायलक्षणेन 'विविदिषन्ति' वेदितुमिच्छन्ति 'ब्राह्मणाः'। ब्राह्मणग्रहणमुपलक्षणार्थम्। अविशिष्टो ह्यधिकारस्त्रयाणां वर्णानाम्।

अथवा कर्मकाण्डेन मन्त्रब्राह्मणेन वेदानुवचनेन विविदिषन्ति। यज्ञादिना। ये पुनः मन्त्रब्राह्मणलक्षणेन वेदानुवचनेन प्रकाश्यमानमेतमात्मानं विविदिषन्ति—इति व्याचक्षते तेषामारण्यकमात्रमेव वेदानुवचनं स्यात्। न हि कर्मकाण्डेन पर आत्मा प्रकाश्यते। "औपनिषदं" इति विशेषश्रुतेः।

सर्वेषु शास्त्रेषु कर्माणि संस्कारार्थान्येव। अत एव 'यज्ञेन' द्रव्ययज्ञा ज्ञानयज्ञाश्च संस्कारार्थाः। संस्कृतस्य विशुद्धसत्वस्य ज्ञानोत्पत्तिरप्रतिबन्धेन भविष्यति, अतः यज्ञेन विविदिषन्ति। दानस्यापि पापक्षयहेतुत्वात् धर्मवृद्धिहेतुत्वात् च 'दानेन' विविदिषन्ति। तप इत्यविशेषेण कृच्छ्र-चान्द्रायणादिप्राप्तौ विशेषणं 'आत्मशब्देन' इति। कामासेवनमनाशकं। न तु भोजननिवृत्तिः। 'अनाशकेन' तपसा विविदिषन्ति इति योजना।

* 'सर्वम्' इष्टिपशुसोमचयनरूपं श्रौतम्। 'अखिलं' निरवशेषम्। स्मार्तं उपासनादिकं च यत्। तत् ज्ञाने ब्रह्मात्मैक्यसाक्षात्कारे। 'परिसमाप्यते' प्रतिबन्धक्षयद्वारेण पर्यवस्यति।

इति स्मृतेश्च । न च—तर्हि कथं स्वर्गादिफलश्रवणं ज्योतिष्टोमादीनां—इति वाच्यम् । अज्ञप्ररोचनार्थत्वात् । कथमन्यथा सर्वाद्यः सर्वज्ञो वेदः चयित्वाद्यपुरुषार्थं स्वर्गादि समुद्दिश्य यागादीन्विदध्यात् । तस्मात्प्ररोचनार्थमेव स्वर्गादिश्रवणम् । न तात्पर्येण फलाय । उक्तं च मनुना [अ. ११ श्लोक. ८२-८३],

यथोक्तान्यपि कर्माणि परिहाय[1] द्विजोत्तमः ।
आत्मज्ञाने[2] शमे च स्यात् वेदाभ्यासे च यत्नवान्* ॥
एतद्विजन्मनामग्र्यं[3] ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा† ॥

---

१ 'परिहाय्य' इति क. पुस्तके सर्वज्ञनारायणटीकायां च पाठः ।

२ 'आत्मध्याने' इति कुल्लूकभट्ट-राघवानन्दटीकयोः पाठः ।

३ सर्वज्ञनारायणेन 'सामग्र्यं' इति पाठः स्वीकृतः । कुल्लूकभट्टस्तु 'साफल्यं' इति पाठमादृत्य व्याचख्यौ । गोविन्दराजस्याप्ययमेव सम्मतः । रामचन्द्रेण 'अग्र्यं' इत्येव आदृतम् ।

---

* 'यथोक्तानि' श्रेयस्करत्वेन शास्त्रचोदितान्यपि । 'कर्माणि' अग्निहोत्रादीनि । 'परिहाय' असाधनत्वेन परित्यज्य । 'आत्मज्ञाने' आत्मस्वरूपज्ञाने । 'आत्मध्याने' इति मनन-निदिध्यासनादौ इत्यर्थः । 'शमे' रागोपशमे । 'वेदाभ्यासे' उपक्रमादिना उपनिषदर्थविचारणे श्रवणार्थपर्याये । 'यत्नवान्' अभ्यासकृत् 'स्यात्' भवेदिति योजना ।

† 'द्विजन्मनां' द्विजातीनां ब्राह्मण-क्षत्रिय-विशाम् । 'एतत्' वेदाभ्यासादिकम् । 'अग्र्यं' मुख्यम् । 'विशेषतः ब्राह्मणस्य' इत्यनेन ब्राह्मणस्यैव तुरीयाश्रमग्रहणे ऽधिकारः । तस्यैव मुक्तिरित्याशयः । 'द्विजः' द्विजातिः । 'एतत्' पूर्वोक्तं । 'प्राप्य कृतकृत्यो भवति' नान्यथा । आत्मज्ञानं प्राप्य कृतकृत्यो भवतीति भावः ।

इति। तस्मादुभयविलक्षणमेव वेदान्तवाक्यम्। तच्च क्वचिद्-ज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते। विधिपदरहितप्रमाण-वाक्यत्वेन क्वचित् भूतार्थवाद इति व्यवह्रियते—इति न दोषः। एतेन पूर्वं मीमांसकेन वर्णितं यद्वेदान्तवाक्यानां विधिशेषत्वेन अर्थ-वादत्वं तत्सर्वं निरस्तम्। षड्विधलिङ्गानि तु—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवाद[१]श्चोपपत्तिर्लिङ्गं तात्पर्यनिर्णये॥

इति। तथा हि छान्दोग्ये षष्ठे।

सदेव सौम्येदमग्र आसीत्। एकमेवाद्वितीयम्*।

इत्युपक्रम्य—

ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा। तत्त्वमसि†।

१ '०दोपपत्ती च' इति ग. पुस्तके पाठः।

* उद्दालक आह। 'हे सौम्य' श्वेतकेतो! 'अग्रे' जगतः उत्पत्तेः प्राक्। 'इदं' सर्वं 'सदेव आसीत्' सत् इति अस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतम्। 'एकं' निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः। 'एव' शब्दोऽवधारणार्थः। इदं नाम-रूप-क्रियावत् विकृतमुपलभ्यते यत् तत्सदेव एकमेव आसीत्। एकमेव अद्वितीयमित्यनेन सजातीय-विजातीय-स्वगतभेदरहितत्वमुच्यते इति सङ्क्षेपः।

† स यः सदाख्य एष उक्तोऽणिमा अणुभावो जगतो मूलमेतदात्म्य-मेतत्सदात्मा यस्य सर्वस्य तदेतदात्मा तस्य भावः 'ऐतदात्म्यं'। येन च आत्मना आत्मवत्सर्वमिदं जगत् 'तदेव' सदाख्यं कारणं 'सत्यं' परमार्थसत्। अतः 'स' एव 'आत्मा' जगतः प्रत्यक्स्वरूपसत्तत्वं याथात्म्यम्। अतः हे श्वेतकेतो 'तत्' सत् 'त्वमसि' आत्मैवासीः इति।

इत्युपसंहारः । ऐतदात्म्यमित्यादेस्तत्त्वमसीत्यन्तस्य नवकृत्वो वचनमभ्यासः ।

"आचार्यवान् पुरुषो वेद" ।

इत्यनेन मानान्तराविषयत्वरूपापूर्वताकथनम् ।

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ सम्पत्स्यते" ।

इति फलकथनम् ।

"तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति†" ।

इत्याद्यर्थवादः ।

यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् ।

वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्* ।

† उद्दालकः चरितब्रह्मचर्यं स्तब्धं मानिनं पुत्रं दृष्ट्वोवाच । श्वेतकेतो ! यन्विदं महामना अनूचानः मानी स्तब्धश्चासि तत् कस्ते ऽतिशयः प्राप्तः उपाध्यायात् ? उतापि 'तमादेशं' आदिश्यत इत्यादेशः केवलशास्त्राचार्योपदेशगम्यः अथ वा येन वा परं ब्रह्म आदिश्यते ऽसावादेशः । तमप्राक्ष्यः पृष्टवानसि आचार्यं ? 'येन अश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति' । तदेतदद्भुतं श्रुत्वा पृच्छति श्वेतकेतुः । हे 'भगवन् स आदेशः कथं नु' केन प्रकारेण भवतीति ? उद्दालक आह । हे 'सौम्य' यथा लोके एकेन मृत्पिण्डेन रुचककुम्भादिकारणभूतेन विज्ञातेन 'सर्वं' अन्यत् तद्विकारजातं 'मृण्मयं' मृद्विकारजातं 'विज्ञातं स्यात्' ।

ननु—मृत्पिण्डे कारणे विज्ञाते अन्यत् कार्यं कथं विज्ञातं स्यात् ?—इति चेत् । सत्यमेवं स्यात् यदि कारणादन्यत् कार्यं स्यात् । नत्वेवमस्ति । तर्हि लोके—इदमस्य विकार—इति कथं वदन्ति ?—इति चेत् । शृणु । एतत् 'वाचारम्भणं' वागालम्बनमिति यावत् 'नामधेयं' नामैव केवलं 'विकारः' परमार्थतो 'मृत्तिकेत्येव' मृत्तिकैव 'सत्यं' वस्त्विति ।

इति उपपत्तिः। तस्मात्स्वप्रयोजनवदर्थाबाधिताज्ञातज्ञापकत्वेन वेदान्तानां स्वतः प्रामाण्यादस्त्येव ब्रह्मेति सिद्धम्। अत एव न मीमांसकाभिमतनित्यत्वं वेदे सिद्ध्यति। ब्रह्मणः सद्भावस्य सिद्धत्वात्। तथा च श्रुतिः।

अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो
यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं
विद्या उपनिषदः श्लोकाः सूत्राणि व्याख्याना-
न्यनुव्याख्यानान्यस्यैवैतानि [१] सर्वाणि निःश्वसितानि* ।

[बृ. उ. अ. ४ ब्रा. ४ कं. १०]

इति।

---

१ क. पुस्तके इदं नास्ति।

---

* याज्ञवल्क्यो मैत्रेयीमुपदिशति। अरे मैत्रेयि! 'अस्य' परमात्मनः प्रकृतस्य 'महतो भूतस्य निःश्वसितमेतत्' यथा अप्रयत्नमेव पुरुषनिःश्वासो भवति एवं वा? अरे तन्निःश्वसितमिव ततो जातमित्युच्यते। 'यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः' चतुर्विधं मन्त्रजातम्। 'इतिहासः' उर्वशीपुरूरवसोः संवादादिः। "उर्वशी हाप्सरा" इत्यादिब्राह्मणमेव। 'पुराणं' "असद्वा इदमग्र आसीत्" इत्यादि। 'विद्या' देवयजनविद्या। "वेदः सोऽयं" इत्यादिः। 'उपनिषदः' "प्रियमित्येतदुपासीत" इत्याद्याः। 'श्लोका' ब्राह्मणप्रभवा मन्त्राः "तदेते श्लोका" इत्यादयः। 'सूत्राणि' वस्तुसङ्ग्रहवाक्यानि। वेदे यथा—"आत्मेत्येवोपासीत" इत्यादीनि। 'अनुव्याख्यानानि' मन्त्रविवरणानि। 'व्याख्यानानि'

सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् ।

इत्यादिश्रुतयश्च। लाघवाच्च पूर्वसृष्टिमनुरुध्यैव वङ्कादेरुष्णत्वादिमत इव वेदस्यापि पूर्वसर्गीयानुपूर्व्यवच्छिन्नस्यैव रचनान्नानुपूर्व्यनियमः। पुरुषाभिप्रायाद्यनपेक्षत्वेन निर्दोषत्वाच्च नाप्रामाण्यम् । एतेन पूर्वं मीमांसकोक्तं यत्—वेदानां जन्यत्वे करणापाटवादिदोषेणाप्रामाण्यं तदप्यपास्तम् ।

ननु—तर्हि वेदानामुत्पत्तिमत्त्वेनास्तु तार्किकादिसम्मतं क्षणावस्थायित्वम्। शब्दसमूहत्वात्—इति चेत् । न। य एव वेदो देवदत्तेनाधीतः स एव मयापि—इति योऽयं गकारः शिवेनोक्तः स एव विष्णुनोच्यते—इत्यादिप्रत्यभिज्ञाविरोधात् । विभवश्च वर्णाः। योऽयं हकारः काश्यां श्रुतः स एव प्रयागेऽनेनोच्यते—इति प्रतीतेः सर्वव्यापिनस्तस्यानुभवात्। विभुत्वाच्च द्रव्यमेव न आकाशगुणः। तत्र मानाभावात् । न च बहिरिन्द्रियग्राह्य-

---

अर्थवादाः। अथ वा। वस्तुसङ्ग्रहवाक्यविचारणानि अनुव्याख्यानानि। यथा चतुर्थेऽध्याये "आत्मेत्येवोपासीत" इत्यस्य यथा—"अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः"। एवमित्यस्याध्यायशेषः। मन्त्रविवरणानि व्याख्यानानि। एवमष्टविधं ब्राह्मणं परमात्मनो निःश्वसितम्।

ननु—ऋगादिशब्दानामितिहासादीनां च प्रसिद्धार्थत्यागे को हेतुः?—इति चेत् निःश्वसितश्रुतिरेव तत्र हेतुः। नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तिः। पुरुषनिःश्वासवन्नच पुरुषबुद्धिपूर्विका इति ज्ञेयम्। अयं मन्त्रः चतुर्थाध्यायस्य प्रथमे ब्राह्मणे द्वितीयायां कण्डिकायां तथा पञ्चमाध्यायस्य पञ्चमे ब्राह्मणे एकादश्यां कण्डिकायां वर्तते।

त्वानुपपत्तिः। अनुभवबलादेव तत्सिद्धेः। गुण-गुणिभावस्य पूर्वमेव समवायनिरासेन निरस्तत्वाच्च। शब्दव्यञ्जकध्वनिग्रहणार्थं वा वहिरिन्द्रियग्राह्यत्वोपपत्तिः। यो ऽयं तारो मया श्रुतः स एव मन्द्रः श्रूयते—इति प्रतीतेस्तारत्वादिकमपि न तत्र विरुध्यते। तथा च वर्णपदवाक्यसमुदायस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिमत्त्वम्। प्रलयकालीनध्वंसप्रतियोगित्वं च। न तु वर्णानां मध्ये उत्पत्ति-विनाशौ। अनन्तगकारादिकल्पने गौरवात्।

अथ—अनुच्चारणदशायां वर्णानामनभिव्यक्तिर्विरुध्यत—इति चेत्। न। तदानीमुच्चारणरूपव्यञ्जकाभावात्। अन्धकारस्थघटानुपलम्भवत्। उत्पन्नो ऽयं गकार—इत्यादिप्रतीतिस्तु—स एवायं गकार—इति प्रत्यभिज्ञाविरोधेन अप्रमाणमेव। वर्णाभिव्यञ्जकध्वनिगतोत्पत्तिनिरूपितसम्बन्धविषयत्वेन वा प्रमाणम्। तस्मात् न वेदानां चिरत्नणावस्थायित्वम्। एतेन[1]—नित्यः शब्दो व्योमैकगुणत्वात्। तत्परिमाणवत्—इति प्राभाकराङ्गीकृतं; अथ च शब्दो नित्यः। निःस्पर्शद्रव्यत्वात् आत्माकाशादिवत्—इति भट्टस्वीकृतमपि निरस्तम्।

अथ—क्षणिकत्वाभावे ऽपि वियदादिवदुत्पत्तिस्वीकारे पौरुषेयापत्तिर्दुर्वारा—इति चेत्। न। न हि पुरुषेणोच्चार्यमाणत्वं पौरुषेयत्वं वेदान्तं ब्रूमः। प्राभाकरमते तथात्वापत्तेः। तदुक्तम्।

> वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
> वेदाध्ययनसामान्यादधुनाध्ययनं यथा॥

---

१ 'एतेन' इत्यारभ्य 'निरस्तम्' इत्यन्तं ख. पुस्तके नास्ति।

इति । नापि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वम् । नैय्यायिकाभिमतपौरुषेयत्वानुमाने ऽस्मदादिना सिद्धसाधनत्वापत्तेः । किन्तु । पुरुषाभिप्रायाद्यनपेक्षत्वे सति सजातीयोच्चारणापेक्षोच्चारणविषयत्वमपौरुषेयत्वम् । सजातीयोच्चारणं तु गुरुमुखोच्चारणानन्तरमनूच्चारणत्वम् । तद्रहितं तु पौरुषेयं इति दिक् ।

यच्च पूर्वं प्राभाकरमते एकेनैव स्वप्रकाशज्ञानेन त्रिपुटीप्रत्यक्षमापादितम् तदप्यसङ्गतमेव । चाक्षुषज्ञानेन स्वस्वरूप-स्वाश्रययोः विषयीकर्तुमशक्यत्वात् । चाक्षुषादिज्ञाने विषयतत्सन्निकर्षयोरपि हेतुत्वात् । चाक्षुषादिज्ञाने उद्भूतरूपवत् द्रव्यस्यैव योग्यत्वाच्च । अन्यथा आकाशादीनामपि चाक्षुषत्वापत्तेः । तृतीयमुद्गरे विस्तरेण तार्किकानुव्यवसायदूषणप्रस्तावे दूषितत्वाच्च । नापि भट्टमते अचिदंशस्य परिणामित्वं युक्तम् । श्रुति-युक्त्यनुभवविरोधात् । तथा च श्रुतिः ।

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अस्थूलमनण्वह्रस्वमग्राह्यमरूपमस्पर्शमगन्धम् ॥

इत्यादिनिरंशत्वप्रतिपादकश्रुतेश्च । एवं युक्तिबाधकत्वमपि । तथा हि । अचिदंशस्य परिणामः किं तादात्म्येन समवायेन वा ? नान्त्यः । असम्भवात् त्वयानङ्गीकारात् च । पूर्वं प्रथममुद्गरे समवायस्य विस्तरेण दूषितत्वात् च । नाद्यः । तत्किं तादात्म्यं भेदसहिष्णुर्वा तत् शून्यं वा ? प्रथमे समवायवदात्माश्रयानवस्थादिदोषप्रसङ्गः । द्वितीये तु परिणामरूपधर्मस्य उत्पत्तिविनाशस्वीकारे धर्मिणस्तावदवश्यं वाच्यौ । तदुक्तम् ।

उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्*।

इति। तथा च कृतहान्यकृताभ्यागमप्रसङ्गः स्यात्। एतेन—

विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यति।

इत्यपास्तम्। आत्मनानात्वनिराकरणं मनसो विभुत्वनिराकरणं च तृतीयमुद्गरे तार्किकमतनिराकरणप्रस्तावे ऽनुसन्धेयम्।

यत्पुनरुक्तं—ज्ञान-कर्मसमुच्चयादेव जडबोधात्मकस्य आत्मनो नित्यं ज्ञानं नित्यं सुखं चोदेति—इत्यादि तदप्यसङ्गतमेव। ज्ञान-कर्मसमुच्चयस्यैवासम्भवात्।

तथा हि। अज्ञानाधिकारिकं कर्म न ज्ञानेन सह समुच्चीयते। तेजस्तिमिरयोरिव युगपदसम्भवात्। कर्माधिकारहेतुदेहात्माभेद-बुद्ध्यपनोदकत्वेन ज्ञानस्य तद्विरोधित्वात्। नापि विकल्प्यते। एकार्थत्वाभावात्। ज्ञानकार्यस्याज्ञाननाशस्य कर्मणा कर्तुमशक्यत्वात्। तदुक्तम्।

अविरोधितया कर्म नाविद्यां विनिवर्तयेत्।
विद्या ऽविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत्॥

इति।

तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्यते अयनाय। इति श्रुतेश्च। ज्ञाने जाते तु कर्म कार्यं नापेक्षत एव। तदुक्तम्।

ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिण्डिमः।

---

* 'उपयन्' जायमानः। 'अपयन्' विनश्यन्। 'विकरोति' उत्पत्ति-विनाशभाजं करोति इति भावः।

इति* अनेन तु अन्तःकरणशुद्धिद्वारा ज्ञानोत्पत्तये कर्माण्यनुष्ठेयानि ।

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।

यज्ञेन दानेन तपसाऽनाशकेन ।

इति श्रुतेः† । किञ्च वार्तिककृद्भिस्त्वज्ञानिनो ऽपि कर्मानधिकारित्वं प्रतिपादितम् ।

तस्य ह न देवा नाभूत्या ईशत आत्मा ह्येषां स भवति‡ ।

---

* एतेन—यत् पूर्वमुक्तम्—

तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने ।

इत्यादि । तदप्यसङ्गतमेव । तथा हि ।

नित्य-नैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयन् ॥
अभ्यासात् पक्वविज्ञानं कैवल्यं लभते नरः ।

इत्यादिना कर्मणः ज्ञानसाधनत्वप्रतिपादनात् ज्ञानद्वारैव कर्म मोक्षसाधनम् । न साक्षात् । पूर्वोक्तहारीतवचनं तु शास्त्रीयपरोक्षज्ञानकर्मणोः साहित्याभिप्रायकं इति दिक् ।

† ज्ञानेन विदितात्मतत्त्वं पुरुषं कर्माणि स्वयमेव त्यजन्ति । न तत्त्यागाय प्रयत्नापेक्षा । तदुक्तम् ।

न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ ।
विदिते परतत्त्वे तु समस्तैर्नियमैरलम् ॥
तालवृन्तेन किं कार्यं लब्धे मलयमारुते ।
ज्ञानामृतरसो येन सकृदास्वादितो भवेत् ॥
स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ।

इत्यादिस्मृतयो ऽत्र प्रमाणम् ।

‡ भगवदनुग्रहद्वारा कृतात्मसाक्षात्कारस्य 'देवाः' महावीर्याश्च । 'न' अपि । सर्वात्मकब्रह्मभावाऽभवनाय । 'नेशते' न समर्था भवन्ति । किमुत कामादयः । 'आत्मा ह्येषां स भवति' । 'स' ब्रह्मवित् । 'एषां' देवानां ।

इति श्रुतिव्याख्याने । किमु वक्तव्यं ज्ञानिन इति । तथा हि ।

कर्मप्रकरणे त्वस्मिन्नविद्याकार ईर्यते ।
स्वस्माद्भिन्ना देवतेति धीरविद्याविजृम्भिता ॥
स्वस्य तत्त्वमविज्ञाय रागदानादिकर्मभिः ।
स्वतो ऽन्यदेवता याति ह्यनड्वान् वणिजं यथा ॥
अपि भूरिपशोः पुंसः एकस्मिन्नपि तस्करैः ।
ह्रियमाणे पशौ दुःखं किमु सर्वापहारतः ॥
सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिभाषिणि ।
ह्रियमाणे भवेद्दुःखं स्यात्सर्वेषां दिवौकसाम् ॥
राज्ञा कृषिफलं यद्वत्करार्थं प्रतिपत्स्यते ।
सर्वभावस्तथा देवैर्यागभुग्भिर्निवार्यते ॥
तस्मादेषां न प्रियं तत् यन्मनुष्याभिजानते ।
ब्रह्मात्मत्वमतो देवाः प्रतिबध्नन्ति बोधजम् ॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनो ऽपि दृश्यन्ते दैवसन्दूषिताशयाः ॥
मुमुक्षुः कर्मभिर्देवानाराध्यैषामनुग्रहात् ।
अन्तःस्थितं वेत्ति चेत्स्वं पारतन्त्र्यान्निवर्तते ॥
प्रामाण्यं कर्मकाण्डस्य देवानां प्रभुता तथा ।
पशुकल्पेषु मूढेषु भवेन्न तु विवेकिनि ॥
नराणामधमर्णत्वात्सर्वभावं दिवौकसः ।

'आत्मा' शास्त्रप्रकाशितब्रह्मरूपः । 'भवति' जायते । ब्रह्मसाक्षात्कारवतो देवा न प्रभवन्ति अभिभवितुमित्याशयः ।

वारयन्ति हविर्भोक्तुं 'तैर्दत्तामिति' चेन्न तत्* ॥
तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः।
इन्द्रादयो ऽपि नैवालं सर्वभावाप्तिवारणे ॥
यद्यपीशा नृणां देवास्तथापि ब्रह्मरूपिणः।
अनीशाः प्रत्युतैवेषामात्मा भवति तत्त्ववित् ॥
ईशाऽनीशित्वसम्बन्धः प्रत्यगज्ञानहेतुजः।
ज्ञानी ज्ञानात्तमोध्वस्तावीश्वराणामपीश्वरः ॥
न चेहाऽविदुषो ऽपि स्यादृणित्वं हेत्वसम्भवात्।
न किञ्चिन्नः सुरैर्दत्तम्टणित्वं येन नो भवेत् ॥
शास्त्रादृणित्व-मिति चेत् न शास्त्रस्यार्थवादतः।
अवदानविधेरर्थवादो ऋणिवचःश्रुतौ ॥

इति। उक्तं च नैष्कर्म्यसिद्धौ।

ब्रह्मण्याध्यात्मिके देहे ज्ञात्वा आत्मेति भावनाम्।
श्रुतेः किङ्करतामेति वाङ्मनः-काय-कर्मभिः ॥
दग्धाखिलाधिकारश्चेत् ब्रह्मज्ञानाग्निना मुनिः।

---

* 'नराणां' इति।

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥
गी० अ० ३ श्लो० १२।

इति गीतोक्तेः। यज्ञभावितैर्देवैः दत्तान् इष्टान् भोगान् एभ्यः देवेभ्यः अदत्त्वा यो भुङ्क्ते स स्तेनः देवस्वापहारी भवति। इति यत् तन्न। प्रध्वस्ततमसः अत एव ज्ञातात्मतत्त्वस्य यतेः इन्द्रादयो ऽपि देवाः सर्वभावाप्तिकरणे नालं न समर्था भवन्ति। अतो दत्तत्वाभावः। तदभावे च देवस्वापहाररूपस्य दोषस्यापि प्राप्तिर्न इति तात्पर्यम्।

वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्विधिकिङ्करः ॥

इति* । एतेन ऐकभविकन्यायं पुरस्कृत्य यदापादितं कर्मणैव मोक्षो भविष्यतीति 'ज्ञानं तत्र करोति किं' इत्यादि तत्सर्वमपास्तम् । तस्मात्सर्वाणि कर्माणि ज्ञानार्थान्येव । न तु ज्ञान-कर्मसमुच्चयः । एवं च सर्वकर्मसन्न्यासोऽपि ज्ञानार्थ एव श्रूयते । तथा हि ।

एवमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ।

शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत् ।

त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् ।

सत्यानृते सुख-दुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् ।

इत्यादौ । तत्र कर्म-तत्त्यागयोरारादुपकारक†-सन्निपत्त्योपकारकयोः ‡प्रयाजावघातयोरिव न समुच्चयः सम्भवति । विरुद्धत्वेन यौगपद्याभावात् । नापि कर्म-तत्त्यागयोरात्मज्ञानमात्रफलकत्वेन ऐकार्थत्वात् अतिरात्रार्थयोः षोड़शिग्रहणाग्रहणयोरिव विकल्पः स्यात् । द्वारभेदेनैकार्थत्वाभावात् । कर्मणो हि पापक्षयरूपमदृष्ट-

* भगवत्पूज्यपादैरप्युक्तम् ।

यावद्देहात्मविज्ञानं बाध्यते न प्रमाणतः ।
प्रामाण्यं कर्मकाण्डस्य तावदेवोपपद्यते ॥
वर्णाश्रमाभिमाने तु श्रुतेर्दासो भवेन्नरः ।
वर्णाश्रमविहीनस्तु वर्तते श्रुतिमूर्धनि ॥

इत्यादि ।

† प्रधानफलनिर्वाहकं 'आरादुपकारकं' प्रयाजादि । तद्धि फलिकाद्वाराऽपूर्वजनकं भवति ।

‡ प्रधानस्वरूपनिर्वाहकं 'सन्निपत्योपकारकम्' हविस्तण्डुलादि ।

मेव द्वारम् । संन्यासस्य तु सर्वविक्षेपाभावेन विचारावसरदानरूपं दृष्टमेव द्वारम् । नियमापूर्वं* दृष्टसमवायित्वादवघातादाविव न प्रयोजकम् । तथा च अदृष्टार्थ-दृष्टार्थयोः आरादुपकारक-सन्निपत्त्योपकारकयोरेव प्रधानार्थत्वेऽपि विकल्पो नास्त्येव । प्रयाजावघातादीनामपि तत्प्रसङ्गात् । तस्मात्क्रमेणानुष्ठेयम् । तत्रापि संन्यासानन्तरं कर्मानुष्ठायित्वं चेत् । तदा परित्यक्तपूर्वाश्रमस्वीकारेण आरूढ़पतितत्वात्, कर्मानधिकारित्वम् । प्राक्तनसंन्यासवैयर्थ्यं च । तस्य अदृष्टार्थत्वाभावात् । प्रथमकृतसंन्यासेनैव ज्ञानाधिकारलाभे तदुत्तरकाले कर्मानुष्ठानवैयर्थ्यं च । तस्मादादौ भगवदर्पणबुद्ध्या निष्कामकर्मानुष्ठानादन्तःकरणशुद्धौ तीव्रेण वैराग्येण विविदिषायां दृढ़ायां सर्वकर्मसंन्यासः वक्ष्यमाणश्रवण-मननादिरूपवेदान्तवाक्यविचाराय कर्तव्यः । तदुक्तं भगवता ।

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते† [अ. ३ श्लो. ४] ।
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढ़स्य तस्यैव शमः कारणमुच्यते‡ [अ. ६ श्लो. ३] ।

---

* 'नियमापूर्वं' तु दृष्टस्यैव किञ्चिद्वैजात्यं जनयति । नतु अदृष्टमित्यर्थः ।

† 'कर्मणां' क्रियाणां यज्ञादीनां इह जन्मनि जन्मान्तरे वा अनुष्ठितानां उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनाम् । 'अनारम्भात्' अननुष्ठानात् । 'नैष्कर्म्यं' निःकर्मभावं ज्ञानयोगेन निष्क्रियात्मस्वरूपेणैवावस्थानमिति यावत् । 'पुरुषो नाश्नुते' न प्राप्नोतीत्यर्थः । एतेन कर्मनिष्ठायाः ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं । न स्वातन्त्र्येण । ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्ध्यात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अनन्यापेक्षा, इत्येतत्सिद्धमिति ज्ञेयम् ।

‡ योगोऽत्र तीव्रवैराग्यपूर्विका विविदिषा । 'आरुरुक्षोः' योगं आरोढुमिच्छतः पुरुषस्य । अनारूढस्य ध्यानयोगे ऽवस्थातुमशक्तत्वात् । तस्य

इति। उक्तं च वार्त्तिककृद्भिः।

प्रत्यग्विविदिषासिद्धौ वेदानुवचनादयः।

ब्रह्मावाप्त्यै तु तत्त्याग ईप्सन्तीतिश्रुतेर्बलात्॥

इति। स्मृतिश्च।

कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः।

कषाये* कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते॥

इति। मोक्षधर्मे च।

कषायं पाचयित्वा च श्रेणीस्थानेषु च त्रिषु।

प्रव्रजेच्च परं स्थानं परिव्राजमनुत्तमम्॥

भावितैः करणैश्चायं बहुसंसारयोनिषु।

आसादयति शुद्धात्मा मोक्षं† वै प्रथमाश्रमे॥

तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः।

त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः॥

इति। अत्र च क्रमाक्रमसंन्यासौ द्वावपि दर्शितौ। तथा च श्रुतिः।

ब्रह्मचर्यं परिसमाप्य गृही भवेत्।

गृहात् वनी भूत्वा प्रव्रजेत्।

इति। इतरथा ब्रह्मचर्यादेव प्रव्रजेत्।

---

'मुनेः' कर्मफलत्यागिनः। 'कर्म' यागादि। 'कारणं' साधनं। 'उच्यते' कथ्यते इत्यर्थः। पुनः 'तस्यैव' 'योगारूढस्य' 'शमः' उपशमः सर्वकर्मभ्यो निवृत्तिः। 'कारणं' योगारूढत्वस्य साधनमुच्यत इत्यर्थः। अत्रायं प्रयोगः। यावत् यावत् कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते। तथा सति स झटिति योगारूढो भवति।

* 'कषायो' रागद्वेषादिमलः।

† 'मोक्षं' वैराग्यम्। 'आसादयति' प्राप्यत इत्यर्थः।

गृहाद्वा वनाद्वा अथ स्नातको वा ऽस्नातको वा
यदहरेव विरजेत् तदहरेव प्रव्रजेत्।

इति। तस्मादज्ञस्य अविरक्तदशायामेव कर्माधिकारः। तस्यैव विरक्तदशायां सर्वकर्मसंन्यास इति क्व ज्ञान-कर्मसमुच्चयशङ्का?।

## इति ज्ञान-कर्मसमुच्चयखण्डनम्।

---

एवं च ज्ञान-कर्मसमुच्चयसाध्यस्य नित्यसुखसाक्षात्काररूपमोक्षस्याप्यनुपपत्तिरेव। तथा हि। तन्नित्यं सुखमात्मनो भिन्नमभिन्नं वा? नान्त्यः। त्वया अनङ्गीकारात्। अथ—भिन्नमिति चेत्। तत्किं जन्यमजन्यं वा? आद्ये। जन्यस्य क्षयित्वनियमेन कथमक्षय-पुमर्थकामनाविषयता। ब्रह्मलोकान्तसुखवितृष्णो हि मुमुक्षुरुच्यते। तदुक्तम्।

ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः*।

इति। द्वितीये तस्य ज्ञापकं वक्तव्यम्। स्वप्रकाशत्वानङ्गीकारात्। अङ्गीकारे च वेदान्तमतप्रवेशात्। मोक्षदशायां च ज्ञान-करणमनःसंयोगसाधकाऽदृष्टेन्द्रियाद्यभावादवेद्यत्वेन तार्किकमतवत् तदेवापुरुषार्थत्वमायातम्। न हि असंवेद्यसुखस्य पुमर्थत्वमस्ति। परसुखस्याप्रसङ्गात्। इन्द्रियाद्यभ्युपगमे च संसारदशायामपि तत्प्रसङ्गः स्यात्। कस्यचिदावरणस्याभ्युपगमे तु। तस्य सत्त्वासत्त्वभिन्नाभिन्नत्व-रूपविचारासहत्वात्। अनिर्वचनीयत्वस्वीकारे तु ब्रह्मवादिमत-

---

* 'तृणीकारः' अभूततद्भावे च्विः। ब्रह्मलोकमपि तृणवत्तुच्छं मत्वा तस्य त्यागो वैराग्यस्य परमावधिर्भवतीत्यभिप्रायः।

प्रवेशात्। अत एव आत्माभिन्नमपि न तत्सुखम्। आत्मस्वरूपस्य सर्वदा अनावृतत्वेन तदभिन्नसुखस्य संसारदशायामपि भानप्रसङ्गाच्च। अनया चानुपपत्त्या नव्यमीमांसकैः केवलदुःखाभाव एव परिगृहीतः। स च तृतीयमुद्गरे निराकृत एव। आत्मनिवृत्तिमन्तरेण तदाश्रितसुखदुःखनिवृत्त्ययोगात्। विशेषतः भाट्टैः कार्यकारणयोस्तादात्म्याङ्गीकाराच्च। उपादाननिवृत्त्यैव कार्यनिवृत्तेर्दर्शनात्। इत्यलं मृतमारणेनेति दिक्।

अत एव चिदण्डिनां मतस्याप्यनवकाश एव। तथा हि। भेदाभेदस्य सर्वप्रमाणविरुद्धत्वात् तृतीयमुद्गरे दूषितत्वाच्च। किञ्च। पारमार्थिकभेदस्य न निवर्तकं पश्यामः। अथ—तस्य तत्त्वज्ञानं निवर्तकं—इति चेत्। न। तत्किं भिन्नाभिन्नविषयं? अभिन्नमात्रविषयं वा? आद्ये न तस्य भेदनिवर्तकत्वं सम्भवति। ज्ञानस्य स्वविषयनिवर्तकत्वायोगात्। द्वितीये भेदस्य ज्ञाननिवर्त्यत्वे कल्पितत्वप्रसङ्गः। कल्पितस्यैव ज्ञाननिवर्त्यत्वनियमात्। अथ—पुरुषोत्तमदर्शनादिना पापनिवृत्तौ व्यभिचारः। तदुक्तं विष्णुपुराणे—

आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम्।
पातकान्याशु नश्यन्ति किं पुनश्चोपपातकम्॥

इति। अन्यत्रापि—

"सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति"।

इति—इति चेत्। न। तत्र विहितक्रियाविशेषत्वेनैव पापनिवर्तकत्वाङ्गीकारात्।

"धर्मेण पापमपनुदति"।

इति श्रुतेः । इह तु ज्ञानत्वस्यैव निवर्तकतावच्छेदकत्वेन विवक्षितत्वात् । स्वप्नगन्धर्वनगर-शुक्तिरजतादौ तथा दर्शनात् । उक्तं च पञ्चपादिकाकृद्भिः ।

यतो ज्ञानमज्ञानस्यैव निवर्तकम् ।

इति । अज्ञानस्य च विश्वभ्रमोपादानत्वेन अद्वितीयचैतन्ये कल्पितत्वम् । अभिन्नमात्रस्य वेदप्रमेयत्वे भेदांशस्य कथं शास्त्रीयत्वम् ?। भिन्नाभिन्नस्य वेदप्रमेयत्वे तु मोक्षदशायामपि तथैव स्यात् । अभिन्नमात्रे प्रमाणाभावात् ।

अथ—आत्मज्ञानात् मिथ्याज्ञाननिवृत्तिः । कर्मणा च भेदनिवृत्तिः—इति चेत् । न । भेदाभेदवादिमते मिथ्याज्ञानस्य दुर्निरूपत्वात् । भेदाभेदेन सर्वत्रैव सर्वप्रमासम्भवात् । कर्मणां च न कुत्रापि भेदनिवर्तकत्वं दृष्टम् । न वा श्रुतम् । कर्मजन्यस्य च अनित्यत्वनियमात् । अथ—

"न स पुनरावर्तते" ।

इति श्रुत्या पुनरावृत्त्यनुमानं बाध्यते—इति चेत् । न । विरोधाभावात् । न हि यदा ब्रह्मलोकं प्राप्नोति तदैव पुनरावर्तत इति वयं ब्रूमः । श्रुतिश्च 'नावर्तत' इति वर्तमानकाले आवृत्तिं दर्शयति । न आवर्तिष्यतैव इति कल्पना—कृतत्वेन विनाशित्वानुमानविरुद्धा इति ब्रूमः । उपासनाविधेः स्तुतिपरत्वाच्च नास्य प्रमाणान्तरबाधकत्वम् । श्रुतिश्च ।

तद्यथेह कर्मचितो[1] लोकः क्षीयते ।

१ क. पुस्तके 'कर्मजितो' इति पाठः ।

एवमेवामुत्र पुण्यचितो लोकः क्षीयते ॥

इति केवलकर्मजन्यत्वात् ज्ञान-कर्मजन्यत्वेऽपि न कोऽपि विशेषः। वक्ष्यमाणाशनाद्यतीतात्मज्ञानस्य सर्वकर्मविरोधित्वाच्च न समुच्चयावकाशः। निर्विकारावस्थब्रह्मप्राप्त्यादिकं तु भिन्नाभिन्नविकल्पग्रस्तत्वेनैवानुपपन्नम्। प्रमाणाभावात्। अद्वैतश्रुतिविरोधाच्च। प्राभाकरसम्मतमोक्षस्य च तार्किकमोक्षवदेव अपुरुषार्थत्वं व्याख्येयम्। गुणगुणिभावाङ्गीकाराविशेषात् इति दिक्।

## इति भट्टचिदण्डोभयसम्मतमोक्षखण्डनम्।

---

यत् पुनरुक्तं—न कदाचिदनीदृशं जगत्—इति। तत्किं प्रवाहानादित्वेन वा सृष्टिप्रलयाद्यभावपूर्वकानाद्यनन्तत्वेन वा? आद्ये। इष्टापत्तिः। यावद्ब्रह्मज्ञानं कल्पितप्रपञ्चरचनायाः पूर्वं प्रतिपादितत्वात्। अग्रे प्रतिपाद्यमानत्वाच्च। द्वितीये। अनेकश्रुति-स्मृतीतिहास-पुराणादिविरोधात्। तथा च श्रुतयः।

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः।

इत्याद्याः पूर्वमेव विस्तरेण प्रदर्शिताः। ननु—तवापि कथं निर्विशेषे ब्रह्मणि जगत्सृष्ट्यादिकल्पनं—इति चेत्। शृणु। एवमत्र प्रक्रिया। जीवेश्वर-जगद्विभागशून्येऽपि शुद्धे ब्रह्मणि अध्यस्ता अनादिमाया विद्यापर्यायशब्दवाच्या। सत्वप्राधान्येन स्वच्छा दर्पण इव मुखाभासं चिदाभासमागृह्णाति। ततश्च बिम्बस्थानीयः परमेश्वरः उपाधिदोषाऽनवस्कन्दितत्वात् सर्वज्ञत्वादिधर्मविशिष्टः। प्रतिबिम्बस्थानीयश्च जीवः

उपाधिदोषास्कन्दितः किञ्चिज्ज्ञत्वादिधर्मविशिष्टः। उपाधिस्तु—उप समीपे स्थित्वा स्वीयं रूपं अन्यत्र आदधाति इति उपाधिः। ईश्वराच्च जीवभोगाय आकाशादिक्रमेण वक्ष्यमाणेन शरीरेन्द्रिय-सङ्घातः तद्भोग्यश्च कृत्स्नः प्रपञ्चो जायते। बिम्ब-प्रतिबिम्बमुखानुगत-मुखवच्च ईश-जीवानुगतं मायोपाधिचैतन्यं साक्षी कल्प्यते। तेनैव साक्ष्यस्तमायातत्कार्यं च कृत्स्नं प्रकाश्यते। न च—निर्विशेषब्रह्मणि[1] सर्वदा एकरूपत्वेन कथं जीवेशादिविभागकल्पनं—इति वाच्यम्। जीवेश्वरादिविभागस्य अनादिसिद्धत्वस्वीकारात्। तस्य च श्रुति-स्मृतिसिद्धत्वात्। तदुक्तम्।

जीव ईशो विशुद्धा चित् विभागश्च तयोर्द्वयोः।
अज्ञानं तच्चितोर्योगः षडस्माकमनादयः॥

इति। तथाच।

मायाभासेन जीवेशौ करोति।
रूपं रूपं प्रतिरूपो बभूव।
तदस्य रूपं प्रति च लक्षणाय*।

---

१ 'निर्विशेषे' इति ख. पुस्तके।

---

* मैत्रेय्या पृष्टो याज्ञवल्क्यः 'इदं तन्मधु दध्यङ् ङाथर्वणः अश्विभ्यामुवाच' इत्यभिधाय। 'रूपं' प्रतिरूपं प्रति 'प्रतिरूपो' रूपान्तरं बभूव। रूपः अनुरूपो वा। यादृक्संस्थानौ माता-पितरौ तादृक्संस्थान एव पुत्रो भवति। न हि चतुष्पदो द्विपात् द्विपदो वा चतुष्पात्। एवं हि पर-मेश्वरो नाम-रूपे व्याकुर्वाणो रूपं रूपं प्रतिरूपो बभूव। किमर्थमिति

इत्यादिश्रुतेः।

ममैवांशो* जीवलोके जीवभूतः सनातनः।

[गी० अ० १५ श्लो० ७]

इति स्मृतेश्च।

अंशो नानाव्यपदेशात्† ।

इति व्याससूत्राच्च। अथ श्रुति-स्मृतिसिद्धस्यापि जीवेश्वरविभागस्य प्रक्रिया प्रतिपाद्यते। तत्र अस्मन्मते पदार्थौ द्विविधः। दृक् दृश्यं च। अन्यवादिपरिकल्पितानां पदार्थानां अत्रैवान्तर्भावः। पूर्वमतिरिक्तानां दूषितत्वात्। तत्र दृक्पदार्थ आत्मा पारमार्थिक

---

चेत्? 'तदस्य' आत्मनः 'रूपं प्रति चक्षणाय' प्रतिख्यापनाय। यदि हि नाम-रूपे न व्याक्रियेते तदा अस्य आत्मनः निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत प्रसिद्धं स्यात् इत्यर्थः।

* अंश इव 'अंशः' प्रतिबिम्बः परिच्छेदो वा। अनाविष्कृताखिलशक्तिमत्त्वमंशत्वमिति फलितोऽर्थः।

† 'अंशो नानाव्यपदेशात् अन्यथा चापि दाशकितवादित्वमधीयत एके' [शा. अ. २ पा. ३ सू. ४३] जीवः ईश्वरस्य 'अंशः' भवितुमर्हति। यथाग्नेर्विस्फुलिङ्गः। न हि निरवयवस्य मुख्योंऽशः सम्भवति। निरवयवत्वात्। स एव पुनः न सम्भवति। 'नानाव्यपदेशात्' "सोऽन्वेष्टव्यः" "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति"। एवंजातीयको भेदः असति भेदे न सम्भवति। 'अन्यथा चापि' अन्यथा चापि व्यपदेशो भवति अनानात्वप्रतिपादकः। तथा हि। 'एके' मुनयः। 'दाश-कितवादित्वमधीयते' ब्रह्मणः दाशकितवादिभावं आमनन्ति।

एक एव। सर्वदा एकरूपो ऽपि स्वोपाधिभूतमायावशात् त्रिधा विभज्यते। ईशो* जीवः साक्षी चेति। तत्र कारणोपाधिभूतमायोपहितं चैतन्यमीश्वरः। सोऽपि त्रिविधः। प्रतिब्रह्माण्डं स्वोपाधिभूतमायागुणत्रयभेदेन ब्रह्म-विष्णु-रुद्रभेदात्। तत्र कारणीभूतसत्त्वगुणावच्छिन्नः उपहितो वा विष्णुः पालयिता। कारणीभूतरजउपहितो ब्रह्मा। हिरण्यगर्भस्तु अपञ्चीकृतपञ्चमहाभूतकारणाभावान्न ब्रह्मा। तथापि पञ्चीकृतपञ्चमहाभूतोत्पादकत्वात् क्वचित् ब्रह्मेत्युपचर्यते। तदुक्तम्।

हिरण्यगर्भो नाम मूर्तित्रयादन्यः प्रथमो जीवः।
सैव शरीरी प्रथमः सैव पुरुष उच्यते।
आदिकर्ता च भूतानां ब्रह्माग्रे समवर्तत।

इति।

"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्"। इति श्रुतेश्च। एवं कारणीभूततमउपहितो रुद्रः संहर्ता। उपहितत्वं च इतरव्यावर्तकत्वे सति विशेषानन्वयित्वम्। यथा शाखा तदुपहिते चन्द्रे।

एवं एकस्यैव चतुर्मुख-चतुर्भुज-पञ्चमुखाद्याः पुरुषाकाराः। श्रीभवानी-भारती-रमाद्याः स्त्र्याकाराः। अन्ये च मत्स्य-कूर्मादयो लीलयैवाविर्भवन्ति इति च प्रतिब्रह्माण्डम्। श्रुतिश्च।

---

* ईश्वरत्वं च सर्वदाखिलशक्त्याविर्भावत्वम्। गुणावतारत्वं च अखिलशक्त्याविर्भावयोग्यत्वम्। अंशावतारत्वं च कतिपयशक्त्याविर्भावत्वम्।

अथ यो ह खलु वा वास्य तामसो ऽंशो ऽसौ ब्रह्मचारिणो यो ऽयं रुद्रः। अथ यो ह खलु वा वास्य राजसो ऽंशो यो ऽयं ब्रह्मा। अथ यो ह खलु वा वास्य सात्विको ऽंशो ऽसौ ब्रह्मचारिणो यो ऽयं विष्णुः* ।

एवं भवान्यादीनामपि आश्वलायनशाखायामाम्नातमनुसन्धेयम्। न च अनन्तब्रह्माण्डकल्पने मानाभावः। तथा च विष्णुपुराणे प्रकृतिं प्रकृत्य—

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च।
ईदृशानां तथा तत्र कोटिकोटिशतानि च॥

इति। सौरे च

ब्रह्माण्डमेतत्सकलं ब्रह्मणः क्षेत्रमुच्यते।
सहस्रकोटयः[१] सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वगाः॥
ब्रह्माणो हरयो रुद्रास्तत्र तत्र व्यवस्थिताः।
आज्ञया देवदेवस्य महादेवस्य शूलिनः† ॥

---

१ 'कोटिशः' इति ख० पुस्तके।

---

* हे 'ब्रह्मचारिणः' ब्रह्मविचारकर्तारः। 'अस्य' ब्रह्मणः 'यो ह खलु वा व' 'तामसः' तमःप्रधानः। 'अंशः' तमउपाधिको विशेषः स 'रुद्रः'। एवं 'राजसो ऽंशो' ब्रह्मा 'सात्विको ऽंशो' विष्णुरिति यथायथं योजनीयम्।

† 'शूलिनः' संसारनाशकरस्य। न तु शूलसंज्ञकायुधधरस्य।

ब्रह्माण्डानामसङ्ख्यानां ब्रह्म-विष्णु-हरात्मनाम् ।
उद्भवे प्रलये हेतुर्महादेव* इति श्रुतिः ॥

इति । नारदीयेऽपि ।

सृष्टिस्थित्यन्तकरणे ब्रह्म-विष्णु-महेश्वराः ।
यस्यायुतायुतांशांशास्तद्ब्रह्मेत्यभिधीयते† ॥

इति । एवमन्यत्रापि इति दिक् । विस्तरस्तु स्वरूपप्रकाशे तृतीयपरिच्छेदेऽनुसन्धेयः ।

## इत्यापातत ईश्वरनिरूपणम् ।

---

अथ जीवतत्त्वनिर्णयः । अन्तःकरण-तत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बीभूतं चैतन्यं जीव इति विवरणानुसारिणः । प्रतिबिम्बत्वं तु । उपाध्यन्तर्गतत्वप्रतीयमानत्वे सति औपाधिकपरिच्छेदशून्यत्वे च सति बहिःस्थितस्वरूपत्वम् । उपाध्यनन्तर्गतत्वे सति उपाध्यन्तर्गतस्वरूपाभिन्नत्वं बिम्बत्वम् । तथा च उपहितमुखद्वयाच्छुद्धं मुखं भिद्यते । अशुद्धस्य उपहितकल्पनाधिष्ठानत्वेन ततो भेदस्यावश्यकत्वात् इति साक्षिसिद्धिः । अत्र च अन्तःकरणनानात्वाज्जीवनानात्वम् । न तु

---

* 'महादेवः' दिव्यतीति देवः महांश्चाऽसौ देवश्चेति । चैतन्यरूपप्रकाशकस्य परमात्मनः सगुणं रूपमित्यर्थः ।

† 'ब्रह्म-विष्णु-महेश्वराः' 'यस्य' 'परमात्मनः' अयुततमस्य अंशस्य अयुततमांशभूताः । अतिसूक्ष्मांशरूपा इत्यर्थः ।

वास्तवम्। पूर्वमेव दूषितत्वात्। यथा तार्किकमते श्रोत्रैक्ये ऽपि तत्तत्कर्णशष्कुल्युपाधिभेदेन शब्दग्रहभेदव्यवस्था। एव मात्मैक्ये ऽपि अन्तःकरणोपाधिभेदादेव बन्ध-मोक्षादिव्यवस्थोपपत्तिः। अत्र प्रतिबिम्बस्य वास्तवत्वे वक्ष्यमाणतत्त्वमादिपदे जहदजहल्लक्षणैव। सोऽयं देवदत्तः—इति वाक्यस्थपदवत्। न च—वार्तिककारमते आभासस्वीकारेण जहदजहल्लक्षणाविरोधः—इति वाच्यम्। तन्मते जहल्लक्षणास्वीकारात्। गङ्गायां घोषवत्। तदुक्तं सङ्क्षेपशारीरके।

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाऽहम्-
शब्दो ऽहङ्कारवाची भवति तु जहती लक्षणा तत्र पक्षे।

इति। तन्मते प्रतिबिम्बस्यैव जडाजडविलक्षणत्वेन आभासत्वस्वीकारात्। न च—तर्हि आभासस्यैव बद्धत्वात् केवलचैतन्यस्य च मुक्तत्वात् बन्ध-मोक्षयोर्वैय्यधिकरण्यापत्तिः। स्वनाशार्थं प्रवृत्त्यनुपपत्तेश्च—इति वाच्यम्। तन्मते केवलचैतन्यस्यैव आभासद्वारा बद्धत्वात्। न बन्ध-मोक्षयोर्वैय्यधिकरण्यापत्तिः। तदुक्तम्।

अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम्* ।

इति। प्रतिबिम्बादाभासस्य वैलक्षण्यम्। यद्यपि दर्पणगतः चैत्रप्रतिबिम्बः स्वं परं च न जानाति। अचेतनांशस्यैव तत्र प्रतिबिम्बनात्। तथापि चित्प्रतिबिम्बः चित्त्वादेव स्वं परं च जानाति। प्रतिबिम्बपक्षे बिम्बचैतन्यमेव उपाधिस्थत्वमात्रस्यैव कल्पितत्वात्। आभासपक्षे च अनिर्वचनीयत्वे ऽपि जडविलक्षणत्वात्। स च यावत् स्वबिम्बैक्य-

* 'संसार्यात्मदर्शनम्' संसारिरूपेण जीवरूपेण आत्मनः दर्शनं अवलोकनम्।

मात्मनो न जानाति तावज्जलप्रतिबिम्बितसूर्य इव जलगतकम्पादिकं उपाधिगतं विकारसहस्रमनुभवति । अत एव जीवोऽन्तःकरणावच्छिन्नत्वात् तत्सम्बद्धमेव अक्षादिद्वारा भासयन् किञ्चिज्ज्ञो भवति। ततश्च जानामि—करोमि—भुञ्जे—च इति अनर्थशतभाजनं भवति। स चेद्बिम्बभूतं भगवन्तमनन्तशक्तिमायानियन्तारं सर्वविदं सर्वफलदातारं अनिशमानन्दघनमूर्तिं अनेकावतारान् भक्तानुग्रहाय विदधतं आराधयति परमगुरुमशेषकर्मसमर्पणेन तदा बिम्बसमर्पितस्य प्रतिबिम्बे प्रतिफलनात् सर्वानपि पुमर्थानासादयति । तदुक्तं प्रह्लादेन ।

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानम्
तच्चात्मने[1] प्रतिमुखस्य यथा मुखश्रीः ॥

[भा. स्कं. ७ अ. ९ श्लो. ११]

इति । अत एव यदा भगवन्तमाराधयतोऽन्तःकरणं ज्ञानप्रतिबन्धकपापरहितं भवति ज्ञानानुकूलपुण्येन चोपचितं भवति तदातिनिर्मलमुकुरमण्डल इव सुखं अतिस्वच्छेऽन्तःकरणे सर्वकर्मत्याग-शमदमादिपूर्वकगुरूपसदन-वेदान्तवाक्यश्रवण-मनन-निदिध्यासनैः संस्कृतं 'तत्त्वमसि' इति गुरूपदिष्टवेदान्तवाक्यकरणिक 'अहं ब्रह्मास्मि' इत्यनात्माकारशून्या निरुपाधिचैतन्याकारा साक्षात्कारात्मिका वृत्ति-

१ 'तत्त्वात्मने' इति क० पुस्तके पाठः ।

रुदेति । तस्यां च प्रतिफलितं चैतन्यं सद्य एव स्वविषयाश्रयामविद्या- मुन्मूलयति । दीपेनेव तमः । ततः तस्या नाशात् तया वृत्त्या सह अखिलस्य कार्यप्रपञ्चस्य नाशः । उपादाननाशादुपादेयनाशस्य सर्वतन्त्रसिद्धत्वात् इति दिक् ।

## इति प्रतिबिम्बवादः ।

---

अथ अवच्छेदवादः । तत्र—ब्रह्म नास्ति, न जानामि—इत्या- दिव्यवहारो यदाश्रितः अज्ञानमपि तदाश्रितम् । कार्य-कारण- योरभेदात् । स च जीवाश्रित इति अज्ञानमपि तदाश्रितम् । तथा च अज्ञानाश्रितं चैतन्यं जीवः । अज्ञानविषयीभूतं चैतन्यं चेश्वरः । ननु—जीवाश्रितायाः अविद्यायाः प्रतिबिम्बो वा तदवच्छिन्नं चैतन्यं वा ? तदुपहितं चैतन्यं वा ? असङ्गोदासीनं व्यापकं तत्कल्पि- तभेदो वा ? जीव इति । तथा च अन्योन्याश्रयप्रसङ्गः—इति चेत् । न । किमयमन्योन्याश्रयः उत्पत्तौ ज्ञप्तौ वा स्थितौ वा ? नाद्यः । अनादित्वादुभयोः । न द्वितीयः । नित्यस्य प्रकाशज्ञानरूपसाक्षिण एव तज्ज्ञानात् । नापि तृतीयः । असम्भवात् । तथा हि । किमयं परस्पराश्रितत्वेन वा परस्परसापेक्षस्थितिकत्वेन वा ? उभयथाप्य- सिद्धेः । अज्ञानस्य चिदाश्रयत्वेन चिदधीनस्थितिकत्वे ऽपि चितः अविद्याश्रितत्व-तदधीनस्थितिकत्वयोरभावात् । न च—एवमन्योन्या- धीनताक्षतिरिति वाच्यम् । समानकालीनयोरपि अवच्छेद्यावच्छे- दकभावमात्रेण तदुपपत्तेः । घट-तदवच्छिन्नाकाशयोरिव । तदुक्तम् वसिष्ठसंहितायाम् ।

तस्यैव नित्यतृप्तस्य सदानन्दमयात्मनः।
अवच्छिन्नस्य जीवस्य संसृतिः कथ्यते बुधैः॥

इति। एवमन्यत्रापि।

स्वेनैव कल्पिते देशे व्योम्नि यद्वत् घटादिकम्।
तथा जीवाश्रयां विद्यां मन्यन्ते ज्ञानकोविदाः॥

इति।

घटसंवृतमाकाशं नीयमाने यथा घटे।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः॥

इति वाचस्पतिमिश्रानुसारिणः। अत्र च अज्ञाननानात्वाज्जीवनानात्वम्।

इन्द्रो मायाभिः पुरुरूप ईयते।

इति श्रुतेः। प्रतिजीवं वियदादिप्रपञ्चभेदश्च। न च—यो घटो मया दृष्टः स एव त्वया दृश्यते—इति कथं प्रत्यभिज्ञानं—इति वाच्यम्। सादृश्यादेकस्यां शुक्तौ दशपुरुषीयभ्रमवदुपपत्तेः। तदुक्तम्।

द्वैतभेदे प्रतिज्ञानं प्रत्यभिज्ञा कथं वद?।
दशानां युगपत्सर्पभ्रमे यद्वत्तथैव सा॥

इति। ननु—वियदादिप्रपञ्चस्य अज्ञातसत्त्वानभ्युपगमे सुप्तप्रबुद्धस्य—तदेवेदं गृहं—इति प्रत्यभिज्ञाने का गतिः? इति चेत्। न। एकस्यामेव रज्ज्वां मन्दान्धकारवर्तिन्यां दशानां युगपत्सर्पभ्रमेण पलायमानानां परस्परसंवादेन एक एव सर्पः सर्वैरनुभूयते इति प्रत्यभिज्ञानात् अज्ञातसत्त्वानङ्गीकारात्। तत्र च स्वस्वभ्रमसिद्धः पृथक् पृथगेव सर्वैरनुभूयते विषयः। अन्यभ्रमसिद्धस्यान्येन ज्ञातु-

मशक्यत्वात्। अविवेकादेव तु तत्र प्रत्यभिज्ञानम्। एक एव सर्पः सर्वैरनुभूयते इति। एवं जाग्रदवस्थायां वियदादिप्रपञ्चमनुभूय सुषुप्तिं गत्वा पुनरुत्थाय योऽयं प्रपञ्चानुभवः स प्रपञ्चान्तरमेव विषयीकरोति। प्रत्यभिज्ञानं त्वविवेकादेव। न च—सुषुप्तौ प्रपञ्चविलये मानाभावः—इति शङ्क्यम्।

न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते। अविनाशित्वात्।

न तु तद्द्वितीयमस्ति। ततोऽन्यद्विभक्तम्।

यत्पश्येत् यज्जिघ्रेत् यत् स्पृश्येत्।

इति श्रुत्या सुषुप्तौ द्वितीयाभावं वदन्त्या तत्र सर्वप्रपञ्चाभावस्य दर्शितत्वात्। ननु—गृहान्निर्गतस्य असत्वनिश्चयेन रोधनादिप्रसङ्गः—इति चेत्। न। बाधकप्रमाणस्याप्रवर्तकत्वेन अभावनिश्चयस्यैव अभावात्। स्वप्नवत्सर्वव्यवहारस्य पूर्वमेव प्रतिपादितत्वाच्च। न च—तत्र बोधोऽस्ति—इति वैषम्यमिति वाच्यम्। भ्रमावस्थायां कुत्रापि बाधस्य अनङ्गीकारात्। प्रमाणप्रवृत्तौ बाधे तु इष्टापत्तेः। न च—त्रिविधसत्वाभ्युपगमविरोधः—इति वाच्यम्। सर्वस्य द्वैतस्य प्रातीतिकसत्वमपरित्यज्य तैर्भ्रान्तसन्तोषमात्रस्यैव कृतत्वात्। वियदादिप्रपञ्चस्य प्रातीतिकत्वेऽपि भ्रान्तबुद्धिसिद्धावान्तरवैषम्याश्रितव्यावहारिकसत्वाभिधानाच्च न विरोधः।

ननु—तथापि रज्जुसर्पज्ञानात् आकाशादिज्ञानेऽस्ति कश्चन विशेषः। प्रत्यक्षादिप्रमाणविषयत्वात्। अविद्याकारणकत्वात् भावाभावाभ्यां च। न हि यादृशमर्थमिन्द्रियादिजन्यज्ञानं विषयीकरोति तादृशमेव अविद्याजन्यभ्रमोऽपि, इति सम्भवति। भ्रमात् पूर्वं विषय-

स्यैव अविद्यमानत्वात्। इन्द्रियादिजन्यज्ञानस्य च सन्निकर्षादिजन्यत्वेन ज्ञानात्पूर्वं विषयसत्त्वावश्यम्भावात्। अन्वय-व्यतिरेकाभ्यां च इन्द्रियादेः कारणत्वस्य सिद्धत्वात्। तस्मात्प्रपञ्चस्य अज्ञातसत्त्वाभ्युपगमो ऽवश्यंभावी। अन्यथा वैलक्षण्यानुपपत्तेः—इति चेत्। न। इन्द्रियादेः वस्तुतः प्रपञ्चज्ञानम्प्रति कारणत्वाभावात्। कुतः? इति चेत्। शृणु। किमिन्द्रियादेः प्रमितिमात्रे कारणता किं वा भ्रमप्रमासाधारणज्ञानमात्रे भ्रममात्रे वा? नाद्यः। इन्द्रियादिजन्यज्ञानप्रामाण्यं भ्रमविषयव्यावृत्तार्थविषयत्वेन साधनीयम्। भ्रमविषयव्यावृत्तत्वं च प्रमितिविषयत्वेन इति अन्योन्याश्रयात्। न च—प्रमितिविषयत्वमर्थसत्यत्वे हेतुः—इति वाच्यम्। मिथ्या इदं रजतं—इति प्रमित्या असत्यस्यापि विषयीकरणात्। अबाधितत्वस्य च असिद्धेः। किं च। इन्द्रियाणां प्रमाणत्वेन अज्ञातार्थविषयत्वे वक्तव्ये अधिष्ठानमात्रविषयत्वं प्राप्तम्। प्रपञ्चस्य च सर्वस्य जडत्वेन अज्ञातत्वाभावात्। तथा च अज्ञातत्वस्य आत्मन्येव विश्रान्तत्वेन—प्रत्यगात्मविषयाणि इन्द्रियाणि—इति वक्तव्यम्। तच्च नोपपद्यते। प्रत्यगात्मन इन्द्रियाविषयत्वात्। तस्य च निर्धर्मकत्वात्। तथा च श्रुतिः।

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम्।
पराञ्चि खानि व्यतृणत्स्वयम्भूस्
तस्मात्पराङ् पश्यति नान्तरात्मन्॥

इति। न च—अनयैव श्रुत्या इन्द्रियाणां प्रपञ्चविषयत्वं दर्शितं—इति वाच्यम्। स्वप्नेन्द्रियवत् अन्वय-व्यतिरेकभ्रमसिद्ध प्रपञ्च-

ज्ञानकरणत्वानुवादेन आत्मन इन्द्रियाविषयत्वप्रदर्शने तात्पर्यात्[1]। एतेन भ्रमप्रमासाधारणज्ञानमात्रे कारणत्वमप्यपास्तम्। प्रमाकरणत्वस्य निरूपयितुमशक्यत्वात्।

न च—तर्हि भ्रममात्रे कारणतास्तु—इति वाच्यम्। भ्रमज्ञाने अविद्यायोनित्वस्य तृतीयमुद्गरे प्रतिपादितत्वात्। ज्ञानं प्रति इन्द्रियान्वय-व्यतिरेकयोश्च स्वप्नेन्द्रियान्वय-व्यतिरेकवदुपपत्तेः। तथा च घटपटादिकार्यमात्रे कारणाकाङ्क्षायां कारणत्वेन अविद्यैवोपसंहर्तव्या। तत्तदर्थिनां तत्कारणविशेषोपादानं तु तथैव भविष्यति इति किमनुपपन्नम्?। तदुक्तम्।

अविद्यायोनयो भावाः सर्वे ऽमी बुद्बुदा इव।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम्॥

इति। ननु—तथापि मायाकार्यस्य अनिर्वाच्यत्वमपि अनुपपन्नमिव भाति—इति चेत्। नैवम्। अनुभवानुरोधादेव तत्सिद्धेः। तथा हि। इदं रजतं—इति रजतवैशिष्ट्याकारा पुरोवर्तिविषयिणी प्रतीतिरस्ति न वा? अथ नास्ति चेत्। तर्हि रजतार्थिनः पुरोवर्तिनि प्रवृत्तिर्न स्यात्। प्रवर्तकज्ञानाभावात्। अथ—विवेकाग्रहात्प्रवृत्तिः—इति चेत्। तर्हि विवेकाग्रहात् तन्निवृत्तिरपि स्यात्। न चेष्टापत्तिः। विशिष्टज्ञानोच्छेदप्रसङ्गात्। साङ्ख्यमति प्रथममुद्गरे अविवेकपदार्थस्य दूषितत्वाच्च। अथ अस्ति चेत्। तर्हि सा प्रतीतिः किं निर्विषयिणी सविषयिणी वा? नाद्यः। निर्विषयज्ञानायो-

---

१ 'तात्पर्यम्' इति क० पुस्तके।

गात्। विज्ञानवादिसम्मतसाकारवादापत्तेश्च। द्वितीये। तर्हि तस्याः प्रतीतेः विषयः किं सन् असन् वा? न तावदसन्। अपरोक्षत्वाप्रतीतेः। सन् चेत्। तर्हि किं पुरोवर्तिनि स्थलान्तरे वा? पुरोवर्तिनि चेत् भ्रान्ति-बाधौ न स्याताम्। द्वितीये इदमालोचनीयम्। स्थलान्तरं किं बुद्धिः उत कान्ताकरादि?। नाद्यः। प्रमाणाभावात्। पूर्वं विज्ञानवादिमतखण्डनेन निराकृतत्वाच्च। न हि—रजतमिदं—इति प्रत्ययो वा—न इदं रजतं—इति बाधप्रत्ययो वा रजतस्य धीरूपतां आवेदयति। इदङ्कारास्पदरजतावेदकत्वादाद्यस्य। बाधकप्रत्ययस्यापि—इदं—इति पुरोवर्तिनो रजताद्विवेचकत्वात्। नित्यत्व-कार्यत्वाभ्यां धीरूपरजतानिरूपणात् च। अथ—कान्ताकरादावेव रजतं सत्—इति चेत्। न। तस्य अत्र ग्रहणानुपपत्तेः। व्यवहितत्वान्न चक्षुस्तद्गृह्णाति। अथ—दोषात्तद्ग्रहः—इति चेत्। किं दोषमात्रात् उत दोषसहकृतचक्षुषः। नाद्यः। अन्धस्यापि तत्प्रतीतिप्रसङ्गात्। न द्वितीयः। अन्तरालवर्तिनामपि चक्षुषा ग्रहणप्रसङ्गात्। अतो रजतं पुरोवर्तिनि न सत् नाप्यसत्। विरोधादुभयात्मकमपि न। ततोऽनिर्वचनीयमेतदिति सिद्धम्। भ्रमविषयोऽनिर्वचनीय इति दिक्।

एवमेतद्दृष्टान्तेन आकाशादिप्रपञ्चस्यापि अनिर्वचनीयत्वमङ्गीकर्तव्यम्। तथा च अज्ञातसत्वं प्रपञ्चस्य न सिद्धम्। किन्तु। ब्रह्मसत्तैव प्रपञ्चसत्ता इति। तदुक्तम्।

आत्मसत्तैव द्वैतस्य सत्ता नान्या यतस्ततः।
आत्मन्येव जगत्सर्वं दृष्टे दृष्टं श्रुते श्रुतम्॥

इति। यथा रज्जुस्वरूपे दृष्टे तत्र अध्यस्तानां सर्प-दण्डादीनां स्वरूपं दृष्टं भवति तद्वदिदमपि[1] दृष्टं भवति। अत एव विधि-निषेधशास्त्रयोरपि न अनुपपत्तिः। तद्यथा।

इदं सर्वं यदयमात्मा *।

सदेव सौम्येदमग्र आसीत्।

अहं मनुरभवम्।

यत्र[2] त्वस्य सर्वमात्मैवाभूत्

नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम्।

इत्यादि विधिशास्त्रम्। तथा निषेधशास्त्रमपि।

नेह नानास्ति किञ्चन।

इति। तथा—

अथात आदेशो नेति नेति।

न ह्येतस्मादिति।

नेत्यन्यत् परमस्ति†।

१ क. पुस्तके '०दित्यर्थः' इति पाठः।
२ 'यत्र वा' इति ग. पुस्तके पाठः।

* परमात्मा हि सर्वेषामात्मा। तथा त्वचादीनि पूर्वं यान्यचोक्तान्यनुक्तानि सर्वाणि 'यत् अयमात्मा' इति योजना।

† 'अथ' सत्यस्वरूपनिर्देशानन्तरम्। यत् सत्यस्य सत्यं तदेवावशिष्यते यस्मात् 'अतः' तस्मात् सत्यस्य सत्यं स्वरूपं निर्देक्ष्यामः। 'आदेशो' ब्रह्मणो निर्देशः। 'नेति नेति' इत्येवं निर्देशः। सर्वोपाधिविशेषापोहेन यस्मिन् न कश्चिद्विशेषो ऽस्ति नाम-रूपादिः। यद्द्वारेण शब्दप्रवृत्तिर्भवेत्। अतो न निर्देष्टुं शक्यते इदं तदिति।

अतो ऽन्यदार्तम् * ।

न तु तद्द्वितीयमस्ति ।

नैवेह किञ्चन अग्र आसीत् † ।

नासदासीन्नो सदासीत् ।

इत्यादि । भवतीह रज्ज्वां स्रगाद्यध्यासिनं प्रति उपदेशः ।—इदं सर्वं रज्जुः—इति—नेह स्रगादि—इति । तथापि उभयोरपि उपदेशयोर्मध्ये कतरः श्रेयान्? इति चेत् । यद्यपि उभयोरप्युपदेश-योरेकार्थत्वमेव तथापि विधेरस्ति कश्चन अतिशयः । तत्र हि

---

यदा तु ब्रह्मस्वरूपमेव निर्दिदिक्षितं भवति निरस्तसर्वोपाधिविशेषं तदा न शक्यते केनापि प्रकारेण निर्देष्टुम् । तदा अयमेवोपायः । यत् प्राप्तनिर्देशप्रतिषेधद्वारेण नेति नेतीति निर्देशः । 'एतस्मात्' आत्मनः 'नेत्यन्यत्परं' नामधेयं 'नास्ति' इदं च नकारद्वयं विप्साव्याप्त्यर्थम् । यद्यत् प्राप्तं तत्तन्निषिध्यते । तथा च सति अनिर्दिष्टाशङ्का शब्रह्मः परि-हृता भवति ।

* 'सर्वान्तरः कतम आत्मा ?' इति उषस्तेन चाक्रायणेन पृष्टो याज्ञ-वल्क्य आह । 'एष त आत्मा सर्वान्तरो ऽन्यदार्तम्' इति । एष तव आत्मा सर्वैः उक्तैर्विशेषणैः विशिष्टः सर्वान्तरः । अत एतस्मादात्मनो ऽन्यत् आर्तं कार्यं करणात्मकं शरीरं वा विनाशि लिङ्गम् । एतदेवैक-मनार्तमविनाशि कूटस्थमिति ।

† 'इह' संसारमण्डले 'अग्रे' मन आदेरुत्पत्तेः प्राक् । 'किञ्चन' किञ्चिदपि नाम-रूपप्रविभक्तविशेषं 'नैवासीत्' न बभूव । कार्यरूपस्य प्रपञ्चस्य अभाव एवासीदित्यर्थः ।

परिदृश्यमानानां या सत्ता सा हि आत्मैव इत्युक्ते तदन्यत् नास्त्येव—आत्मैव परिपूर्णः—इति ज्ञानं साक्षादाविर्भवति । निषेधे तु अर्थान्निषेधाधिष्ठानतया । अथ कथं तर्हि उभयप्रवृत्तिः ? विधिनेव पुरुषार्थस्य पर्यवसितत्वात्—इति चेत् । न । अधिकारिभेदेन उभयोरप्युपयोगात् । कश्चित् हि संसारदुःखेनात्यन्तमुपहतचेताः तन्निवृत्तिमेव प्रथमतः कामयते । तं प्रति आदौ निषेधवाक्यमेवोपयुक्तम् । विधिवाक्यं तु पश्चात् । यथा सर्पमारोप्य भिया कम्पमानं प्रति—नायं सर्पः—इति निषेध एव आदौ । न तु विधिः । यस्तु अत्यन्तमनुद्विग्नः स—किं अस्य जगतः तत्त्वं ?—इति जिज्ञासते । तं प्रति—'इदं सर्वं यदयमात्मा' इत्येवोत्तरं न्याय्यम् । निषेधस्तु पश्चात् । यथा सर्पमज्ञस्य तत्प्रतीकारज्ञानान्निर्भयः पृच्छति —किमिदं पुरोवर्त्ति ?—इति । तं प्रति—रज्जुः—इत्येव उत्तरम् । न तु निषेधः । तस्मादवस्थाभेदेन उभयोरुपयोगात् न कस्यापि वैयर्थ्यम् । अतो विधि-निषेधाभ्यां परिपूर्णः प्रत्यगात्मैव प्रतिपाद्यते इति सिद्धं जगतः प्रातीतिकत्वं इति दिक् ।

## इत्यवच्छेदवादः ।

वस्तुतस्तु प्रतिबिम्बावच्छेदवादानां व्युत्पादने नात्यन्ताग्रहः । तेषां बालबोधनार्थत्वात् । किन्तु । ब्रह्मैव अनादिमायावशात् जीवभावापन्नः सद्विवेकेन मुच्यते । अतएव उक्तं बृहदारण्यकभाष्ये स्वयमेव भगवत्पादैः ।

"प्रतिबिम्बावच्छेदप्रक्रियां विहाय कौन्तेयस्यैव राधेयत्ववत् अविक्रियस्य नित्य-शुद्ध-बुद्ध-मुक्तस्वभावस्य आत्मनः अनाद्यविद्यावशात्

जीवभावः। जीवभावापन्नस्यैव स्वाविद्यावशात् सर्वप्रपञ्चकल्पकत्वेन ईश्वरोऽपि सह सर्वज्ञत्वादिधर्मैः स्वप्नोपलब्धमन्त्रवत् तेनैव स्वभिन्नः कल्प्यते। पश्चाच्च श्रवणादौ प्रवृत्तस्य-'तत्त्वमसि'-इत्यादि महा-वाक्यार्थबोधात् स्वरूपसाक्षात्कारेण मुक्तिः" ।

इति व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन प्रतिपादितम्। तदु-परिवार्तिककृद्भिरप्युक्तम् ।

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
तथैव चात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥

इति। तथा चैतादृशज्ञानात्पूर्वं जीवेश्वरभेदो जीवपरस्पर-भेदो भासमानो ऽपि नाद्वितीयसाक्षात्कारानन्तरं स्फुरति। सर्व-स्यापि जगतः मिथ्यात्वेन स्फुरणात्। मायागन्धर्वनगरवत्। तदुक्तम् ।

कालोऽनादिस्तत्र मुक्तः शुकादिः
कालो ऽनन्तो मोक्ष्यते तत्र चान्यः ।
इत्येवैषा[१] बन्ध-मोक्षव्यवस्था
संसिद्धः स्यात् आपरात्मप्रबोधात् ॥

इति ।

बालान् प्रतिविवर्तोऽयं ब्रह्मणः सकलं जगत् ।
अविवर्तितमानन्दमास्थिताः कृतिनः सदा* ॥

---

१ 'इत्येवं हि बन्ध०' इति ख० पुस्तके ।

---

* 'ब्रह्मणः' कारणात् विषमसत्ताकतया उत्पद्यमानं 'इदं' सकलं जगत्। दृश्यजातं कार्यम्। 'बालान्' आत्मस्वरूपानभिज्ञान् प्रति 'अयं

इति स्मृतेः इति। तस्मादविद्यावत्पुरुषदृष्ट्यैव अविद्यातत्कार्यम्। न तु विद्वद्दृष्ट्या। तदुक्तं वार्तिककृद्भिः।

अहमेव परं ब्रह्मेत्यस्यार्थस्याप्रबुद्धता।
अविद्येति वयं ब्रूमो येह नास्ति सदात्मनि॥
अविद्यमानैवाविद्या वस्तुतत्त्वविचारणात्।
अविचारेण मूढानां वज्रादपि दृढायते॥
तस्माद्व्युत्पन्नतत्त्वस्य मास्त्वविद्या चिदात्मनि।
अव्युत्पन्नस्य दृष्ट्यैषा न विद्मीत्यनुभूयते॥

इति। श्रुतिश्च विद्वदनुभवे प्रमाणम्।

न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥

इति। अद्वैतमकरन्देऽपि।

आत्माज्ञानमहानिद्रा जृम्भितेऽस्मिन् जगन्मये।
दीर्घस्वप्ने स्फुरन्त्येते स्वर्ग-मोक्षादिविभ्रमाः॥

इति। अयमेव एकजीववादाख्यो मुख्यो वेदान्तसिद्धान्तः। इदं च अनेकजन्मार्जितसुकृतस्य भगवदर्पणेन भगवदनुग्रहफलाद्वैत-श्रद्धाविशिष्टस्य निदिध्यासनसहितश्रवणादिसम्पन्नस्यैव चित्तारूढं भवति। न तु वेदान्तश्रवणमात्रेण निदिध्यासनादिशून्यस्य पाण्डित्य-

---

विवर्तः' कार्यविरुद्धसत्ताकतया उत्पद्यमानं कार्यं हि विवर्तः। 'कृतिनः' आत्मविदः 'अविवर्तितं आनन्दं' ब्रह्मस्वरूपानन्दं 'आस्थिताः' प्राप्ताः। निरुपाधिकस्वरूपानन्दानुभवो ज्ञानिनां सदैव वर्ततेत्यभिप्रायः।

मात्रकामस्य इति रहस्यम् । तदुक्तं अपरोक्षानुभवे स्वयमेव भगवत्पादैः ।

कुशला ब्रह्मवार्तायां वृत्तिहीनास्तु रागिणः ।
ते ऽप्यज्ञानतमं नूनं पुनरायान्ति यान्ति च ॥

इति । एतेन—यदि एकैकस्मिन् कल्पे ऽप्येकैको ऽप्यपव्रजेत् तथापि उच्छिन्नः संसारः स्यात् । अतीतकल्पानामनन्तत्वात् । तथा च प्रवृत्तिरेव 'श्रेयसी' न निवृत्तिः—इत्यादि पूर्वोक्तं प्राभाकरादिवल्गितमप्यपास्तम् । न हि श्रुति-स्मृतिसिद्धस्य मुक्तानुभवसिद्धस्य च मोक्षस्य अनन्तरप्रवृत्तेनासत्तर्केण बाधः कर्तुं शक्यते । श्रुतिप्रमाणापेक्षया अनुमानादिप्रामाण्यानां दुर्बलत्वस्य शास्त्रे प्रसिद्धत्वात् । प्रर्वस्यापि श्रुति-स्मृतीतिहास-पुराणाद्यखिलवाङ्मयस्य मोक्षप्रतिपादने पर्यवसन्नस्य आनर्थक्यं च स्यात् इति दिक् ।

अत एव दृष्टिसृष्टिवादिनामनुमानं च । अज्ञानं तत्प्रयुक्तं दृश्यं प्रातीतिकम् । स्वप्नवत् । यदा यदा विद्यते तदा तदैव साक्षिस्वरूपेण जीवेन प्रकाश्यते । न तु तत्र आवरणम्, तद्भञ्जकमनोवृत्तिर्वा, तत्साधनमिन्द्रियं वा कल्प्यते । गौरवात् ।

ननु—दृष्टिसृष्टिमते कृत्स्नस्य जाग्रत्प्रपञ्चस्य कल्पितत्वाभ्युपगमे कः कल्पकः? किं निरुपाधिरात्मा अविद्योपहितो वा ? नाद्यः । मोक्षे ऽपि साधनान्तरनिरपेक्षस्य सत्त्वेन संसारापत्तिः । न द्वितीयः । अविद्याया अपि कल्पनीयत्वेन तत्कल्पनात् प्राक् कल्पकाभावात्—इति चेत् । नैवम् । पूर्वपूर्वकल्पिताविद्योपहितः उत्तरोत्तराविद्या-

कल्पकः। कल्पककल्पनाप्रवाहस्य अनिदं प्रथमत्वाच्च न अनवस्था-दोषः। अविद्यायाः पूर्वमनादित्वसाधनत्वाच्च।

ननु—अविद्याया अनादित्वाङ्गीकारे शुक्तिरजतादिवत् कल्पितत्वं न युज्यते। अथ आत्मनि सामान्यरूपेण सर्वाध्यासमभवे तु साद्यनादि-विभागानुपपत्तिः—इति चेत्। न। यथा स्वप्ने कल्प्यमानं गोपुरा-दिकं किञ्चित् पूर्वसिद्धत्वेन किञ्चित्तदानीमुत्पद्यमानत्वेन कल्प्यते। एवं जागरे ऽपि विभागोपपत्तेः। अथ वा दृष्टिरेव विश्वसृष्टिः। दृश्यस्य दृष्टिभेदे मानाभावात्। तदुक्तं विष्णुपुराणे।

ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः।
अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः॥
तस्मान्न विज्ञानमृते ऽस्ति किञ्चित्
क्वचित् कदाचित् द्विज वस्तुजातम्।
विज्ञानमेकं निजकर्मभेद-
विभिन्नचित्तैर्बहुधाभ्युपेयम्[१]॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः।
तदा हि को भवान् को ऽहमित्येवं[२] विफलं वचः॥
सित-नीलादिभेदेन यथैकं दृश्यते नभः।
भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक्॥

इति। केचित् एवमप्याहुः। ननु—जीवेश्वरयोः कथमभेदः? सर्व-ज्ञत्वादिविरुद्धधर्माध्यासात्। तथा हि। तत्पदवाच्य ईश्वरः।

१ '०भ्युपेतम्' इति ख० पुस्तके।

२ '०मित्येतद्विफलं' इति ग० पुस्तके।

"यः सर्वज्ञः सर्ववित्"।

इत्यादिश्रुत्या सर्वज्ञत्वेन प्रमितः।

"तद्यथा महामत्स्य उदके"।

इत्यादिना अवस्थात्रयवैशिष्ट्येन प्रमितः जीवः। स च साकल्य-वैकल्येन स्वदेहादिकमपि न जानाति—इति चेत्। न। कालानुप-पत्तिरुद्भाविता दृष्टिसृष्टिवादिनं प्रति देवानां प्रियेण। दृष्टि-सृष्टिवादिमते हि यद्दृश्यते तदेव सर्वम्। तत्कर्तृत्वं च तस्य अस्त्येव इति न सर्वज्ञत्वसर्वकारणानुपपत्तिः।

ननु—अन्येन भुक्तान्नरसादेः साक्षात्कारस्य पुरुषान्तरेऽनुत्पत्त्या कथं तत्?—इति चेत्। न। सिद्धान्ते हि—त्वदीयरसं न जानामि—इति प्रतीत्या ज्ञानविषयत्वेन साक्षिभास्यत्वात् न उक्तानुपपत्तिः। भेदमात्रस्य पूर्वमेव दूषितत्वात् च इति दिक्।

ननु—तथापि श्रुति-स्मृतिसिद्धस्य सृष्टिप्रलयादेः कः कल्पकः?—इति चेत्। न कोऽपि कल्पक इति सिद्धान्तः। ननु तर्हि किमालम्बना—

"आत्मन आकाशः सम्भूतः"।

इति श्रुतिरिति चेत्। उच्यते। निष्प्रपञ्चब्रह्मात्मैक्यावलम्बना इत्यवेहि। अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्तिर्भवतीति तत्प्रतिपत्त्युपायतया श्रुतिषु सृष्टिप्रलयोपन्यासः न तात्पर्येण इति हि भाष्याद्युद्घोषः। किञ्च। जगत्सत्यत्ववादिनामपि ईश्वरे सृष्ट्यादौ प्रवृत्तिरनुपपन्नैव। सा हि लोके सुखे दुःखाभावे तदुभयसाधने वा दृश्यते। ईश्वरस्य च आप्तकामत्वेन तदभावस्य स्वतः सिद्धत्वात्।

आप्तकामस्य का स्पृहा।

इति श्रुतेरित्यादिप्रथममुद्गरे एव विस्तरेण निरूपितत्वादिति दिक्।

ननु—व्यर्थस्तर्हि तात्पर्याभावे वियत्प्राणपादयोः वियदादिसर्गतत्क्रमादिप्रतिपादनश्रुतीनां परस्परविरोधपरिहारप्रयत्नः—इति चेत्। न। न्यायव्युत्पत्त्यर्थं तात्पर्यमभ्युपेत्य तत्प्रवृत्तेः। उक्तं च शास्त्रदर्पणकृद्भिः।

श्रुतीनां सृष्टितात्पर्यं स्वीकृत्येदमिहेरितम्।
ब्रह्मैक्यात्मपरत्वात्तु तासां तन्नैव विद्यते॥

विस्तरस्त्वाकरे इति दिक्।

## इति सङ्क्षेपेण दृष्टिसृष्टिवादः।

---

ननु—भवतु अवच्छेदवादपूर्वकदृष्टिसृष्टिवादः। सृष्टिदृष्टिसम्मतप्रतिबिम्बवादे तु कथं निर्वाहः?। तथा हि। रूपावयवविशिष्टस्य सुखादेः दर्पणाद्युपाध्यन्तर्गतत्वमारोपितं यत्तदेव प्रतिबिम्बशब्देन व्यवह्रियते। तथा च न रूपस्य निरवयवस्य ब्रह्मणः कथं प्रतिबिम्बः—इति चेत्। न। का अत्रानुपपत्तिः। विभ्रमहेतूनां विचित्रत्वात् जपाकुसुमरूपस्य नीरूपस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात्। मठाद्यन्तर्गतपुरुषोच्चार्यमाणशब्दस्यापि उपरिभागावच्छेदेन प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्। अथ इन्द्रियग्राह्यस्यैवायं

प्रतिबिम्बः—इति चेत् । न । इन्द्रियाग्राह्यस्यापि साक्षिप्रत्यक्षस्य गगनस्य जलादौ प्रतिबिम्बदर्शनात् । अन्यथा जानुमात्रे ऽप्युदके अतिगम्भीरप्रतीतिर्न स्यात् ।

ननु—नभसः चाक्षुषत्वमेव भट्टैः स्वीकृतम् । तथा हि । ऊर्ध्वं व्यापृतेन चक्षुषा यावति नभोभागे संयोगः तावानेव स गृह्णाति—इति चेत् । न । मानाभावात् । रूपवद्द्रव्यस्यैव चक्षुषा ग्रहणात् । तथा चोर्ध्वं व्यापृतेन चक्षुषा यावानालोकभागो गृह्यते तदवच्छिन्नमाकाशं च साक्षिणा गृह्यत एव । न च—नभसः सुखादिवत् साक्षिमात्रभास्यत्वस्वीकारे अन्धस्यापि तत्साक्षात्कारापत्तिः—इति वाच्यम् । अन्धस्यापि हि त्वचा गृह्यमाणे घटादौ तदवच्छिन्नं नभः साक्षिणा गृह्यत एव । यदि च तेन तमः गृह्यते तदा तदवच्छिन्नं नभोऽपि गृह्यत एव । अन्यथा शरीरस्य अन्तर्बहिराकाशप्रतीतिर्न स्यात् । यदि च तमाद्यवच्छिन्नं नभः न प्रतीयते इत्यनुभवः तदा घटाकारेन्द्रियजन्यवृत्त्यभिव्यक्तसाक्षिभास्यमेवास्तु । किमाग्रहेण ?।

ननु—आच्छादितमुखे[१] घटादौ गृह्यमाणे तदन्तर्वर्ति आकाशमपि साक्षिणा गृह्यतां—इति चेत् । न । अन्तर्भागस्य इन्द्रियासंयुक्तत्वेन तत्र साक्षिणः अनभिव्यक्ततया तदवच्छिन्नाकाशस्य अभिव्यक्तसाक्षिसम्बन्धाभावात् । अथ—नभसः चाक्षुषत्वमावश्यकम् । चक्षुषा जलाभिहतेन नभोगृहीत्वा तत्र जलान्तर्गतत्वमारोप्यते । अन्यथा चक्षुःसंयोगाद्यपेक्षा न स्यात्—इति चेत् । न। प्रतिबिम्बस्य साक्षिभास्यत्वे ऽप्यधिष्ठानग्रहणार्थं चक्षुषो ऽपेक्षणात् । एतेन नीलं

---

१ 'आच्छादितमुखस्य घटस्य गृह्यमाणत्वे' इति ख० पुस्तके

नभः—इति विभ्रमेऽपि चक्षुरन्वय-व्यतिरेकौ व्याख्यातौ। तत्रापि सालोकाकाशस्य अधिष्ठानत्वात्। तस्मात् चाक्षुषप्रतिबिम्बमेव[1] रूपसापेक्षं नान्यत् इत्यवधेयमिति दिक्।

ननु—तथापि आत्मनः प्रतिबिम्बे किं मानं?—इति चेत्। न।

मायाभासेन जीवेशौ करोति।

इत्यादिश्रुतीनां पूर्वमेव दर्शितत्वात्। अथ—कथमन्तःकरण-प्रतिबिम्बस्य चाभासस्य चावच्छिन्नस्य वा अविद्योपहितत्वेन असङ्गो-दासीनस्य ज्ञानस्वरूपस्य निर्द्धर्मकस्य वा जीवस्य कर्तृत्व-भोक्तृत्वादि-मान-मेयादिप्रतिकर्मव्यवस्था?—इति चेत्। उच्यते। एवमत्र प्रक्रिया। शरीरमध्ये सर्वशरीरव्यापकं वक्ष्यमाणपञ्चीकृतभूतारब्ध-मन्तःकरणद्रव्यं सत्त्वप्राधान्येन स्वच्छं नेत्रादिद्वारा निर्गत्य योग्यान् घटादिविषयान् व्याप्य तत्तदाकारं भवति। द्रुतताम्रं यथा मूषा-पात्रादौ क्षिप्तं सत् पश्चाद्वाय्वादिसंयोगेन तदाकारतां गृह्णाति। तथ अन्तःकरणमपि घटादिसन्निकृष्टेन्द्रियसंयुक्तं सत् आकाराख्य-सम्बन्धरूपतां प्राप्नोति। न च—तस्य कथमतिशीघ्रमेव सूर्यमण्डला-दिसंयोगः—इति वाच्यम्। सौरालोकवत् झटित्येव लाघवातिशयेन वेगातिशयात् सङ्कोच-विकासशालित्वाङ्गीकारात्। स चान्तःकरण-पदार्थः सावयवत्वात् सामग्रीवशात् नेत्रादिद्वारा निर्गत्य देहाभ्यन्तरे घटादौ च व्याप्य मध्ये ऽपि दण्डायमानः सन् तिष्ठति। तत्र देहावच्छिन्नान्तःकरणभागो अहङ्काराख्यः कर्ता इत्युच्यते। तत्प्र-तिबिम्बितं तदवच्छिन्नं वा चैतन्यं प्रमाता इत्युच्यते। कर्तृत्वं तु

---

१ 'चाक्षुषप्रतिबिम्बस्यैव रूपसापेक्षत्वम्' इति क० ग० पुस्तकयोः।

क्रियानुकूलेन्द्रियसंयोगादिव्यापारवत्त्वम्। प्रमातृत्वं तु शरीरसंसृष्टचित्स्वरूपत्वम्। एवं देहघटादिमध्यवर्तिदण्डायमानः तद्भागो वृत्तिज्ञानाख्या क्रिया इत्युच्यते। तत्र प्रतिबिम्बितं तदवच्छिन्नं वा चैतन्यं प्रमाणमुच्यते। एवं विषयव्यापकः तद्भागः विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्तियोग्यत्वमित्युच्यते। तत्र प्रतिबिम्बितं पूर्ववत् प्रमितिरित्युच्यते। प्रमेयं तु विषयगतमज्ञातब्रह्मचैतन्यमेव। जड़े आवरणानङ्गीकारात्। तदुक्तम्।

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमं नाश्रयो भवति नापि गोचरः॥

बहु निगद्य किमत्र वदाम्यहम्
शृणुत सङ्ग्रहमद्वयशासने।
सकल[1]वाङ्मनसातिगता चितिः
सकलवाङ्मनसो व्यवहारभाक्[2]॥

इति सङ्क्षेपशारीरके। तदेव ब्रह्मचैतन्यं अज्ञातं प्रमेयं ज्ञातं सत् फलम्। तच्च भग्नावरणचित्सम्बन्ध एव। तदेतदाकारत्रयं भवति। अहं जानामि घटं—अत्र भासकचैतन्यस्यैकत्वेऽपि घटप्रति वृत्त्यपेक्षत्वात् प्रमातृता। अन्तःकरणतद्वृत्तीप्रति तु वृत्त्यनपेक्षत्वेन साक्षिता इति। तथा चैकस्मिन्नन्तःकरणपरिणामे जाते घटावच्छिन्नचैतन्यमन्तःकरणावच्छिन्नचैतन्यं च एकलोलीभावापन्नं भवति। ततो घटावच्छिन्नचैतन्यं प्रमात्रभेदात् स्वाज्ञानं

---

१ 'निखिल' इति क॰ पुस्तके।
२ 'भुक्' इति क॰ पुस्तके।

नाशयदपरोक्षं भवति । तत्र कल्पितस्य अवच्छेदकत्वेन घटस्यापि अपरोक्षत्वव्यवहारो भवति । अपरोक्षत्वं तु अज्ञानविषयताशून्यविषयकत्वम् । विषयता च चिच्चैत्यसम्बन्धः । नत्वतिरिक्ता । मानाभावात् । सम्बन्धस्य वास्तवत्वासम्भवे ऽपि आध्यात्मिकत्वेनापि उपपत्तिरिति विवेकः ।

अत्र द्विविधमापरोक्ष्यम्[१] । अर्थापरोक्षं ज्ञानापरोक्षं च । तत्र आद्यं । तत्तदर्थस्य तत्तद्व्यवहारानुकूलचैतन्याभेदः । द्वितीयं तु । तत्तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभेदः । न च—अपरोक्षार्थविषयकत्वं ज्ञानापरोक्षं—इति वाच्यम् । स्वरूपसुखापरोक्षरूपस्वरूपज्ञाने ऽव्याप्तिप्रसङ्गात् । स्वव्यवहारे स्वातिरिक्तसंविद्विषयत्वस्वीकारे स्वप्रकाशलक्षणविरोधाच्च । अत एव सुखादिप्रकाशरूपे साक्षिणि स्वरूपसुखप्रकाशरूपे चैतन्ये च अपरोक्षमिति ।

ननु—चक्षुरादीनामपि प्रमाणस्य सम्भवात् । दर्शनान्तरे स्वीकाराच्च कथं वृत्त्यवच्छिन्नचैतन्यस्य प्रमाणत्वं ? इति—चेत् । सत्यम् । वृत्तिज्ञानस्य चक्षुरादिमिश्रितत्वेन तत्प्रमाणत्वोक्त्या चक्षुरादेरपि तत्सम्भवात् । प्रमासामान्यं प्रति करणत्वस्य प्रकृते वाच्यत्वात् । मनसः प्रमासान्यकरणत्वस्य दर्शनान्तरेष्वप्युपगतत्वाच्च । अत्र हि मनसो अचेतनत्वेन स्वस्वेतरसकलकारकप्रयोक्तृत्वरूपस्वातन्त्र्यात्मककर्तृत्वासम्भवात् मनोऽवच्छिन्नचितः प्रमातृत्वमुक्तम् । जानामि घटं—जानामि पटं—इत्यनुगताकारधीषु चिद्रूपस्यैकज्ञानस्य विष-

१ 'द्विविधमपरोक्षम्' इति ग० पुस्तके ।

यत्वात् । सुख-दुःखादौ त्वावरणाभावेन वृत्त्यस्वीकारे ऽपि तदवच्छिन्नचित एव ज्ञानत्वाच्च । विषयसंसृष्टवृत्तिभागस्य ज्ञानत्वाभावेन प्रमितित्वस्य असम्भवात्तदवच्छिन्नचितः । तदुक्तम् ।

"अत्र च यस्मिन् पक्षे अन्तःकरणतत्संस्कारावच्छिन्नो जीवः, यस्मिंश्च पक्षे सर्वगतो ऽसङ्गो ऽविद्याप्रतिबिम्बः अविद्योपहितो वा जीवः ; तत्र उभयत्रापि प्रमातृचैतन्योपरागार्था विषयगतब्रह्मचैतन्यावरणभङ्गार्था च अन्तःकरणवृत्तिरिति । अत्र पक्षद्वये ऽपि ब्रह्मण एव उपादानत्वात् । यस्मिंश्च पक्षे अविद्यावच्छिन्नः सर्वगतो[1] जीव आवृतः, तस्मिन् पक्षे जीवस्यैव जगदुपादानत्वादावरणभङ्गार्था वृत्तिरिति विवेकः" ।

ननु—चिदुपरागार्था वृत्तिरिति पक्षे साक्षिप्रतिबिम्बाश्रयान्तःकरणसम्बन्धवतां ईशप्रसाद-कोपरूपधर्माधर्मादीनां ब्रह्मणश्च वृत्तिं विनैव सर्वदा भानं स्यात् । न च—एतादृशधर्माधर्मयोः कथमन्तःकरणावच्छेदेन सम्बन्धः—इति वाच्यम् । ईश्वरोपाधिमायापरिणामरूपत्वेन तत्कारणयागादिक्रियास्वरूपस्य अन्तःकरणावच्छेदेनैव सिद्धान्ते स्वीकारात् । किञ्च । तत्कार्यभूतसुख-दुःखादीनां शुक्ति-रजतादीनां च वृत्तिं विनैव सर्वदा भानं स्यात्—इति चेत् । न । साक्षिचैतन्यस्य अन्तःकरणावच्छेदेन तत्तत्प्रतिबिम्बाश्रयत्वाभावेन तत्तदाकारत्वाभावात् । ननु—घटाद्याकारायामिव ब्रह्माद्याकारायामपि श्रवणमननपूर्वकालीनायामपि परोक्षवृत्तौ साक्षिणः प्रतिबिम्बसम्भवात् । तथा

---

१ 'सर्वज्ञो जीव' इति क० पुस्तके । ख० पुस्तके इदं द्वयमपि नास्ति । केवलं 'अविद्यावच्छिन्नो जीव एव' इति पाठः ।

घटादाविव ब्रह्मण्यपि उक्तवृत्तिरूपप्रतिबिम्बाश्रयावच्छेदकत्वसम्भवात् कथं तस्य तत्तदाकारत्वाभावः? एवमविद्यावृत्त्यभावे ऽपि शुक्ति-वृत्त्या रजतादौ इदमाकारं वृत्तिसामान्याभावेऽपि सुख-दुःखादिवत् धर्माधर्मादौ तत्प्रतिबिम्बसम्भवात् कथं तत्तदाकारत्वाभावः?—इति चेत् । न । चरमवृत्त्यभावकालीनपरोक्षवृत्तिविषये ऽपि स्वच्छे ब्रह्मचैतन्ये आवरणात् । तेन स्वच्छे ऽप्यावृते वक्ष्यमाणमहावाक्यजन्यप्रमाणवृत्त्या तदाकारता । तदाकारता तु साक्षिणो ब्रह्मविषयकाज्ञानशून्यता । एवं प्रातीतिकत्वादज्ञानविषयतानवच्छेदकत्वेन अनावृते ऽप्यस्वच्छे कल्पितशुक्तिरजतादौ अविद्यावृत्त्या तदाकारता । धर्माधर्मादौ तु अस्वच्छत्वेन ईशं प्रति अनावृतत्वे ऽपि जीवं प्रति आवृतत्वादेव भानाप्रसङ्गः । अन्यथा न्यायमते ऽप्यात्मधर्मत्वात् प्रत्यक्षत्वं दुर्वारम् । अनावृते स्वच्छमनःपरिणामत्वेन स्वच्छे सुख-दुःखादौ तु स्वत इति नान्तःकरणसम्बन्धमात्रेण सर्वत्र भानप्रसङ्गः ।

ननु—कल्पितशुक्तिरजतादेः तदाकाराविद्यावृत्तेश्च किं प्रमाणं किं च उपादानं?—इति चेत् । उच्यते । अनुभव एव प्रमाणम् । तथा हि विवरणानुसारिणः ।

"यथा इदमंशावच्छिन्न*चैतन्यस्था अविद्या रजताकारेण परिणमते, एवमिदमंशविषयवृत्तिज्ञानावच्छिन्नचैतन्यस्था अविद्या रजतज्ञानाकारेण परिणमते । न तु इदमंशज्ञानवद्रजतज्ञान-

* 'इदमंशः' इदम्—पुरोवर्ति अधिष्ठानतया वर्तमानम् तस्य अंशः इदमंशः भ्रमाधिष्ठानस्य शुक्तिकादेः खण्डमित्यर्थः ।

मनध्यस्तमस्ति। तथा च। यथा रजतस्य इदमंशावच्छिन्न-चैतन्यरूपाधिष्ठानगतेदन्त्वसंसर्गभानं तथा रजतज्ञानस्यापि इदं वृत्त्यवच्छिन्नचैतन्यरूपाधिष्ठानगतेदंविषयत्वसंसर्गस्य भानोपपत्तेर्न तस्याप्यतिरिक्तमिदंविषयत्वं कल्प्यते। मानाभावात् गौर-वाच्च। ननु—रजतवदध्यस्तस्य रजते इदन्त्वसंसर्गस्य रजत-ज्ञानविषयत्वेन तत्प्रतियोगिनः इदन्त्वस्यापि भानमवश्यमिति अतिप्रसङ्गः—इति चेत्। न। रजतज्ञानतादात्म्याश्रयस्य इदं-वृत्तेः इदंवृत्त्यवच्छिन्नचैतन्यनिष्ठइदन्त्वप्रतियोगिविषयत्वम्। रज-तज्ञानस्य तु संसर्गमात्रविषयत्वम्। तथा च ज्ञानद्वयतादा-त्म्यान्नातिप्रसङ्गः। ननु—अधिष्ठानाध्यस्तयोरेकस्मिन् ज्ञाने भानविषयस्य सम्भावना भाष्यविवरणे निरूपणादेकवृत्तिविषय-त्वमावश्यकम्। कथं ज्ञानद्वयतादात्म्यम्?—इति चेत्। नैष दोषः। वृत्तिभेदे ऽपि इदमाकारवृत्त्यभिव्यक्त्या एकस्मिन् साक्षिणि तयोर्भानसम्भवात्"—

इत्याहुरिति दिक्। नरसिंहाश्रमाणां मते तु।

"अधिष्ठानसामान्यज्ञानं भ्रमकारणमिति इदमाकारां वृत्तिं स्वीकृत्य तदभिव्यक्तेनैव साक्षिणा तदध्यस्तभ्रमस्य अवभाससम्भ-वात् तद्भासकसाक्ष्यभिव्यञ्जकतया तयैव इदंवृत्त्या अध्यस्तविष-यसम्भवात् अध्यस्तरजताद्याकारावृत्तिर्व्यर्था इति सिद्धान्तः"।

इति। सङ्क्षेपशारीरकाचार्यैस्तु—ज्ञानद्वयपक्षमवलम्ब्य इदमि-त्येकावृत्तिरध्यासकारणभूता। इदं रजतमिति द्वितीयावृत्तिरध्य-स्तरजतादिविषया। न तु इदमंशभानं विना अध्यस्तमात्रगोचरा

सा । इदं रजतं जानामि—इति तस्या इदमर्थतादात्म्यापन्न-रजतविषयत्वानुभवादावश्यकत्वमिति स्वीकृतम् । तदुक्तम् ।

इदमर्थवस्त्वपि भवेद्रजते
परिकल्पितं रजतवस्त्विदमि ।
रजतभ्रमे ऽस्य च परिस्फुरणात्
न यदि स्फुरेन्न हि शुक्तिरिव ॥

इति सङ्क्षेपः । अनिर्वचनीयरजतसिद्धिस्तु पूर्वमेव दर्शिता तत्रानुसन्धेया[1] । ननु—तर्हि एकेनैव घटादिज्ञानेन आवरणभङ्गे सति सद्योमुक्तिप्रसङ्गः । अज्ञानस्यैकत्वात् । तथा च श्रुतिः ।

"अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजा[2] जनयन्तीं स्वरूपाः । अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजो-ऽन्यः*॥ इति ।

---

१ 'दर्शितेत्यनुसन्धेया' इति ग० पुस्तके ।

२ 'बह्वीं प्रजां सृजमानां सरूपाम्' इति ग० पुस्तके ।

---

* अत्र हि मन्त्रे लोहित-शुक्ल-कृष्णशब्दैः सत्व-रजस्तमांसि गृह्यन्ते । लोहितं रजः रञ्जनात्मकत्वात् । शुक्लं सत्वं प्रकाशात्मकत्वात् । कृष्णं तमः आवरणात्मकत्वात् । तेषां साम्यावस्था अवयवधर्मैर्व्यपदिश्यते । 'लोहित-शुक्लकृष्णेति' । न जायत इति च अजा स्यात् ।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" ।

इत्यभ्युपगमात् । ननु—अजाशब्दः छागायां रूढः । बाढम् । सा तु रूढिः इह न आश्रयितुं शक्या । विद्याप्रकरणत्वात् । सा च 'बह्वीः' 'प्रजाः' त्रैगुण्यान्विताः जनयति । तां प्रकृतिं 'अजो ह्येकः' पुरुषः 'जुष-माणः' सेवमानो वा 'अनुशेते' तामेव अविद्यां आत्मत्वेनोपगम्य—सुखी दुःखी मूढो ऽहं—इति अविवेकितया संसरति । 'अन्यः' पुनः 'अजः' पुरुषः उत्पन्नविवेकज्ञानो विरक्तो जहाति । 'एनाम्' प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति मुच्यते इत्यर्थः ।

इन्द्रो मायाभिः पुरुरूप ईयते * ।

इत्यादिश्रुत्या अज्ञानस्य नानात्वश्रवणेन विरोधः—इति वाच्यम् । नानाऽज्ञानपक्षेऽपि एकस्य जीवस्य एकाऽज्ञानोपाधित्वात्—इति चेत् । न । उत्तेजकेन मणेरिव वृत्त्यावरणाभिभवाङ्गीकारात् । तथा च प्रमाणजन्यान्तःकरणवृत्त्यभावसहकृतमज्ञानं सति भात्यपि वस्तुनि—नास्ति, न भाति—इति प्रतीतिजननसमर्थमावरणमित्युच्यते । न च—एवं सति ब्रह्मज्ञानेनापि अविद्याऽनिवृत्तेरनिर्मोक्षप्रसङ्ग—इति वाच्यम् । वक्ष्यमाणतत्त्वमस्यादिमहावाक्यार्थस्वाश्रयविषयकज्ञानेनैव मूलाज्ञान-तत्कार्यनिवृत्त्यभ्युपगमात् । महावाक्यार्थज्ञानस्यैव अबाधिताज्ञान-विषयतया प्रमात्वात् । प्रत्यक्षादीनां तु बाधितविषयतया भ्रमत्वेऽपि व्यवहारसामर्थ्येन व्यावहारिकप्रामाण्याङ्गीकारात् । व्यावहारिकत्वं तु ब्रह्मज्ञानेतराबाध्यत्वे सति ब्रह्मज्ञानबाध्यत्वम् । ब्रह्मज्ञानेतराबाध्यत्वे सति ब्रह्मज्ञानाबाध्यत्वं पारमार्थिकत्वम् । ब्रह्मज्ञानेतर-बाध्यत्वं तु प्रातिभासिकमिति विवेकः । अथ वा मूलाज्ञानस्यैव अवस्थाज्ञानानि घटादिविषयावरणानि अज्ञानस्य ज्ञानप्रागभाव-स्थानीयत्वेन—यावन्ति ज्ञानानि तावन्त्यज्ञानानि—इति अभ्युपगमात् । एकेन ज्ञानेन एकाज्ञानस्यैव नाशात् घटादिज्ञानेन आवरणनाशेऽपि न काचित् क्षतिः इति ।

न च—पूर्वोक्तश्रुतिद्वयविरोध—इति वाच्यम् । श्रुतिद्वयस्य मूलाज्ञानपरत्वात् ।

---

* 'इन्द्रः' परमेश्वरो 'मायाभिः' प्रज्ञाभिः नाम-रूपभूततत्कृतमिथ्याभिमानैर्वा । नतु परमार्थतः । 'पुरुरूपो' बहुरूपः 'ईयते' गम्यते । एकरूप एव प्रज्ञानघनः सन् अविद्याप्रज्ञाभिः बहुरूप इव भासते इति तात्पर्यम् ।

ननु—नानापल्लवाज्ञानपक्षे एकया वृत्त्या सर्वेषामज्ञानानां नाशः उत एकस्य? आद्ये। पुनः शुक्तेः कदापि अप्रकाशो न स्यात्। अन्त्ये। वृत्तिकालेऽपि प्रकाशो न स्यात्। एकस्य आवरणस्य नाशेऽपि आवरणान्तरस्य विद्यमानत्वात्—इति चेत्। न। एकया वृत्त्या एकाज्ञाननाशेऽपि तयैवावरणान्तराणां प्रतिरुद्धत्वात् यावत्सा तिष्ठति तावत्प्रकाशः। तस्यामपगतायां तु पुनरप्रकाशस्य उपपद्यते इति विवेकः।

ननु—अस्तु प्रत्यक्षस्थले एवं व्यवहारः। तथापि अनुमानादीनां आवरणं निवर्तते न वा? आद्ये साक्षात्कारिभ्रमस्यापि शङ्खपीतत्वादेः श्वेतत्वाद्यनुमानादीनां निवृत्तिप्रसङ्गः। अधिष्ठानाज्ञानोपादानकत्वेन भ्रमस्य तन्निवृत्तौ निवृत्तेः। यौक्तिकज्ञानेन च ब्रह्मण्यविद्यानिवृत्त्या तत्साक्षात्कारार्थं श्रवणाद्यपेक्षा न स्यात्। द्वितीये वह्न्यादिव्यवहारो न स्यात्। प्रतिबन्धकस्य विद्यमानत्वात्। उच्यते। द्विविधमावरणम्। एकमसत्त्वापादकम्। अपरमनापादकम्। तत्राद्यं। अन्तःकरणावच्छिन्नचैतन्यनिष्ठम्। द्वितीयं तु। विषयावच्छिन्नचैतन्यनिष्ठम्। घटमहं न जानामि—इति उभयावच्छेदेनानुभवात्। तत्राद्यं। परोक्षापरोक्षप्रमासाधारणेन निवर्तते। अनुमितेऽपि वह्न्यादौ—नास्ति—इति प्रतीत्यनुदयात्। द्वितीयं तु साक्षात्कारेणैव निवर्तते यदाश्रयं यदाकारं ज्ञानम्। तदाश्रयं तदाकारमज्ञानं। नाशयति इति नियमात्। परोक्षज्ञानस्य च विषयेन्द्रियसन्निकर्षाजन्यत्वेन अन्तःकरणमात्रनिष्ठत्वात्। अपरोक्षज्ञानस्यैव विषयेन्द्रियसन्निकर्षजन्यत्वेन विषयान्तःकरणोभयनिष्ठत्वात्। तेन अनुमानादौ असत्त्वावरणनाशात् व्यवहारः। अभावावरणा-

निवृत्त्या च सोपाधिकसाक्षात्कारिभ्रमस्य अनिवृत्तिः इति । तस्मा-न्निर्धर्मकस्यापि जीवात्मनो ऽविद्यान्तःकरणतादात्म्याध्यासात् तद्धर्म-कर्तृत्व-भोक्तृत्वाद्यध्यासः उपपद्यते ।

अध्यासस्तु । सत्ये वस्तुनि मिथ्यावस्तुसम्भेदावभासः । अथ वा परत्र* परावभासो ऽध्यासः । सो ऽपि द्विविधः । अनादि-सादि-भेदात् । तत्र अविद्याध्यासस्त्वेक एव अनादिः† । द्वितीयस्तु पूर्व-पूर्वाध्यासमूल एव । अयमहङ्काराद्यध्यासः बीजाङ्कुरवदनादिः । न च—प्रथमस्य आत्माश्रयादिदोषशङ्का । अनादित्वेनैव तन्निरासात् । न च—उत्पत्तौ आत्माश्रयाद्यभावे ऽपि ज्ञप्तौ सम्भवात् इति—वाच्यम् । स्वप्रकाशात्मन एव तज्ज्ञानात् ।

ननु—भवन्मते अनिर्वचनीयख्यात्यभ्युपगमात् ये कर्तृत्वादयो-न्तःकरणधर्मा आत्मनि अध्यस्यन्ते, ते ऽनिर्वचनीयाः तत्र उत्पद्यन्ते—इति स्वीकर्तव्यम् । तथा च व्यावहारिक-प्रातिभासिकभेदेन कर्तृ-त्वादीनां द्विधा प्रतिभासः स्यात्—इति चेत् । मैवम् । तादात्म्या-ध्यासेन अविवेकात् । अथ वा सर्वधर्मविशिष्टस्यैव अन्तःकरणस्य आत्मनि अध्यस्तत्वेन तदभावात् । तस्माद्वस्तुतो निर्धर्मकस्यापि आत्मनो ऽविद्यान्तःकरणतादात्म्याध्यासात् मान-मेयादिप्रतिकर्म-व्यवस्थासिद्धिः इति दिक् ।

## इति मानमेयादि-प्रतिकर्मव्यवस्था ।

---

* 'परत्र' रजतभिन्ने इदमि । 'परस्य' इदं भिन्नस्य रजतस्य अवभास इत्यर्थः ।

† 'अविद्याध्यासो' नाम चिन्निष्ठाविद्यासम्बन्धः । 'एकः' अहङ्कारा-नवच्छिन्नः 'अनादिः' अनुत्पन्नः ।

ननु—भवत्वेवं प्रतिकर्मव्यवस्था तथापि कथं तत्कारणीभूता जाग्रदाद्यवस्था तदभिमानिविश्वाद्यवस्था च?—इति चेत्। शृणु। कार्योपाधिगुणत्रयभेदात् पूर्वोक्तकारणोपाधिगुणत्रयभेदेन ईशत्रैविध्यवत्। तथाहि।

तद्यथा महामत्स्योभे कूले ऽनुसञ्चरति।
एवमेवायं पुरुषः एतावन्तावनुसञ्चरति।
स्वप्नान्तं च बुद्धान्तं च* ॥

इत्याद्याः।

तद्यथा ऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा
विपरिपत्य श्रान्तः संहत्य पक्षौ सँल्लयायैव ध्रियते
एवमेवायं पुरुष एतस्मा अन्ताय
धावति। यत्र सुप्तो न कञ्चन कामं कामयते।
न कञ्चन स्वप्नं पश्यति† ।

इत्याद्याः श्रुतयो ऽत्र प्रमाणम्। ननु—"तद्यथा महामत्स्य०" इत्यादिवाक्येन अवस्थात्रयेषु एकस्यैवानुगतप्रतीत्या तदभिमानि-

---

* 'कूले' नद्यास्तीरे। अन्तौ कर्मफलपरिपाकौ। 'अनुसञ्चरति' अनुगच्छति। 'स्वप्नान्तं' स्वप्नभोगरूपमन्तम्। 'बुद्धान्तम्' जाग्रद्भोगरूपमन्तं। च अनुसञ्चरति इत्यर्थः।

† 'सुपर्णः' शीघ्रगतिः। 'श्येनः' वा। 'विपरिपत्य' विशेषेण नानादेशेषु पतित्वा। 'श्रान्तीभूय' 'पक्षौ' 'संहत्य' संयुक्तीकृत्य। 'लयाय' नीडाय। 'ध्रियते' नीडप्राप्त्यर्थं यतते। 'अन्ताय' उपरतावस्थारूपमान्तः प्राप्त्यर्थं। 'धावति' यतते तथैवायं यततेति योजना।

विश्व-तैजसादिस्वीकारस्य सिद्धान्ते व्यर्थत्वात् मानाभावाच्च—इति चेत् । सत्यम् । जाग्रदाद्यवस्थासाक्षित्वेन एकरूपप्रतीतावपि कल्पितावस्थाभेदेन अवस्थाभिमानिविश्वादिभेदस्य श्रुति-युक्त्यनुभवसिद्धत्वात् । तथा च श्रुतयः ।

जागरितस्थानो बहिः प्रज्ञः सप्ताङ्गः
एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः ।

[माण्डूक्योपनिषत् ३]

स्वप्नस्थानो ऽन्तः प्रज्ञः सप्ताङ्ग
एकोनविंशतिमुखः प्रविविक्तभुक् तैजसः ।

[माण्डूक्योपनिषत् ४]

सुषुप्तस्थान एकीभूतः प्रज्ञानघन
एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञः ।

[माण्डूक्योपनिषत् ५]

गौडपादीयकारिकाः ।

बहिः प्रज्ञो विभुर्विश्वो ह्यन्तः प्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥

[गौ. का. १]

विश्वो हि स्थूलभुक् नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक् तथा प्राज्ञः त्रिधा भोगं निबोधत ॥

[गौ. का. ३]

इत्यादि । एवमत्र प्रक्रिया । तत्र अविद्यान्तःकरणस्थूलशरीरा-

वच्छिन्नो जाग्रदवस्थाभिमानी विश्वः। स च देहेन्द्रियादिषु प्रवेशा-द्व्यापनाद्वा विश्व इत्युच्यते।

"विश् प्रवेशने। विष्लृ व्याप्तौ"।

इति स्मरणात्।

स इह प्रविष्ट आनखाग्रेभ्यः।

तत्सृष्ट्वा तदेवानुप्राविशत्।

सत् च त्यत् च अभवत्।

इति श्रुतिभ्यश्च। जाग्रदवस्था तु इन्द्रियवृत्तिकालीनार्थोपलम्भः। अत्र च वक्ष्यमाणं मूर्तं विराडाख्यं भोग्यम्। प्रत्यक्षादिप्रमाण-षट्केन व्यवह्रियमाणत्वात् व्यावहारिकं विश्वाख्येन जीवेन उप-भुज्यते। न च—शुक्तिरजतादिज्ञानानां प्रातिभासिकत्वेन कथं जागरणत्वं?—इति वाच्यम्। तद्विषयस्य अव्यावहारिकत्वे ऽपि इन्द्रियवृत्तिकालीनत्वाज्जागरणत्वोपपत्तिः।

## इति सङ्क्षेपेण जाग्रदवस्था।

---

एवं जाग्रद्भोगजनककर्मक्षये सति स्वाप्नभोगजनककर्मोदये च सति निद्राख्यया तामस्या वृत्त्या स्थूलशरीराभिमाने दूरीकृते सर्वेन्द्रियेषु देवतानुग्रहाभावात् निर्व्यापारतया लीनेषु सत्सु विश्वो ऽपि लीन इत्युच्यते। तत्र स एव उपाधिद्वयोपहितः स्वप्नावस्थाभि-मानी तैजस इत्युच्यते। आदित्यादिज्योतिरन्तरेणापि भासक-त्वात्। स एव स्वाप्निकपदार्थभोक्ता। स्वप्नावस्था त्विन्द्रियवृत्त्यभावका-

लीनार्थोपलम्भः। अथ—स्वाप्निकपदार्थानां किं उपादानमविद्या? उत मनोगतवासना?—इति चेत्। उच्यते। अविद्यैव स्वाश्रयविषया शुक्तिरजतादिवत् स्वाप्नार्थाकारेण परिणमते। ज्ञायते च अविद्यावृत्त्यैव इत्येके। मन एव गज-तुरगाद्याकारेण परिणमते, अविद्यावृत्त्या च ज्ञायते इत्यपरे। अत्र द्वितीयस्य गौरवेण अविद्याया एव अदृष्टसहकारेण सर्वत्र अर्थाध्यास-ज्ञानाध्यासोपादानत्वं कल्प्यते। लाघवात्।

अथ—तर्हि[1] शास्त्रे—मनःपरिणामो ऽयं स्वप्न—इति व्यपदेशो व्यर्थ—इति चेत्। न। मनोगतवासनानिमित्तत्वेन तथात्वोपपत्तेः। ननु—तदा मनसो दृश्याकारपरिणामानभ्युपगमे द्रष्टृत्वसम्भवेन आत्मनः तदानीं स्वयं ज्योतिष्ट्वासिद्धिः—इति चेत्। न। बहिरिन्द्रियवृत्त्यभावेन तदानीं मनसो ऽग्राहकत्वात्। सवृत्तिकान्तःकरणावच्छिन्नचैतन्यस्यैव प्रमातृत्वनियमात्। तथा च तदानीं अन्तःकरणसत्त्वे ऽपि प्रमात्रभावात् द्रष्टृत्वानुपपत्तेः। अथ किमधिष्ठानं स्वप्नभ्रमस्य? इति चेत्। मनोवच्छिन्नं जीवचैतन्यमित्येके। अपरे तु ब्रह्मचैतन्यमेव मूलाज्ञानावच्छिन्नं वदन्ति। न च—अत्र परस्परविरुद्धं किं ग्राह्यं?—इति चेत्। मतभेदेनोभयमपि।

तथा हि। जाग्रद्बोधेन स्वप्नभ्रमनिवृत्तिदर्शनात्। अधिष्ठानज्ञानादेव च भ्रमनिवृत्तेः। ब्रह्मचैतन्यस्य च अधिष्ठानत्वे संसारदशायां तज्ज्ञानासम्भवात्। ज्ञाने वा सर्वद्वैतनिवृत्तिप्रसङ्गात्। किं च।

---

१ 'अथास्तु शास्त्रे' इति ख० पुस्तके।

न तत्र रथा न रथयोगाः न पन्थानो भवन्ति।
अथ तत्र रथान् रथयोगान् पथः सृजति* ॥

[बृ. अ. ब्रा. ३ कं. १०]

इत्यादिश्रुत्या प्रतिपादितप्रातिभासिकप्रपञ्चस्य व्यावहारिकप्रपञ्चवत् सर्वसाधारण्यापत्तेश्च। तस्मान्न मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमधिष्ठानम्। किन्तु। जीवचैतन्यमेव इति। अथ—जीवचैतन्यस्य अनावृतत्वेन सर्वदा भासमानत्वादधिष्ठानत्वासम्भवः—इति चेत्। सत्यम्। तत्र हि स्वप्नाध्यासानुकूलव्यावहारिकसङ्घातभानविरोध्यवस्थाज्ञानं[1] सहकारि कारणं कल्प्यते। स्वप्नदशायां च—अहं मनुष्यः—इत्यादिप्रातीतिकसङ्घातान्तरभानाभ्युपगमात्। शय्यायां स्वपिमि—इति शय्यान्तरवत्। भानसामग्र्यभावस्य उभयत्र तुल्यत्वात्।

---

१। '०तस्तत्र विरोधः' इति ख. पुस्तके।

---

* ननु यथा जागरिते तथैव स्वप्नेऽपि विषया उपलभ्यन्ते तत्र कथमिन्द्रियाभावाद्वैलक्षण्यमुच्यते? इति चेत् शृणु। 'तत्र' स्वप्ने 'रथाः' रथादिलक्षणा विषया 'न' सन्ति। तथा 'रथयोगाः' रथे योज्यन्त इति रथयोगाः अश्वादयः तत्र न सन्ति। न च 'पन्थानो' मार्गाः भवन्ति। अथ च 'रथान् रथयोगान् पथश्च 'सृजते' स्वयम्। कथं पुनः सृजते रथादिसाधनानां अभावे? इति चेत्। 'अस्य' लोकस्य सर्वतो मात्रां' वासनामुपादाय रथादिवासनारूपा अन्तःकरणवृत्तिः तदुपलब्धिनिमित्तेन कर्मणा चोद्यमाना दृश्यत्वेन व्यवतिष्ठते इत्यर्थः।

अथ—अहं मनुष्यः—इत्यादिजाग्रत्काले प्रथमक्षणे उत्पद्यमानस्य व्यावहारिकसङ्घातज्ञानस्य प्रमाणाजन्यत्वात् कथमज्ञाननिवर्तकता?। न च—अवस्थान्तरान्यथानुपपत्त्या तत्कल्पनीयं—इति वाच्यम्। सुषुप्तावपि स्वप्नबाधप्रसङ्गात्। तच्चानिष्टम्। जाग्रत्त्वापत्तेः—इति चेत्। न। स्वप्नावस्थाज्ञानस्यैव अन्तःकरणलयसहितस्य सुषुप्तिरूपत्वान्न तत्र तद्बाधः। जागरे तु मिथ्यैव स्वप्नो ऽभूत् इत्यनुभवसिद्धत्वात्। अहमिति सामान्यज्ञानस्य प्रमाणाजन्यत्वे ऽपि अज्ञाताऽबाधितमनोऽवच्छिन्नचिद्विषयत्वेन यथार्थत्वात्। द्वितीयादिक्षणे शरीरादिविशिष्टज्ञानस्य तु प्रमाणजन्यत्वेन अवस्था ऽज्ञानविरोधित्वमनुभवसिद्धम्। न च—तथापि प्रमाणाजन्यज्ञानस्य अज्ञाननिवर्तकत्वे साक्षिणो ऽपि तथा प्रसङ्गः—इति वाच्यम्। साक्षिणो ऽविद्यानिवर्तकत्वं तु अविद्यासाधकत्वेन—आत्मानमहं न जानामि[1]—इति धर्मिग्राहकमानेन सिद्ध्यतीति तथा प्रसङ्गाभावात्।

ननु—तर्हि स्वप्ना[2]ध्यासादिकारणीभूताज्ञानस्य जागरादिप्रमाणज्ञानेन निवृत्तौ पुनः स्वप्नाध्यासो न स्यात्। तत्र अनेकाज्ञानस्वीकारे तु आत्मन्यपि तथा सम्भवेन मुक्तौ अनाश्वासप्रसङ्गात्। न च अनयैवानुपपत्त्या तत्र अज्ञाननिवृत्तिर्नाङ्गीक्रियते। एकस्यामेव रज्ज्वां अज्ञातायां सर्पभ्रमेण धारादिभ्रमतिरोधानवत् जागरादिभ्रमेणापि स्वप्नादिभ्रमतिरोधानमात्रं क्रियते। अज्ञाननिवृत्तिस्तु

---

१ 'भावविरोधं' इति अधिकं क० पुस्तके।

२ इदं क० ख० पुस्तकयोर्नास्ति।

वक्ष्यमाणेन ब्रह्मात्मैक्यविज्ञानादेवेति न मुक्तावनाध्यासप्रसङ्गः—इति वाच्यम्। ब्रह्मात्मैक्यज्ञानादपि अज्ञाननिवृत्तिसम्भावना न स्यात्। कुत्रापि ज्ञानादज्ञाननिवृत्तेरदर्शनात्—इति चेत्। अत्रोच्यते। नोभयथाप्यनुपपत्तिः।

तथा हि। जागरादिज्ञानात् स्वप्नाध्यासादिनिवृत्त्यभ्युपगमवत् केवलं मूलाज्ञानस्यैव विचित्रानेकशक्तिस्वीकारात् एकशक्तिनाशे ऽपि शक्त्यन्तरेण स्वप्नान्तरादीनां पुनरावृत्तिः सम्भवति। सर्वशक्तिमतो मूलाज्ञानस्यैव निवृत्तौ तु कारणान्तराभावात्। तादृशस्य च द्वितीयस्यानङ्गीकारात् न अहङ्काराद्यध्यासानां पुनरुत्पत्तिः सम्भवति इति अपुनरावृत्तेरसिद्धिः। तस्मात् रज्जुज्ञानादिना अज्ञाननिवृत्त्यङ्गीकारे ऽपि न को ऽपि दोषः। चिन्मात्रस्यैव अज्ञानाश्रयत्वविषयत्वसम्भवात्। जडे च प्रमाणप्रयोजनाभावेन तदनङ्गीकारात् *।

---

* तदुक्तम्।

आश्रयत्वविषयत्वभागिनी।
निर्विभागचितिरेव केवला॥
पूर्वसिद्धतमसो हि पश्चिमम्।
नाश्रयो भवति नापि गोचरः॥
बहु निगद्य किमत्र वदाम्यहम्।
शृणुत सङ्क्षिपमदयशासने॥
सकलवाङ्मनसातिगता चितिः।
सकलवाङ्मनसव्यवहारभाक्॥

इत्यादिना।

ननु अज्ञानस्य चिन्मात्राश्रयत्वे कथमन्तःकरणवृत्तिरूपेण ज्ञानेन तन्निवृत्तिः। भिन्नाश्रयत्वात्। ज्ञानस्य च जन्यत्वेन चिन्मात्राश्रयत्वानुपपत्तेः। तस्य *कूटस्थस्वभावत्वात्। अज्ञानस्य च अनादित्वेन कौटस्थ्याव्याघातकत्वात् इति दिक्। न चैतन्यान्तःकरणयोः तादात्म्याध्यासेन अन्तःकरणधर्मस्यापि चैतन्यधर्मत्वानपायात्। तदुक्तं पञ्चपादिकाकृद्भिः।

आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः।
अभेदेऽपि चैतन्यात्पृथगिवावभासन्ते॥

इति। तार्किकैरपि कर्णशष्कुल्यवच्छिन्नाकाशे स्वसमवायसम्बन्धेन महाकाशाश्रितशब्दग्रहणमङ्गीक्रियते[1]। उपहितेऽपि चैतन्ये स्वानपायादिति ज्ञानाज्ञानयोः समानाश्रयत्वोपपत्तिः। न च ज्ञानस्य क्वाप्यविद्यानिवर्तकत्वादर्शनात् ब्रह्मज्ञानेनापि तत्कल्पनं न स्यात्—इति वाच्यम्। न हि अनुमानात् ब्रह्मज्ञानस्य अज्ञाननिवर्तकत्वं वयं साधयामः। येन व्याप्तिग्रहार्थमुदाहरणापेक्षा भवेत्। किन्तु श्रुत्या श्रुतार्थापत्त्या च इति ब्रूमः। तत्र श्रुतिस्तावत्।

तमेव विदित्वातिमृत्युमेति।

इति। तथा।

तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः।

---

१ 'महाकाशशब्दगूहनं' इति ख० पुस्तके।

---

* कूटस्थचैतन्येन सह अविरोधादित्यर्थः।

इति । स्मृतिश्च ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् * ॥

[गी. अ. ५ श्लो, १६]

इत्यादि । एवम्—

ब्रह्म वेद ब्रह्मैव भवति ।
तरति शोकमात्मवित् ।

इति । तथा—

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयां यस्तस्मै ज्ञानात्मने नमः ॥

इति च । "अविद्यायाः परं पारं तारयति" ।

इत्यादिश्रुतार्थापत्तिश्च । ब्रह्मज्ञानाद्ब्रह्मभावः श्रूयमाणः तद्व्यवधायकाज्ञाननिवृत्तिमन्तरेण नोपपद्यत इति ज्ञानादज्ञाननिवृत्तिं गमयति ।

"अनृतेन हि प्रत्यूढाः" ।

---

* येन अज्ञानेन आवृत्त्या जन्तवः मुह्यन्ति 'तत्' अज्ञानं 'येषां' जन्तूनां 'ज्ञानेन' विवेकज्ञानेन आत्मविषयेण । 'आत्मनः' 'नाशितं' भवति । 'तेषां' जन्तूनां । 'आदित्यवत्' यथा आदित्यः समस्तं रूपजातं अवभासयति तद्वत् ज्ञानं ज्ञेयं च वस्तु सर्वं प्रकाशयति । 'तत्' परमार्थतत्त्वम् इति योजना ।

नीहारेण प्रावृताः॥

अन्यद्युष्माकमन्तरं बभूव।

इत्यादिश्रुतिभ्यः।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः * ।

[गी. अ. ५. श्लो. १९]

इत्यादिस्मृतिभ्यो ऽपि अज्ञानमेव मोक्षव्यवधायकमवगम्यते[१]।

किञ्च। भगवद्ध्यानरूपभजनाञ्जनचक्षुः प्रत्यक्षेणैव अज्ञाननिवृत्तिमनुभवति। तत्र न क्वापि विप्रतिपत्तिः। यदि हि कस्यचिदपि तत्त्वावबोधे जाते नाज्ञानं निवर्त्येत। ततो व्यभिचारात् कारणता न स्यात्। न तु तथा दर्शनमस्ति। एकस्यैव तत्त्वज्ञानेन अज्ञाननिवृत्त्यभ्युपगमात् जीवान्तरप्रतिभासस्य च स्वाप्निकजीवान्तरप्रतिभासवत् विभ्रममात्रत्वात्। एतच्च सर्वमग्रे वक्ष्यमाणत्वान्नात्र विचार्यते। एतेन—नाज्ञानं ज्ञाननिवर्त्यम्। अनादिभावत्वात्। भाववत्† इति निरस्तम्। पूर्वोक्तश्रुति-स्मृत्यादिबाधितत्वात्। किञ्च। कीदृशं भावत्वं अज्ञानस्य अविनाशित्वे प्रयोजकम्। सत्त्वलक्षणं अभावलक्षणं वा?। तत्र नाद्यम्। सदसद्विलक्षणे ऽस्मत्सम्मते

---

१ 'मवगतम्' इति ग० पुस्तके।

---

* 'ज्ञानं' विवेकविज्ञानं। 'अज्ञानेन आवृतं' तेन मुह्यन्ति। करोमि—कारयामि—भोक्ष्ये—भोजयामि—इत्येवं मोहं गच्छन्ति। अविवेकिनः संसारिणो जन्तवः।

† परमाण्वादिभावान्तरवदित्यर्थः।

ऽज्ञाने सिद्धम्। त्रिकालाबाध्यत्वस्वरूपसत्तायोगात्। द्वितीयं तु न अविनाशित्वप्रयोजकम्। अनुकूलतर्काभावात्। प्रतिकूलतर्कपराहतत्वाच्च। सत्त्वस्यैव अविनाशित्वप्रयोजकत्वाच्च। न च आत्मातिरिक्ते पदार्थमात्रे सत्त्वाभावेन कथं व्याप्तिग्रहावसरः। सत्त्वाभावस्य विनाशित्व[1]प्रयोजकत्वेन व्यतिरेकिणापि तस्य सिद्धेः। एवं दृश्यत्वपरिच्छिन्नत्वजडत्वादिनापि अज्ञानस्य विनाशित्वनिश्चयः।

"भूयश्चान्ते विश्वमायानिवृत्तिः"।

इत्यादिवाक्यैः कण्ठत एव विनाशित्वप्रतिपादनात् च। न च श्रुतिविषयत्वे ब्रह्मवदबाध्यत्वप्रसङ्गः। श्रुतितात्पर्यविषयत्वस्यैव अबाध्यत्वप्रयोजकत्वात्। श्रुतेश्च प्रयोजनवति मानान्तरानधिगते तात्पर्यं उपक्रमादिषड्विधलिङ्गेन अवधार्यते। अज्ञानस्य च—अहमज्ञ—इति साक्षिसिद्धत्वात्। तत्प्रतिपादने प्रयोजनाभावाच्च। न श्रुतितात्पर्यविषयत्वम्। वक्ष्यमाणरीत्या तु ब्रह्मण्येव तात्पर्यनिश्चयात्।

एवं च साक्षिसिद्धस्यैव भावरूपाज्ञानस्य अभावविलक्षणत्वादिकमनुमानादिना साध्यत इति न कोऽपि दोषः। शुक्तौ—रजतज्ञानवान् अयं—इति मिथ्यासंसर्गस्यापि तत्त्वज्ञानविषयत्ववदस्माकं किं न स्यात्। एतेन मानविषयत्वे ज्ञानस्य मानानिवर्त्यत्वम्। मानाविषयत्वे तु स्वप्रकाशत्वानङ्गीकारात् शशविषाणादिवत् अलीकत्वं इत्यपास्तम्। स्वरूपत्वे मानाविषयस्यापि साक्षिसिद्धत्वाभ्युपगमात्। तस्य च भ्रमप्रमासाधारणत्वात्। तदुक्तम्।

---

१ 'विनाशित्वेन' इति ग० क० पुस्तकयोः।

अविद्याया अविद्यात्वे इदमेवास्ति लक्षणम् ।
प्रमाणाद्यसहिष्णुत्वमसाधारणमिष्यते ॥

इति ।

अविद्या ऽस्येत्यविद्यायामेवासिद्धा प्रकल्प्यते ।
ब्रह्मदृष्ट्या त्वविद्येयं न कथञ्चन युज्यते ॥

इति च। तस्मात् अविद्याया अपि रज्जुभुजङ्गवत् आत्मन्यारोपितत्वात् आत्मस्वरूपज्ञानेन निवृत्तिरुपपद्यते इत्यादि पूर्वमेव दर्शितमिति दिक्। यस्मात् पक्षद्वये ऽपि अनुपपत्त्यभावः तस्मात् यदि ब्रह्मज्ञानादेव अज्ञाननिवृत्त्यभ्युपगमः तदा रज्ज्वां दण्डभ्रमेण सर्पभ्रमतिरोधानवत् अधिष्ठानज्ञानाभावे ऽपि जाग्रद्भ्रमेण स्वप्नभ्रमतिरोभावोपपत्तेः। तथा च—मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमेव स्वप्नाध्यासोपादानं—इति पक्षे ऽपि न को ऽपि दोषः। नापि प्रति जीवं स्वप्नसाधारण्यापत्तिः। मनोगतवासनानां भिन्नत्वेन तथात्वासम्भवात्। न च मनोवच्छिन्नचैतन्यस्य अधिष्ठानत्वाङ्गीकारे—अहं तुरग—इति अहङ्कारसामानाधिकरण्येनैव प्रतीतिः स्यात्। इदं रजतं—इति शुक्तिसामानाधिकरण्येन रजतप्रतीतिवत्। न तु—अयं तुरग—इति ब्रह्मचैतन्यस्य अधिष्ठानपक्षे ऽपि—तुरग—इत्याकारैव प्रतीतिः स्यात्। न तु—अयं तुरग—इति। तच्चापि इदङ्कारास्पदीभूतबाह्यार्थाभावस्य समानत्वादिति वाच्यम्। आद्ये पक्षे अहङ्कारस्य शुक्तिवदधिष्ठानावच्छेदकत्वात्[१] शुक्तिरजतमिति

---

१ 'अधिष्ठानास्पदत्वात्' इति क० पुस्तके।

वत्—अहं तुरग—इति न भ्रमाकारप्रसङ्गः। अहं—इति ज्ञानस्य—इयं शुक्तिः—इति ज्ञानस्येव भ्रमविरोधित्वात्। इदमंशस्य च भ्रमाविरोधिन एव तत्र भानाभ्युपगमात्। स्वप्ने तु तुरग इत्याकारवत् अयमित्याकारो ऽपि कल्पित एव। न च कल्पितोभयाकारबाधे शून्यवादापत्तिः—इति वाच्यम्। उभयाकारबाधे ऽपि अधिष्ठानभूतचैतन्यस्याबाधात् न शून्यवादापत्तिः। जाग्रद्दशायामपि हि शुक्तीदङ्कारविलक्षणस्य प्रातीतिकस्यैव रजतेदङ्कारस्य भानाभ्युपगमाच्च। तदुक्तं पूर्वमेव।

"इदमर्थवस्त्वपि भवेद्रजते परिकल्पितम्"।

इत्यादिना शुक्तीदमंशभानपक्षे ऽपि नेदमंशस्य सत्यत्वमध्यासे प्रयोजकम्। किन्तु अधिष्ठानसत्त्वमेव। अधिष्ठानं च तत्र अज्ञानं शुक्त्यवच्छिन्नं चैतन्यमेव। प्रकृते ऽपि साक्षिचैतन्यमस्त्येव इति उपपन्नम्। तस्मात् न पक्षद्वये ऽपि काप्यनुपपत्तिः इति दिक्।

## इति स्वप्नावस्थानिर्णयः।

---

अथ सुषुप्तिः। तथा हि। शरीरान्तःकरणोपाधिद्वयाभिमानरहितः तत्संस्कारावच्छिन्नो ऽविद्यामात्रोपहितः स एव सुषुप्त्यवस्थाभिमानी प्राज्ञः। सुषुप्तिस्तु जाग्रत्स्वप्नभोगद्वयेन विश्रान्तस्य जीवस्य तदुभयकारणकर्मक्षये ज्ञानशक्त्यवच्छिन्नस्य[१] सवासनस्य अन्तः-

---

१ 'ज्ञानशक्त्युपहितस्य' इति क० ख० पुस्तकयोः।

करणस्य कारणीभूताज्ञाने संस्काररूपेण अवस्थाने सति विश्रामावस्थानम् । तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावे ऽपि साक्षात्कारं सुखाकारं संस्कारतापन्नजाग्रत्स्वप्नविषयकमनादिषड्विषयकं च यदवस्थाज्ञानमूलाज्ञाने तदाकारं च अविद्यावृत्तित्रयमङ्गीक्रियते । न च तत्र निर्विकल्पकवृत्तित्रयस्वीकारे गौरवम् । तथा च एकैव विशिष्टवृत्तिः—इति वाच्यम् । विशिष्टवृत्तौ हि अहङ्कारस्य कारणत्वेन सुषुप्तौ च तस्य लीनत्वात् । तत्स्वीकारे च सुषुप्त्यभावप्रसङ्गात् ।

न च तर्हि सुषुप्ति-प्रलययोः साम्यम्—इति वाच्यम् । वृत्तिरूपस्योपलम्भस्य सत्वेन वैषम्यात् । न च तत्रापि वृत्तिःकल्प्यताम् । तत्र तत्कल्पने बीजाभावात् । इह च—सुखमहमस्वाप्सं । न किञ्चिदवेदिषं—इति सुप्तोत्थितस्य परामर्शात् । अननुभवे परामर्शानुपपत्तेः । न च—काल-देशविशिष्टरूपतत्वोल्लेखाभावे कथं निर्विकल्पककेवलाजादिरूपेण स्मरणम् ? । अन्तःकरणोपरागकालीनानुभवजन्यत्वाभावेन तत्वोल्लेखाभावे ऽपि स्मरणोपपत्तेः । निर्विकल्पकानुभवजनितसंस्कारस्य निर्विकल्पकस्मरणहेतुत्वात् । न हि निर्विकल्पकस्मरणस्य तत्वोल्लेखः कस्यचिदनुभवारूढो जागरे ऽप्यस्ति । किं पुनः सुप्तौ । अत एव संस्मरणे तत्वोल्लेखनियमाभावात् न किञ्चिदेतत् ।

ननु—नावेदिषमिति परामर्शः अनुमानमेवास्तु । न तु स्मरणम् । तथा हि । जाग्रत्काले सुषुप्तेः प्रत्यक्षं मास्तु । अवस्थाऽज्ञानं मनोलयश्च इति हि सुषुप्तिः । तत्र आद्यं जागरकालधिया नश्यति । द्वितीयं तु न प्रत्यक्षम् । अयोग्यत्वात् । अनुमितिस्तु स्यादेव ।

स्वप्न-जागरयोर्मध्यकालः[1] सुषुप्तिमान्* । ज्ञानसामान्याभावात्। जन्यज्ञानसामान्याभावाद्वा । यद्वा ज्ञानसामग्र्यभावात्—इति चेत्। न । आद्यो हि न हेतुः। ज्ञानस्य नित्यत्वेन सर्वदा भासमानत्वात्। ज्ञानस्वरूपस्य नित्यस्य आत्मनः पूर्वं साधितत्वाच्च। अत एव न द्वितीयः ।

नापि तृतीयः । अन्योन्याश्रयग्रस्तत्वात्[2]। पक्षे मनोलयस्य ज्ञातुमशक्यत्वात् च। न च—तत्कालविशिष्टरूपेण कस्याप्यस्मृतेः तत्काले ज्ञानसामान्याभावो ऽनुमेयः। यदा ह्यनुभवो जायेत तदा तत्कालविशिष्टं स्वविषयं सङ्गृह्णीयात्। ततश्च तद्रूपेण स्मरणोपपत्तिः स्यात्। तदभावाच्च तादृशज्ञानसामान्याभावानुमितिसम्भवः—इति वाच्यम्। ज्ञानस्य सर्वस्मृतिजनकत्वानियमात् । न हि यावदनुभूतं स्मर्यते—इति न्यायात् । तस्मात् लिङ्गाभावादाश्रयासिद्ध्या च तत्कालस्यानुपस्थितत्वात् च अनुमानस्य अप्रयोजकत्वम्। न च—तथापि—अहमस्वाप्सं—इति प्रत्ययेन अहङ्कारस्य अज्ञानाद्याश्रयत्वेनैव प्रतीतिर्भवति न तु साक्ष्याश्रयत्वेन—इति वाच्यम्। मुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासेन—रक्तं मुखं—इति प्रतीतिवत् अहङ्काराश्रयसाक्षिचैतन्यस्य स्मरणाश्रयत्वात् सामानाधिकरण्येन प्रतीतिः। न पुनः—अहं सुखी—इतिवदाश्रयतया । स्मृति-संशय-विपर्ययानां

१ क. पुस्तके '०लयकालः' इति वर्तते ।
२ '०श्रयेणैव ग्रस्तत्वात्' इति ग० पुस्तके।

* 'सुषुप्तिमान्' मनोलयवान् इत्यर्थः।

साक्षिचैतन्याश्रयत्वनियमः। अप्रमात्वात्। अहङ्कारस्यैव च प्रमाण-जन्यज्ञानाश्रयत्वात्।

अतएव—अनाप्तवाक्यादिजन्यपरोक्षविभ्रमो ऽपि अविद्यावृत्तिरेव—इति अभ्युपगमो वेदान्तविदाम्। तत्र अन्तःकरणवृत्तिजनक-सामग्रीसम्भवेऽपि प्रमात्वाभावापराधेन अन्तःकरणस्य असामर्थ्यात्। ननु—तर्हि नामादौ ब्रह्मैक्योपासनापि न। प्रमाबाधितार्थत्वात्। नापि भ्रमो नाम। आदौ ब्रह्मभेदस्य अनावृतत्वात्। तथा च। अविद्यैव मनो ऽपि न तस्यां परिणामि—इति चेत्। न। कामादि-वत् इच्छाधीनतया नामादिषु ब्रह्माध्यासस्य भ्रम-प्रमाबहिर्भूतमनो-वृत्तिस्वरूपेणैव स्वीकारात्। तदुक्तम्।

"नोदनाजन्यत्वात् मानसी क्रिया एव सा"।

इति। एतेन—वह्निव्याप्यधूमवान् ह्रदः—इति आरोप*जन्यस्य-ह्रदो वह्निमान् स्यात्—इत्याकारकतर्कस्यापि इच्छाधीनत्वेन भ्रम-प्रमाबहिर्भूतत्वेन मनोवृत्तित्वं व्याख्यातम्।

अतएव मनन-निदिध्यासनसहिते श्रवणाख्ये ऊहापोहात्मके[1] वेदान्तवाक्य[2]विचारे—

श्रोतव्यो मन्तव्यो निदिध्यासितव्यः†।

---

१ 'ऊहापोहात्मके' इत्यन्तं नास्ति क० पुस्तके।

२ '०शास्त्रे' इति ख० पुस्तके पाठः।

---

* अतद्वति तद्वत्ताप्रसञ्जनमारोपः।

† व्याख्याता चेयं श्रुतिः पूर्वम्।

इति विधिरुपपद्यते। विवरणाचार्यादिभिः तथैव स्वीकृतत्वात् च। यदि च शास्त्राचार्योपदेशजनितं ज्ञानमेव श्रवणं तदा ज्ञाने विध्यसम्भवे ऽपि न क्षतिः। अत एव सर्वतन्त्रस्वतन्त्रैर्वाचस्पतिमिश्रैः "श्रोतव्यो मन्तव्यः" इति वाक्ये विधिर्नाङ्गीकृतः इति। विस्तरस्तु आकरे इति दिक्।

ननु—भवत्वेवं व्यवस्था, तथापि परामर्शस्वीकारो न युक्तः। अज्ञानवृत्तिप्रतिबिम्बितचैतन्यरूपस्य अज्ञानानुभवस्य जाग्रत्यपि विद्यमानत्वात् कथमज्ञानस्मरणम्?। न हि धारावाहिकेषु अनुभवेषु तुल्यसामग्रीकेषु स्मरणव्यवहारः सम्भवति। तथा च—धारावाहिकेष्वेव अज्ञानानुभव एव वक्तव्यः। न तु परामर्शः—इति चेत्। सत्यम्। सुषुप्त्याख्यायाः तामस्याज्ञानवृत्तेः नाशे जायति तद्विशिष्टाज्ञानस्य साक्षिणा अनुभूयमानत्वाभावेन संस्कारजन्या ऽन्याविद्यावृत्त्यैव सुषुप्तिविशिष्टाज्ञानभानात् परामर्शत्वसिद्धिः। केवलाज्ञानांशे तु तुल्यसामग्रीकत्वेन धारावाहिकत्वमेव। अत एव कार्योपाधिविनाशसंस्कृतमज्ञानमेव प्रलयोपमं सुषुप्तिः, इत्यभिप्रेत्य वार्तिककारपादैः सौषुप्ताऽज्ञानस्मरणमपाकृतम्। तदुक्तम्।

न सुषुप्तिगमोहस्य नाज्ञासिषमिति स्मृतिः।
अनतीतात्मगत्वेन मोहे ऽस्मिन् स्मृत्यसम्भवात्॥
न भूतकालस्पृक् प्रत्यङ् न चागामिस्पृगिष्यते।
अन्यथा वर्तमाने ऽस्मिन् काले प्रत्यङ् न सम्भवेत्॥

इति। न च—तर्हि वार्तिक-विवरणयोर्विरोध—इति वाच्यम्।

अभावप्रत्ययालम्बना वृत्तिर्निद्रा * ।

[यो. द. पा. १ सू. १]

इति योगसूत्रानुसारेण तमोगुणात्मिकावरणमात्रालम्बना काचिद्वृत्तिः सुषुप्तिः—इत्यभिप्रेत्य तदुपरक्तचैतन्यस्य तत्र अंशेनैव नाशात् तत्कालीनानुभवजनितसंस्कारवशेन—न किञ्चिदवेदिषं—इति स्मरणमभ्युपेतमिति वार्तिक-विवरणयोः अविरोधः। तदुक्तं उषस्थब्राह्मणे वार्तिककृद्भिः।

न चे[1]दनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते।
नावेदिषं सुषुप्तेहमिति धीः किम्बलात् भवेत्?॥

---

१ 'नैवं त्वनुभवव्याप्तिः' इति क० पुस्तके।

---

* अभावप्रत्ययः आलम्बनम् यस्याः सा 'अभावप्रत्ययालम्बना'। या सन्ततमुद्रिक्तत्वात् तमसः समस्तविषयपरित्यागेन प्रवर्तते वृत्तिः सा 'निद्रा'। सा च सम्बोधे प्रत्यवमर्शात् प्रत्ययविशेषः। सुखमहमस्वाप्सं—प्रसन्नं मे मनः—प्रज्ञां मे विशारदीकरोति—दुःखमहमस्वाप्सं—स्त्यानं मे मनःभ्रमत्यनवस्थितं—गाढं मूढो ऽहमस्वाप्सं, गुरूणि मे गात्राणि—क्लान्तं मे चित्तं, अलसं मुषितमिव तिष्ठति—इति प्रबुद्धस्य प्रत्यवमर्शो न स्यात्। असति प्रत्ययानुभवे तदाश्रिताः स्मृतयश्च तद्विषया न स्युः। तस्मात् प्रत्ययविशेषो निद्रा। अस्याश्च—सुखमहमस्वाप्सं—इत्यादिस्मृतिदर्शनात् स्मृतेश्चानुभवव्यतिरेकेण अनुपपत्तेर्वृत्तित्वम् इति। एतदेवाभिप्रेत्य विद्यारण्यस्वामिभिरप्युक्तम्।

'सुखमस्वाप्समत्राहं' 'न वै किञ्चिदवेदिषम्'।
इति सुप्ते सुखाज्ञाने परामृशति चोत्थितः॥
परामर्शो ऽनुभूते ऽस्तीत्यासीदनुभवस्तदा।
चिदात्मत्वात् स्वतो भाति सुखमज्ञानधीस्ततः॥

इति।

इति। तदेवं सुषुप्त्यवस्थायां अस्ति आनन्दानुभवः। अनुभविता च सुषुप्त्यवस्थाभिमानी प्राज्ञः। तथा च श्रुतिः।

आनन्दभुक् चेतोमुखः प्राज्ञः।

इति। न च—सुषुप्तौ अन्तःकरणस्य लये जीवाभावप्रसङ्गः—इति वाच्यम्। तदानीमपि तत्संस्कारावच्छेदात्। अत एव न सर्वज्ञापत्तिः न वा जीवाभावप्रसङ्गः। ननु—सुषुप्तौ दुःखाभाव एवानुभूयते। न तु सुखम्। तज्जनकसामग्र्यभावात्। न च—जन्यसुखाभावे ऽपि स्वरूपसुखं निर्विकल्पकमनुभूयते—इति वाच्यम्। विषयानन्दाति-रिक्तस्वरूपानन्दे मानाभावात्। विषयसुखतत्साधनाद्यभावे कामुकानां निर्वेददर्शनात्। तदुक्तं मीमांसकैः तर्कचरणे *।

सुषुप्तादुत्थितास्त्वेवं निर्विद्यन्ते हि कामुकाः।
वृथेयमन्तरेणैव कामिनीं यामिनी गता †॥

---

* उक्तं चैतत् पार्थसारथिमिश्रैः तर्कचरणे।

† 'सुषुप्तात्' निद्रायाः। 'उत्थिताः' जागरं प्राप्ताः। 'कामुकाः' विषयिणः पुरुषाः। 'कामिनीं अन्तरेणैव इयं यामिनी वृथा गता—इति निर्वि-द्यन्ते' निर्वेदं प्राप्नुवन्ति। यदि च तैः—

सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यात्मा।

इत्यादि श्रुत्युक्तप्रकारेण—तत्र ब्रह्मानन्दो ऽनुभूयते तर्हि 'परमानन्दं भुक्त्वा तस्य स्मरणात्' स्वल्पस्य—स्वल्पसुखस्य हान्यैव निर्वेदः नोपपद्यते' तुच्छेन्द्रियसुखहानिनिमित्तकं निर्वेदनमयुक्तमित्यर्थः। को हि महान्तमा-नन्दमनुभूय स्वल्पार्थं शोकं कुर्यात्? अथोच्येत—तत्सुखं विस्मृतमतो निर्वि-द्यतीति। तर्हि। तत्सुखं विस्मृतं चेत्—सुखमस्वाप्सं—इत्ययं व्यवहारः

अत्याज्यसुखहान्यैव निर्वेदो नोपपद्यते ॥
तत्सुखं विस्मृतं चेत् स्यात् सुखमस्वाप्समित्ययम् ।
व्यवहारो न घटते दुःखाननुभवेऽप्ययम् ॥
सुखव्यवहृतिस्तस्मात् न सुखात्मत्वमात्मनः ।

इति । तस्मात्सुषुप्तौ सच्चित्स्वरूपस्यापि आत्मनः आनन्दरूपतासिद्धिः इति कथमुक्तं—आनन्दभुक्—इत्यादि जैमिनीयैरनुपासितसद्गुरुभिः?—इति चेत्। अत्रोच्यते। अध्यात्मविद्यासंस्कारहीनत्वाद्भ्रान्ता एव ते । सुप्तोत्थितस्य विषयसुखसामग्र्यभावे ऽपि तूष्णीम्भाव-सुखप्रसादादिलिङ्गदर्शनेन अनुभूतसुखसंस्कारसम्भवात् । न हि सुषुप्तौ स्वरूपसुखानुभवं विना स सम्भवति । आकस्मिकत्वापत्तेः । तदुक्तं भगवता वसिष्ठेन ।

निद्रादौ जागरस्यान्ते यो भाव उपजायते ।
तं भावं भावयन् साक्षादक्षयानन्दमश्नुते ॥

इति । निद्रादिशब्दस्तु अन्यस्याप्युपलक्षकः । न च—कथं तादृशं सुखानुभवं विहाय अनर्थावहं घोरं जागरणं—इति वाच्यम् । प्राग्जन्मार्जितकर्मप्राबल्यात् । तथा च कैवल्यश्रुतिः ।

पुनश्च जन्मान्तरकर्मयोगात् ।
स एव जीवः स्वपिति प्रबुद्धः ॥

इति । एतच्च समर्थितं श्रुतितात्पर्यविद्भिर्विद्यारण्यश्रीपादैः ।

अज्ञानबिम्बिता चित् स्यात् मुखमानन्दभोजने ।

---

न घटेत। दुःखस्य अननुभवे तु इयं सुखव्यवहृतिः न घटेत। तस्मात् आत्मनः सुखात्मत्वं न इति हि मीमांसकानां आशयः।

भुक्तं ब्रह्मसुखं त्यक्त्वा वहिर्यात्यथ कर्मणा * ॥
कर्म जन्मान्तरेऽभूद्यत् तद्योगात् बुध्यते पुनः ।
भुक्त्वा च परमानन्दं तस्य च स्मरणादयम् ।
इति कैवल्यशाखायां कर्मजो बोध ईरितः † ।
किञ्चित्कालं प्रबुद्धस्य ब्रह्मानन्दस्य वासना ।
अनुगच्छेद्यतस्तूष्णीमास्ते निर्विषयः सुखी ‡ ॥
कर्मभिः प्रेरितः पश्चात् नानादुःखानि भावयन् ।

---

* माण्डूक्योपनिषदि "आनन्दभुक् चेतोमुखः" इत्युक्तम् । तत्र 'चेतोमुख'शब्दस्यार्थं वर्णयति । 'अज्ञानेति' । 'आनन्दभोजने' सौषुप्तब्रह्मानन्दास्वादने । 'अज्ञानबिम्बिता चित्' अज्ञानवृत्तौ प्रतिबिम्बितं चैतन्यमेव । 'मुखं' साधनम् । 'स्यात्' भवेत् । ननु—सुषुप्तौ आनन्दमयरूपेण जीवेन ब्रह्मसुखं चेद्भुज्यते तर्हि तत्परित्यज्य अथ बहिः कुतः जागरणं दुःखालयमागच्छेत् ? अत आह । पुण्यापुण्यकर्मपाशबद्धत्वात् 'भुक्तं' साक्षात्कृतमपि । 'ब्रह्मसुखं' ब्रह्मानन्दं । 'त्यक्त्वा' परित्यज्य । 'अथ बहिः याति' जागरणादिकं गच्छतीत्यर्थः ।

† एतत्कुतोऽवगम्यते इत्याशङ्क्य—

"पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः"।

इति कैवल्यश्रुतिवाक्यात् इति मन्वानः तदेव अर्थतः पठन् तदभिप्रायमाह 'कर्मे'त्यादिना । स्पष्टार्थः श्लोकः ।

‡ सुषुप्तौ ब्रह्मानन्दोऽनुभूत इत्यत्र लिङ्गं दर्शयति । 'प्रबुद्धस्य' जागरणं प्राप्तस्यापि । 'कञ्चित्कालम्' स्वल्पकालपर्यन्तम् । सुप्तौ अनुभूतस्य 'ब्रह्मानन्दस्य' 'वासना' संस्कारः । 'अनुगच्छेत्' अनुगच्छति । 'यतः' कारणात् । प्रबोधादौ । 'निर्विषयः' विषयानुभवरहितोऽपि । 'सुखी' सन् । 'तूष्णीं' आस्तेऽतोऽवगम्यते इत्यर्थः ।

शनैर्विस्मरति[1] ब्रह्मानन्दमेषो ऽखिलो जनः* ॥
प्रागूर्ध्वमपि निद्रायाः पक्षपातो दिने दिने।
ब्रह्मानन्दे नृणां तेन प्राज्ञो ऽस्मिन्विवदेत कः† ॥

इति। किञ्च। न हि ब्रह्मलोकसुखमप्यनादृत्य सनकादिभिर्नारदादिभिश्चानुभूतस्य स्वरूपसुखस्य ततो ऽर्वाक् श्रुतिस्मृत्युक्तसाङ्गोपाङ्गैः कर्मभिः तत्तत्कर्मफलत्यागेन भगवदनुग्रहसम्पादनद्वारा जनकाजातशत्रु-मुचकुन्दादिभिः काम्यमानस्य तस्य विषयलम्पटपामरनिर्वेदमात्रेण अपलापः कर्तुं शक्यते। न हि दुःखाभावमात्रमुद्दिश्य तादृशसुखत्यागः सम्भवति। अनेकश्रुति-स्मृतिविरोधात्। तथा हि। तैत्तिरीयके भृगुवरुणसंवादे।

आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते।
आनन्देन जातानि जीवन्ति।
आनन्दं प्रयन्त्यभिसंविशन्ति।

---

१ 'शनैश्च विस्मरेत्' इति. ख. ग. पुस्तकयोः।

---

* 'कर्मभिः' पूर्वोक्तैः। 'प्रेरितः' नोदितः। 'एषः' अखिलो ऽपि सर्वो ऽपि। 'जनः' 'पश्चात्' अनन्तरम्। 'नानादुःखानि' नानाविधानि। 'दुःखानि' 'भावयन्' अनुसन्दधानः सन्। 'शनैः' 'ब्रह्मानन्दं' विस्मरति।

† इतो ऽपि ब्रह्मानन्दे न विप्रतिपत्तिः कार्या। कुतः। 'दिने दिने' प्रत्यहं। 'निद्रायाः प्राक् ऊर्ध्वमपि' च निद्रारम्भावसानयोः। 'ब्रह्मानन्दे' 'पक्षपातः' स्नेहः अस्त्येव। यतः सर्वे निद्रादौ मृदुशय्यादि सम्पादयन्ति। तदवसाने च तं परित्यक्तुमशक्ताः तूष्णीमासते। 'तेन' कारणेन। 'अस्मिन्' आनन्दे 'कः' बुद्धिमान्। 'विवदेत?' न को ऽपीत्यर्थः।

इति। छान्दोग्ये सप्तमप्रपाठके सनत्कुमार-नारदसंवादे।

सुखं भगवो विजिज्ञास इति।

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति। खं. २ २

भूमैव सुखम्।

भूमात्वेव विजिज्ञासितव्यः इति।

भूमानं भगवो विजिज्ञास इति।

यत्र नान्यत्पश्यति नान्यत् शृणोति

नान्यद्विजानाति स भूमा।

अथ यत्रान्यत्पश्यति अन्यच्छृणोति

अन्यद्विजानाति तदल्पम्।

यो वै भूमा तदमृतम्।

अथ यदल्पं तन्मर्त्यम्।

स भगवः कस्मिन् प्रतिष्ठितः* इति।

---

* नारदः सनत्कुमारं पृच्छति। हे 'भगवः' भगवन् 'सुखं विजिज्ञास ज्ञातुमिच्छामि। इत्यभिमुखितायाह सनत्कुमारः। 'यो वै भूमा' महत् निरतिशयं बह्व इति पर्यायाः। तत्सुखम्। ततोऽर्वाक् सातिशयत्वादल्पम्। अतः तस्मिन् 'अल्पे' 'सुखं' 'नास्ति' अल्पस्याधिकतृष्णाहेतुत्वात्। तृष्णा च दुःखबीजम्। न हि दुःखबीजं सुखं दृष्टम् ज्वरादि लोके। अतो 'भूमैव सुखं' तृष्णादिदुःखबीजत्वासम्भवात्। 'भूमात्वेव विजिज्ञासितव्यः'। इति।

पुनरपि नारदः पृच्छति 'भूमानं भगवो विजिज्ञास इति' भूम्नो लक्षणमाह। 'यत्र' यस्मिन् भूम्नि तत्वे 'नान्यत्पश्यति' नान्यद्द्रष्टव्यमन्येन

स्वे महिम्नि इति।

इति। बृहदारण्यके।

प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयो ऽन्यस्मात् सर्वस्मात्।

अन्तरमन्तरं यदयमात्मा इति।

विज्ञानमानन्दं ब्रह्म।

इत्यादिश्रुतिभ्यस्तस्य परमानन्दरूपत्वोपदेशात्। न च—तर्हि कथं सुखमुत्पन्नं नष्टं इति प्रतीतिः—इति वाच्यम्। तस्य नित्यत्वे ऽपि पूर्वोक्तधर्मादिजन्यान्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्तिविनाशोपचारात्। अज्ञानमात्रव्यवहितस्य तस्य च अप्राप्तस्येव वक्ष्यमाण-महावाक्यार्थज्ञानमात्रादेव अविद्यानिवृत्त्या प्राप्तिरिव भवतीति तदुद्देशेन मुमुक्षुप्रवृत्तिसम्भव इति तु पूर्वमेव प्रदर्शितम्।

---

करणेन द्रष्टः अन्यो विभक्तो द्रष्टव्यादन्यत्पश्यति। तथा 'नान्यत् शृणोति' नाम-रूपयोरेव अन्तर्भावात् विषयभेदस्य। तद्ग्राहकयोरेवेह दर्शन-श्रवणयोर्ग्रहणम्। तथा 'नान्यद्विजानाति' एवं लक्षणो यः 'स भूमा'। 'अथ यत्र' अविद्याविषये 'अन्यत् पश्यति अन्यत् शृणोति अन्यत् विजानाति' अन्यः अन्येन अन्यत् पश्यति शृणोति विजानाति च तदल्पं अविद्याकाल-भावि इत्यर्थः। यथा स्वप्नदृश्यं वस्तु प्राक् प्रतिबोधात् तत्कालभावीति तद्वत्।

'यो वै भूमा तत् अमृतम्'। 'यत् अल्पं' 'तत् मर्त्यम्' तत्कालभावि-त्वात् स्वप्नवस्तुवदेव। तर्हि एवं लक्षणो भूमा 'कस्मिन् प्रतिष्ठित?' इति नारदः पृच्छति। सनत्कुमार आह। 'स्वे महिम्नि इति' आत्मीये माहात्म्ये विभूतौ भूमा प्रतिष्ठितः इति।

किञ्च। विषयसुखमपि न स्वरूपसुखादतिरिच्यते। विषय-प्राप्तौ सत्यां अन्तर्मुखे मनसि स्वरूपसुखस्यैव प्रतिबिम्बनात्। स्वाभिमुखे दर्पणे मुखप्रतिबिम्बवत्। तदुक्तम्।

विषयेष्वपि लब्धेषु तदिच्छोपरमे सति।
अन्तर्मुखमनोवृत्तौ आनन्दः प्रतिबिम्बति॥

इति। स्मृतयश्च।

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते*॥

* 'यं' आत्मलाभं। 'लब्ध्वा' प्राप्य। च 'अपरं लाभं' 'ततः' तस्मात्। 'अधिकं' न 'मन्यते' तस्यैव निरतिशयत्वात्। 'यस्मिंश्च स्थितः' 'गुरुणा' महतापि दुःखेन शस्त्रनिपातादिलक्षणेन 'न विचाल्यते' नाभिभूयते। एतेन अनिष्टनिवृत्तिफलेनापि योगस्य लक्षणमुक्तम्।

आत्मसाक्षात्कार एव परमो लाभः। तल्लब्धेः असाधारणकारणं योगसिद्धिरपि परमलाभ एव इति मत्वा 'यं' इति कार्यकारणयोरभेदेन निर्देशः। सदा आनन्दैकरसस्य आत्मनः उपलब्धेः परमकारणं यं निर्विकल्पकसमाधिं तत्कार्यं आत्मलाभं च 'लब्ध्वा'। योगारूढो यतिः। क्वचित् प्राप्तं 'अपरं' अनात्मविषयकं 'लाभं' 'ततः' सर्वस्य ब्रह्ममात्रत्वोपलम्भक-निर्विकल्पकसमाधेः तत्फलात् आत्मलाभात् अधिकं उत्कृष्टं न मन्यते। आत्मव्यतिरिक्तस्य सर्वस्यापि पदार्थस्य मायिकत्वेन असत्त्वात् तुच्छत्वात् सोपद्रवत्वात् दुःखबीजत्वात् मिथ्यात्वात् च धर्मादिर्लाभं सन्तो न लाभाय मन्यन्ते इत्यर्थः। "आत्मलाभान्न परं विद्यते" इति स्मृत्यैव तदतिरिक्त-लाभस्य लाभत्वनिषेधात् नित्यनिरतिशयानन्दरूपस्य आत्मन एव लाभो लाभाय भवति। किञ्च। 'यस्मिन्' यस्यां अन्तःकरणपरिपाकविशेषा-वस्थायां स्थितः। बाह्यमाभ्यन्तरं च विस्मृत्य सद्भावापन्नया तत्त्वपूर्णा-नन्दैकरसब्रह्मरूपेण संस्थितो ब्रह्मविद् 'गुरुणा' खड्गपातादिना।

इत्यादि कोटिशः इति दिक्।

नन्वस्तु सुषुप्तौ स्वरूपसुखानुभवः परामर्शान्यथानुपपत्त्या। तथापि—दुःखमहमस्वाप्सं—इति परामर्शेन दुःखानुभवोऽपि दुर्वारः—इति चेत्। नैवम्। तदानीं दुःखसामग्र्यभावात्। न हि जागरेऽपि सामग्रीं विना दुःखमनुभूयते। आकस्मिकत्वापातात्। न च सुखेऽप्येवं प्रसङ्गः। तस्य आत्मरूपत्वेन नित्यत्वात्। शय्यादेरसमीचीनत्वे दुःखं-इत्युपचारात् तादृशप्रतीत्युपपत्तिः इति सङ्क्षेपः।

ननु—अहं सुखी—इत्यादौ स्रक्-चन्दनाद्याकारबुद्धिवृत्त्यभिव्यक्तसाक्षिचैतन्यस्यैव विषयत्वेन सुखरूपताङ्गीकारे-अहं दुःखी-इत्यादिप्रतीतावपि क्षुत्पिपासाद्याकारबुद्धिवृत्त्यभिव्यक्तचैतन्यस्यापि विषयत्वापत्त्या दुःखरूपता आत्माभिन्नस्यापि दुर्वारा। अथ—

नित्यं विज्ञानमानन्दं ब्रह्म।

इति श्रुतिबलात् सुखरूपत्वं ब्रह्मणः। न केवलं युक्त्यैव। तथा च दुःखरूपतया ग्राहकमानाभावेन न तद्रूपत्वम्—इति चेत्। सत्यम्। तथापि श्रुतावेव सुखरूपताप्रतिपादनवत् दुःखरूपत्वाप्रतिपादनबीजाभावेन उक्तापत्तितादवस्थ्यात्—इति चेत्। अत्रोच्यते। मोक्षो हि तावत्सर्वपुरुषधौरेयाभिलषितः। स च विवक्षितविवेकेन अविद्यानिवृत्त्युपलक्षितसुखस्वरूप एव। तस्यैव अन्येच्छाऽनधीनेच्छाविषयत्वेन पुरुषार्थरूपत्वात्। सुखं च आत्मैव। ब्रह्मसमानस्वभावत्वात् यन्नैवं तन्नैवम्। निरुपधि*प्रेमास्पदत्वात्मकतत्त्व-

---

* 'निरुपधि' उपाधिरेवोपधिः निर्गतः उपधिर्यस्मात् तन्निरुपधि।

भावरूपात्मनो दुःखभेदो ब्रह्मणो ऽपि दुर्वारः। अन्यथा दुःखरूपत्वेन आत्मनो निरुपधिद्वेषास्पदत्वेन हेयत्वापत्त्या मुमुक्षुप्रवृत्तेरसम्भवापत्तिः स्यात्। तस्मात् श्रुतौ सुखरूपत्वमेव अङ्गीकृतम्। न अन्यस्वरूपत्वम्। इति सङ्क्षेपः।

एतेन सुखसमवायित्वं प्रेमास्पदत्वप्रयोजकं इति वदन्तो ऽपि भ्रान्ता एव। दुःखसमवायित्वेन निरुपधिद्वेषास्पदत्वापत्तेः। दुःखस्वरूपस्य सुखसमवायित्वासम्भवात् च। दुःखाभावस्य च न स्वतः पुरुषार्थत्वम्। किन्तु सुखव्यापकत्वेनैव—इति प्रतिपादितं प्राक्। अत एव आत्मनः सुखरूपत्वे मानाभावेन कथं ब्रह्मसमानस्वभावत्वलिङ्गकात्माऽभेदानुमितिः? इत्यादि वल्गितमप्यपास्तम्। सर्वज्ञात्मगुरुभिश्च स्पष्टतया प्रतिपादनात् च। तथा हि।

प्रेमा*नुपाधिरसुखात्मनि नोपलब्धः।
सप्रत्यगात्मनि कृमेरपि नित्यसिद्धः॥
प्रेयः श्रुतेरपि ततः सुखतानुमानम्।
नैय्यायिको ऽपि† न दृगात्मनि निह्नुवीते॥
सर्वं यदर्थमिह वस्तु यदस्ति किञ्चित्।
पारार्थ्यमुज्झति च यन्निजसत्तयैव॥
तद्वर्णयन्ति हि सुखं सुखलक्षणज्ञाः।
तत्प्रत्यगात्मनि समं सुखतास्य तस्मात्॥

---

* 'अनुपाधि प्रेम' अन्येच्छा ऽनधीनेच्छाविषयत्वम्।

† 'अपि' शब्दात् किमुत अनुमानदुर्बलो मीमांसक इत्यर्थः

प्राज्ञे सुखं समनुभूय समुत्थितः सन्।
सर्वप्रकारविषयप्रतिपत्तिशून्ये॥
'सुप्तो ऽहमत्र सुख'मित्यनुसन्दधानः।
सर्वो ऽपि जन्तुरवगच्छति तस्य सौख्यम्॥

इति। ननु—आत्मा सुखस्वरूपः। अन्येच्छानधीनेच्छाविषयत्वात्। यन्नैवम्। न तदेवम्। यथा दुःखम्—इत्यनुमाने दुःखाभावत्वस्यैव इच्छाविषयतावच्छेदकस्य सुखभेदसाधनत्ववत् आत्मसम्बन्धित्वस्यापि शत्रुसुखसाधारणेच्छाविशेषविषयताव्यावर्तकस्य आत्मभेदसाधकत्वात्। आत्मनश्च "मा न भूवम्" इत्यादिपञ्चदश्युक्त*प्रीतिविषयतासुखसाधनत्वेन पुत्रभार्यादिवदस्तु। दुःखाभा-

---

* यथा पञ्चदश्यां तत्त्वविवेकप्रकरणे संविदो नित्यत्वं स्वप्रकाशत्वं चोक्त्वा—

इयमात्मा परानन्दः परप्रेमास्पदं यतः।
मा न भूवं हि भूयासं—इति प्रेमात्मनीक्ष्यते॥

इत्युक्तम्। अत्रायं प्रयोगः। 'इयं संवित्' 'आत्मा' भवितुमर्हति। नित्यत्वे सति स्वप्रकाशत्वात्। यन्नैवं न तदेवम् यथा घटः—इति आत्मनो नित्यसंविद्रूपत्वप्रसाधनेन सत्यत्वमपि साधितं भवति। नित्यत्वातिरिक्तसत्यत्वाभावात्।

"नित्यत्वं सत्यत्वं तत् यस्यास्ति तन्नित्यसत्यम्"।

इति वाचस्पतिमिश्रैरुक्तत्वात्। आत्मनः आनन्दरूपत्वं साधयति। 'परानन्दः' इति। अत्र आत्मेत्यनुषज्यते। परश्चासौ आनन्दश्चेति परानन्दः। निरतिशयसुखस्वरूप इत्यर्थः। 'यतः' 'परप्रेमास्पदं' परस्य निरतिशयस्य प्रेम्णः स्नेहस्य आस्पदं विषयः। अत्रेदमनुमानम्। आत्मा

वस्य भिन्नत्वे ऽपि स्वत इच्छाविषयत्वात् आत्मन्यपि सुखभेदे ऽप्यस्तु । तथाच न पूर्वोक्तानुमानादिभिः सुखरूपतासिद्धिः । श्रुतिरपि—

तदेत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयो ऽन्यस्मात् ।

इत्यादि पुत्राद्यपेक्षया सुखविशेषसाधनत्वेन प्रेयस्त्वं बोधयन्ती न आत्मनः सुखरूपतां साधयति । तस्मात् न समानस्वभावत्व-लिङ्गकाऽभेदानुमिती—इति चेत् । अत्र वदन्ति ।

तत्र चतुर्धा हि जगति पदार्थव्यवस्थितिः । प्रेयान् प्रियः

---

परमानन्दरूपः । परप्रेमास्पदत्वात् । यः परमानन्दरूपो न भवति नासौ परप्रेमास्पदमपि यथा घटः । तथा च अयं परप्रेमास्पदं न भवति इति न । तस्मात् परमानन्दरूपो न भवति इति न । ननु—आत्मनि-धिङ् माम्—इति द्वेषस्य उपलभ्यमानत्वात् प्रेमास्पदत्वमेवासिद्धम् । कुतः पर-प्रेमास्पदत्वं ?—इति चेत् मैवम् । तस्य दुःखसम्बन्धनिमित्तकत्वेन अन्यथा-सिद्धत्वात् प्रेम्णस्य आत्मनि अनुभवसिद्धत्वात् । 'हि' यस्मात् कारणात् । 'आत्मनि' विषये । 'मा न भूवम्' अहं मा भूवं इति 'न' । अपि तु 'भूयासं' 'इति प्रेम ईक्ष्यते' मम असत्त्वं कदापि माभूत् किन्तु । सदा सत्त्वमेव मम भूयात् इति एवं विधं प्रेम सर्वैरनुभूयते । अतो नासिद्धिः ।

ननु—माभूत् स्वरूपासिद्धिः । प्रेम्णः परत्वे मानाभावात् हेतोर्विशेषणा-सिद्धिः स्यादेव—इति चेत् । न । तस्य आत्मार्थत्वात् । 'तत् प्रेम' 'अन्यत्र' स्वातिरिक्ते पुत्रादौ 'आत्मार्थं' तेषां आत्मशेषत्वनिमित्तकमेव न स्वाभा-विकम् । एवं आत्मनि विद्यमानं प्रेम अन्यार्थं न आत्मनः अन्यशेषत्व-निमित्तकं न भवति । अतः निरुपाधिकत्वात् तत् परमं । तेन आत्मनः परमानन्दता निरतिशयसुखरूपत्वं सिद्धं भवति । इत्यलमप्रसक्तेन ।

द्वेष्यः उपेक्ष्यश्चेति। तत्र तावत् न उपेक्ष्यः लोष्टादिवत्। नापि द्वेष्यः व्याघ्रादिवत्। नापि प्रियः सुखपदार्थः भार्यादिवत्। स्वतः पुरुषार्थत्वानापत्तेः। न च—इष्टापत्तिः—इति वाच्यम्। अन्यस्यापि उपकार्यत्वापत्तेः। तथात्वे ऽपि वा कदाचिदिच्छाविषयो ऽपि न स्यात्। अतो न प्रियपदार्थान्तर्भावः। किन्तु। प्रेय एव। आत्मनो ऽपि न सुखसाधनत्वेन प्रियत्वम्। अन्यस्याप्युपकार्यत्वापत्तेः इति। तस्मात् आत्मापि प्रेयानेव। इति सिद्धं समानस्वभावत्वमिति न को ऽपि दोषः। तदुक्तम्।

अहमेव सुखं नान्यदन्यच्चेन्नैव तत्सुखम्।
अमदर्थं* न हि प्रेयो मदर्थं† न स्वतः प्रियम्॥

इति। अतएव श्रुतावपि प्रेयः शब्देनैव उल्लेखः, न अन्यथा। अपुरुषार्थत्वापत्तेः।

ननु—एवं शत्रुसुखे ऽपि इच्छा स्यात्। सुखत्वस्य तत्रापि सत्त्वात्—इति चेत्। भ्रान्तोऽसि। सुखत्वेन इष्टापत्तेः शत्रुसुखत्वादिकं तु न इच्छाविषयतावच्छेदकं—इत्यादेरुक्तत्वात्। अथैवं नापादयामो वयम्। किन्तु। किं तदभावप्रयोजकम्? इति पृच्छामः—इति चेत्। शृणु। स्वरूपसुखस्य स्वतः पुरुषार्थरूपत्वेन प्रेयस्त्वादस्यैव तथात्वम्। वृत्त्युपरक्तस्य तु न इच्छाविषयत्वम्। द्वेष्यसम्बन्धित्वेन द्वेष्योपरक्तत्वात् द्वेष्यत्वादिवृत्तौ च न सुखत्वम्। किन्तु। सुखा-

---

* 'अमदर्थं' अनात्मसम्बन्धि इति चेत् न प्रेयः भवति।

† 'मदर्थं' आत्मसम्बन्धि चेदपि स्वतः प्रियं न, अपि तु आत्मसम्बन्धेनैव इत्याशयः।

वच्छेदकत्वात् सुखत्वोपचार इति स्वत इच्छाविषयत्वाभावे ऽपि न क्षतिः। यदप्युक्तं—दुःखाभाववदेव आत्मनो ऽपि प्रेमविषयत्वं—इति तदप्यसिद्धमेव। दुःखाभावस्यापि सुखविशेषत्वेनैव पुरुषार्थत्वाङ्गीकारात्। ननु—एवमपि-अहं सुखी—इत्यादिप्रत्ययात्मकबाधक[1]-बलात् उक्तानुमानप्रवृत्तिनिरासः—इति चेत्। न। तत्प्रतीतेर्भ्रान्तत्वात्। बाधाभावात् न भ्रमत्वं—इति चेत्। सत्यम्। प्रात्यक्षिकबाधाभावे ऽपि भिन्नविषयत्वबलप्रवृत्तानुमान-शाब्दप्रतीत्योः बाधात्मकयोः सत्त्वात्।

तथा हि। अहम्पदार्थः सुखत्वसुखभेदान्यतराश्रयः। आत्मत्वात्। यत् नैवम्। न तदेवम्। इति विरुद्धोभयसाध्यकानुमितौ जीवस्य सुखत्वाश्रयत्वे लाघवम्—इति तर्कबलात् वेदान्त्यभिमतसाध्यसिद्धिरिति सिद्ध्यति। प्रतीतेर्भ्रमत्वमिति प्रेमास्पदत्वानुमानमपि सुखरूपतासाधने निरपवादमेव। एवं ज्ञानस्वरूपतायामपि ऊह्यम्। इति दिक्।

अस्तु वा अवस्थात्रयस्यापि त्रैविध्याङ्गीकारेण सुषुप्तावपि दुःखानुभवः। तथा हि। प्रमाज्ञानं जाग्रज्जाग्रत्। शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः। श्रमादिनास्तब्धीभावो जाग्रत्सुषुप्तिः। एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत्। स्वप्ने ऽपि स्वप्नो मया दृष्ट—इति स्वप्नस्वप्नः। स्वप्नदशायां च यत्किञ्चिदनुभूय जाग्रद्दशायां च तत्कथयितुं न शक्यते तत्स्वप्नसुषुप्तिः। एवं सुषुप्त्यवस्थायामपि सात्त्विकी

---

[1] 'बाधबलात्' इति क० पुस्तके।

या सुखाकारा वृत्तिः सा सुषुप्तिजाग्रत् । तदनन्तरं सुखमहमस्वाप्सं—इति परामर्शः । तत्रैव या राजसी वृत्तिः सा सुषुप्तिस्वप्नः । तदनन्तरं—दुःखमहमस्वाप्सं—इति परामर्शोपपत्तिः । एवं तत्रैव या तामसी वृत्तिः सा सुषुप्तिसुषुप्तिः । तदनन्तरं—गाढं मूढो ऽहमासं—इति परामर्श—इति । अथ वा एकैकस्यामप्यवस्थायां चातुर्विध्याङ्गीकारेणापि तत्सिद्धिरस्तु । तापिनीयानुसारात् ।

तथा हि । जाग्रज्जाग्रत् तत्स्वप्नः तत्सुषुप्तिः तत्तुर्यश्च । एवं स्वप्नजाग्रत् तत्स्वप्नः तत्सुषुप्तिः स्वप्नतुर्यश्च । सुषुप्तिजाग्रत् तत्स्वप्नः तत्सुषुप्तिः सुषुप्तितुर्यश्च । एवं तुर्यात्मा ऽपि चतुर्विधः । जाग्रत्तुर्यः स्वप्नतुर्यः सुषुप्तितुर्यः तुर्यतुर्यश्च इति षोड़शावस्था भवन्ति । तत्र जागरजागरः करणैर्विषयव्यवहारः । मनोरथः तत्स्वप्नः । स्तब्धीभावो जाग्रत्सुषुप्तिः । एतेषामनुभवो जाग्रत्तुर्यः । एवं स्वप्ने ऽपि कल्पितैरिन्द्रियैः कल्पितविषयेषु अभिलपनव्यवहारः स्वप्नजाग्रत् । स्वप्ने मानसचिन्तनं स्वप्नस्वप्नः । तत्रैव इतिकर्तव्यताभावः स्वप्नसुषुप्तिः । एतत्सर्वानुभवः स्वप्नतुर्यः । एवं स्वप्नसुषुप्त्योः सन्धिः सुषुप्तिजागरः । प्रलापस्तत्स्वप्नः । गाढ़निद्रा तत्सुषुप्तिः । सुखानुभवः सुषुप्तितुर्यः । तुर्यात्मापि जाग्रत्तुर्य इत्यादि वा । गुरु-वेदान्तवाक्येभ्यः—अवस्थात्रयं मायामात्रं, अहन्तु अवस्थात्रयसाक्षी नित्यमुक्तः—इत्यनुभवेन मुक्ताभिमानो वा तुर्यजागरः । सकृत् श्रवणेन—अहं साक्षी न वा ?—इति संशयः तुर्यस्वप्नः । साक्षिविषयकविचार-ज्ञानयोरभावः तुर्यसुषुप्तिः । पूर्वोक्तवासनात्रयानन्तरं निष्प्रपञ्चब्रह्मस्वरूपावस्थानरूपसाक्षात्कारः तुर्यतुर्यः ।

"ईश्वरग्रासः तुर्यः"।

इति श्रुतेः। अत्र च तापिनीया[1]ः श्रुतयः प्रमाणम्। तत्रैव चातुर्विध्यप्रतिपादनात्। इति दिक्।

## इति विस्तरेण सुषुप्तिनिरूपणम्।

---

ननु—भवत्वेवं जीवस्य व्यवहारः तथापि अवस्थात्रयभासको जीवादतिरिक्तः असङ्गोदासीनो ऽयं साक्षी किं ब्रह्मकोटिः? किं वा ईश्वरकोटिः? यद्वा तदुभयाभिन्नकोटिः? उत जीवकोटिः?—इति चेत्। उच्यते। मतभेदेन कोटिचतुष्टयमपि सम्यगेव। तथा हि। तत्त्वशुद्धिकृद्भिः—यथा-इदं रजतं—इति भ्रमस्थले वस्तुतः शुक्तिकोट्यन्तर्गते ऽपि इदमंशः प्रतिभासतो रजतकोटिः। तथा ब्रह्मकोटिरेव साक्षी प्रतिभासतो जीवकोटिः—इति जीवस्य सुखदुःखव्यवहारे तस्योपयोगः प्रतिपादितः इति।

तत्त्वप्रदीपिकाकृद्भिरपि-मायाशबले सगुणे परमेश्वरे-केवलो निर्गुण-इति विशेषणानुपपत्तेः सर्वप्रत्यग्भूतं विशुद्धं ब्रह्मैव जीवाभेदेन प्रतिपादितः इति।

वेदान्तकौमुदीकृद्भिस्तु-वार्तिकमतानुसारेण—

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥

इति देवलादिश्रुतेः परमेश्वरस्यैव रूपभेदः कश्चित् जीव-

---

१ 'तापनीयाः' इति क॰ ग॰ पुस्तकयोः।

प्रवृत्तिनिवृत्त्योरनुमन्ता स्वयमुदासीनः साक्षी नाम। स च कारणत्वादिधर्मानास्पदत्वादपरोक्षो जीवगतं अज्ञानाद्यवभासयंश्च जीवस्य अन्तरङ्गं वर्णितं इति।

एतदुभयभिन्नस्तु कूटस्थदीपे। देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं स्वावच्छेदकस्य देहद्वयस्य साक्षादीक्षणात् निर्विकारत्वाच्च साक्षीत्युच्यते। लोके ऽपि औदासिन्य-बोधाभ्यामेव साक्षित्वं प्रसिद्धम्। यद्यपि जीवस्य वृत्तयः सन्ति देहद्वयभासिकाः तथापि अन्तरालकाले सद्वृत्त्यभावैः कूटस्थचैतन्येनैव भास्यते। अतएव अहङ्कारादीनां सर्वदा प्रकाशसंसर्गात् संशयाद्यगोचरत्वम्[1]। अन्यज्ञानधाराकालीनाहङ्कारस्य—एतावन्तं कालं इदमहं पश्यन्नेवासं—इत्यनुसन्धानं च। न च—कूटस्थप्रकाशिते कथं जीवस्य व्यवहारस्तत्यादिकं—इति वाच्यम्। अन्योन्याध्यासेन जीवैकत्वापत्त्या कूटस्थस्य जीवान्तरङ्गत्वात्। न च—जीवचैतन्यमेव साक्षी भवतु किं कूटस्थेन?—इति वाच्यम्। लौकिक-वैदिकव्यवहारकर्तुः तस्य औदासिन्यद्रष्टृत्वासम्भवेन—

"साक्षी चेता केवलो निर्गुणश्च"।

इति श्रुत्युक्तसाक्षित्वायोगात्।

"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति"।

इति कर्मफलभोक्तुः जीवादुदासीनप्रकाशरूपसाक्षिणः पृथगाम्नानात् च। तदुक्तम्।

नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम्।
दीपयेदविशेषेण तदभावे ऽपि दीप्यते॥

---

१ 'प्रकाशाद्यगोचरत्वम्' इति ख० ग० पुस्तकयोः।

अहङ्कारं धियं साक्षी विषयानपि भासयेत्।
अहङ्काराद्यभावे ऽपि स्वयं भात्येव* पूर्ववत्॥
निरन्तरं भासमाने कूटस्थे ज्ञप्तिरूपतः।
तद्भासा भासमानेयं बुद्धिर्नृत्यत्यनेकधा॥

---

* अविशेषेण प्रभ्वादिविषमविशेषावभासनाय वृद्ध्यादिविकारमन्तरेण इति यावत्। एष दृष्टान्तः। इयमेव दार्ष्टान्तिके योजयति। सुषुप्त्यादौ अहङ्काराद्यभावे ऽपि तत्साक्षितया भात्येवेत्यर्थः।

ननु—प्रकाशरूपाया बुद्धेरेव अहङ्कारादिसर्ववस्त्ववभासकत्वसम्भवात् किं तदतिरिक्तसाक्षिकल्पनया?—इति चेत्। उच्यते। कूटस्थे निर्विकारे साक्षिणि ज्ञप्तिरूपतः स्वप्रकाशचैतन्यतया निरन्तरं भासमाने सदा स्फुरति सति। इयं बुद्धिः तद्भासा तस्य साक्षिणः स्वरूपचैतन्येन। भासमाना प्रकाश्यमानैव। 'अनेकधा'घटो ऽयं पटो ऽयं इत्यादिज्ञानाकारेण 'नृत्यति' विक्रीयते। अयं भावः। यतो बुद्धेर्विकारितया जड़त्वात् स्वतः स्फूर्तिराहित्यम्। अतः तदतिरिक्तः सर्वावभासकः साक्षी अभ्युपगन्तव्यः। इति।

अहङ्कारो ऽत्र प्रभुः। विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वात् नृत्याभिमानिप्रभुतुल्यत्वमहङ्कारस्य युक्तमेव। परिसरवर्तित्वे ऽपि 'विषयाणां' तद्राहित्यात् सभ्यपुरुषसाम्यम्। नानाविधविकारवत्त्वात् नर्तकीसाम्यम् 'बुद्धेः'। धीविक्रियायां अनुकूलव्यापारवत्त्वात् तालादिधारिसमानत्वं 'इन्द्रियाणां'। एतत्सर्वावभासकत्वात् साक्षिणः दीपसादृश्यमस्ति इति द्रष्टव्यम्।

ननु—साक्षिणो ऽपि अहङ्काराद्यवभासकत्वे तेन तेन सम्बन्धापगमागमविकारवत्त्वं स्यादित्याह। दीपो यथा गमनादिविकारशून्यः स्वदेशे ऽवस्थित एव सन् स्वसन्निहिताखिलपदार्थान् अवभासयति एवं साक्ष्यपि इति भावः।

ननु—साक्षिणः बहिरन्तरवभासकत्वाभिधानमनुपपन्नम्।

"अपूर्वमनपरमनन्तरमबाह्यम्"।

इति श्रुत्या तस्य बाह्यान्तरविभागाभिधानात्—इति चेत्। आह। बहिरिति। कस्य बाह्यत्वं कस्य चान्तरत्वं? इत्यत आह। विषया इति।

अहङ्कारः प्रभुः सभ्या विषया नर्तकी मतिः ।
तालादिधारीण्यक्षाणि दीपः साक्ष्यवभासकः ॥
स्वस्थानसंस्थितो दीपः सर्वतो भासयेद्यथा ।
स्थिरस्थायी तथा साक्षी बहिरन्तः प्रकाशयेत् ॥
बहिरन्तर्विभागो ऽयं देहापेक्षो न साक्षिणि ।
विषया बाह्यदेशस्था देहस्यान्तरहङ्कृतिः ॥

इति । नाटकदीपे च ।

यद्यद्रूपादि कल्पेत बुद्ध्या तत्तत्प्रकाशयन् ।
तस्य तस्य भवेत्साक्षी स्वतो वाग्बुद्ध्यगोचरः ॥
कथं तादृक्त्वया ग्राह्यं—इति चेन्नैव गृह्यताम् ।
सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते ॥

इति । एवं जीवाद्विवेचितो ऽयं साक्षी न ब्रह्मकोटिः । किन्तु अस्पृष्टजीवेश्वरविभागचैतन्यम् । इति दिक् ।

एकजीववादिनस्तु । अविद्योपाधिक एव साक्षात् द्रष्टृत्वात्साक्षी । लोके ऽपि हि अकर्तृत्वे सति द्रष्टृत्वं साक्षित्वं प्रसिद्धम् । तच्च असङ्गोदासीनप्रकाशरूपे जीव एव सम्भवति—इति जीवस्य अन्तःकरणतादात्म्यापत्त्या कर्तृत्वभाक्त्वे ऽपि स्वयमुदासीनत्वात् । "एको देव"[1] इति मन्त्रस्तु ब्रह्मणो जीवाभिप्रायेण साक्षित्वप्रतिपादकः । "द्वासुपर्णे"ति मन्त्रस्तु गुहाधिकरणन्यायेन ब्रह्मजीवोभयपरः । गुहाधिकरणभाष्योदाहृतपैङ्गिरहस्यब्राह्मणव्याख्यातेन

१ 'एको जीवः' इति ग० पुस्तके ।

प्रकारेण जीवान्तःकरणोभयाभिप्रायेण इति न कश्चिद्विरोधः—इति वदन्ति।

ननु—उक्तरूपस्य साक्षिणः चैतन्यमात्रावरकेण अज्ञानेन आवृतत्वात् कथमावृतेन अविद्याहङ्कारादिभानम्? तदभावे चैतन्यमात्रावरकाज्ञानं इति सिद्धान्तविरोधः। तदुक्तम्।

यत्प्रसादादविद्यादि स्फुरत्येव दिवानिशम्।
तमप्यपह्नुते ऽविद्या नाज्ञानस्यास्ति दुःकरम्॥

—इति चेत्। सत्यम्। अविद्या—राहुवत् स्वावृतप्रकाशप्रकाश्या—इति केचित्। अथ वा अविद्यान्तःकरणतद्धर्मावभासकं साक्षिचैतन्यं विहायैव अज्ञानं चैतन्यमावृणोति—इत्यनुभवानुसारेण कल्पनात् न कश्चित् दोषः। अतएव सर्वदा तेषां अनावृतसाक्षिप्रकाशसंसर्गात् अज्ञानविपरीतज्ञानसंशयाद्यगोचरत्वं सम्भवति।

ननु—साक्षिचैतन्यस्य अनावृतत्वे तत्स्वरूपभूतस्य आनन्दस्यापि प्रकाशापत्तिः—इति चेत्। इष्टापत्तिः। आनन्दरूपप्रकाशप्रयुक्तस्य आत्मनि निरुपाधिप्रेम्णो ऽदर्शनात्। तदुक्तं वार्तिके।

वित्तात्पुत्रः प्रियः पुत्रात् पिण्डः पिण्डात् तथेन्द्रियम्।
इन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा परः प्रियः॥

इति।

"भासत एव परमप्रेमास्पदत्वलक्षणं सुखम्"।

इति विवरणात् च इति। विस्तरस्तु स्वरूपप्रकरणे। इति दिक्।

## इति सङ्क्षेपेण साक्षिप्रकरणम्।

एतावता दृक्पदार्थो निरूपितः। अथ सङ्क्षेपेण दृश्यपदार्थः निरूप्यते। तथा हि। दृश्यमपि त्रिविधम्। अव्याकृताऽमूर्त-मूर्त-भेदात्। तत्र अव्याकृतं नाम ईश्वरोपाधिः पूर्वोक्ता माया वक्ष्यमाणानन्दमयकोशसमष्टिः। सा च माया ईश्वरचैतन्यतादात्म्यापन्न-अमूर्त-मूर्तप्रपञ्चबीजरूपा भवति। सा पुनः पूर्वपूर्वजीवकर्मप्रयुक्त-संस्कारवती प्रथमं शब्दवदाकाशरूपेण परिणमते। ततः शब्द-स्पर्शवद्वायुरूपेण। ततः शब्द-स्पर्श-रूपवत्तेजोरूपेण। ततः शब्द-स्पर्श-रूपरसवज्जलरूपेण। ततः शब्द-स्पर्श-रूप-रस-गन्धवत्पृथ्वीरूपेण परिणमते। ततोऽपञ्चीकृतानि सूक्ष्माणि पञ्चमहाभूतानि स्वकारणमायागुणत्रयसंयुक्तानि आकाशादिसात्त्विकांशेभ्यः व्यस्तेभ्यः क्रमेण श्रोत्र-त्वक्-चक्षुर्जिह्वा-घ्राणाख्यानि पञ्च ज्ञानेन्द्रियाण्युत्पद्यन्ते। दिग्वातार्क-वरुणाश्विनीकुमारैरनुगृहीतानि शब्द-स्पर्श-रूप-रस-गन्ध-ग्राहकाणि भवन्ति। ततस्तेषामेव राजसांशेभ्यः व्यस्तेभ्यः क्रमात् वाक्-पाणि-पाद-पायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि भवन्ति। अग्नीन्द्र-विष्णु-मित्र-प्रजापतिभिरनुगृहीतानि वचनादान-गमन-विसर्गानन्दान्निर्वर्तयन्ति। तेषामेव मिलितेभ्यः सात्त्विकांशेभ्यः अन्तःकरणं जायते। तच्च सर्वाणि ज्ञानेन्द्रियाणि अनुगृह्णाति। तस्य मनो-बुद्ध्यहङ्कार-चित्ताख्याः चतस्रो वृत्तयः। चन्द्र-बृहस्पति-रुद्र-क्षेत्रज्ञाः अधिष्ठातारो देवाः। संशय-निश्चय-गर्व-स्मरणानि विषयीकुर्वन्ति। तथा तेषामेव राजसांशेभ्यः मिलितेभ्यः प्राणो जायते। स च कर्मेन्द्रियाणि अनुगृह्णाति। तस्य च प्राणाद्याः पञ्च वृत्तयः। तासु प्राणः श्वास-प्रश्वासौ करोति। अपानः अशित-पीतादेरधोनयनम्। व्यानो

बलसाध्यं भारोद्यमादि। उदानो देहादुत्क्रमणम्। समानो ऽशित-पीतादिसमीकरणम्। तदेतन्मौलिलालिङ्गममूर्ताख्यं इहलोक-पर-लोकयात्रानिर्वाहकं स्वोपाधिभूतस्य जीवचैतन्यस्य ब्रह्मज्ञानपर्यन्तं च स्थायि स्वीक्रियते। तदुक्तं आचार्यैः।

पञ्चप्राण-मनोबुद्धि-दशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥

इति। अत्र च मनसि अहङ्कारान्तर्भावः। बुद्धौ च चित्तस्य। अत्र च सुषुप्तौ अन्तःकरणस्य कर्तुः लयेऽपि प्राणव्यापारदर्शनात् भेदव्यपदेशाच्च अन्तःकरणादत्यन्तं भिन्न एव प्राणः पञ्चीकृतपञ्च-महाभूतकार्यः—इति केचित्। क्रियाशक्ति-ज्ञानशक्तिमदेकमेव जीवो-पाधिभूतं अपञ्चीकृतपञ्चमहाभूतकार्यं क्रियाशक्तिप्राधान्येन प्राण इति ज्ञानशक्तिप्राधान्येन च अन्तःकरणमिति व्यपदिश्यते—इत्यभियुक्ताः।

"स ईक्षां चक्रे, कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि"।
"कस्मिन् वा प्रतिष्ठिते प्रतिष्ठामि इति"।
"स प्राणमसृजत"।

इति श्रुतौ उत्क्रान्त्याद्युपाधित्वं प्राणस्य उक्तम्। तथा—

सधीः[१] स्वप्नो भूत्वा इमं लोकं अतिक्रामति।
मृत्योः रूपाणि ध्यायतीव लेलायतीव* ॥

---

१ 'स हि' इति क० ग० पुस्तकयोः।

---

* 'स' आत्मा 'हि' यस्मात् स्वप्नो भूत्वा स यया धिया समानः सा धीर्यद्यद्भवति तत्तदसावपि भवति च। अत उच्यते तस्माद्यदासौ 'स्वप्नो

इत्यादिश्रुतौ उत्क्रान्त्याद्युपाधित्वं बुद्धेरुक्तम्। स्वतन्त्रोपाधिभेदे च जीवभेदप्रसङ्गः। तस्मात् बुद्धि-प्राणयोरेकत्वेनैव उत्क्रान्त्याद्युपाधित्वं युक्तम्। भेदव्यपदेशस्य शक्तिभेदात्। सुषुप्तौ च ज्ञानशक्तिलये ऽपि क्रियाशक्तिभागदर्शनमेकत्वे ऽपि न विरुद्धं भवति। अनुभवसिद्धत्वात्, दृष्टिसृष्टिनये सर्वलये ऽपि प्राणव्यापारवत् शरीरस्य सुप्तो ऽयमित्येवं रूपेण परैः कल्पितत्वाच्च। तस्मात् उभयथापि उपदेशभेद उपपन्नः इति सङ्क्षेपः।

अथ एवं एतद्विरुद्धतया साङ्ख्यमतं प्रदर्श्य निराक्रियते। अत्र एवं साङ्ख्याः प्रवदन्ति। पुरुषस्य न वास्तवो बन्धः, किन्तु उपरागमात्रम्। प्रकृति-पुरुषविवेकात् च प्रकृतिधर्मभूतधर्मज्ञानवैराग्यैश्वर्य-अधर्माज्ञानावैराग्याऽनैश्वर्यरूपसुखदुःखहेतुभिरात्यन्तिकोपरागनिवृत्तिर्मोक्ष इति। अत्र इयं प्रक्रिया। स्थूलस्य देहस्य मरणकाले भोगाभावात् तदधिष्ठानभूतं लिङ्गशरीरं अन्तरा कल्पनीयम्। तच्च 'सप्तदशैकं लिङ्गम्'। तथा च। सर्गादौ समष्टिरूपमेकमेव। सर्गे तु पुरुषकर्मभेदात् हिरण्यगर्भोपाधिरूपं एकमेव।

---

भवति' स्वापवृत्तिं प्रतिपद्यते धीः तदा सो ऽपि स्वप्नवृत्तिं प्रतिपद्यते। यदा धीर्जिजागरिषति तदासावपि जागर्ति। अतः धियः स्वापवृत्त्याकारो भूत्वा इमं लोकं जागरितव्यवहारलक्षणकार्य-कारणसङ्घातात्मकं लौकिक-शास्त्रीयव्यवहारास्पदमतिक्रामति। विविक्तेन स्वेन आत्मज्योतिषा स्वप्नात्मिकां धीवृत्तिमवभासयन्नवतिष्ठते। तस्मात् स्वयं ज्योतिःस्वभाव एवासौ विशुद्धः सन् कर्तृ-क्रिया-कारकफलशून्यः परमार्थतो धीसादृश्यमेवोभयलोकसञ्चारादिसंव्यवहारभ्रान्तिहेतुः 'मृत्योरूपाणि' मृत्युः कर्माविद्यादिः। न तस्यान्यत् रूपम्। अतः कार्यकारणान्येवास्य रूपाणि। अतः तानि मृत्योरूपाणि अतिक्रामति क्रियाफलाश्रयाणि इति।

पितृलिङ्गदेहस्य अंशतः पुत्र-कन्यादिलिङ्गदेहरूपेण नानाभवनवत् तत्तद्व्यक्तिभेदेन अनेकं भवति इति। सूक्ष्मशरीरमाधाराधेयभावेन द्विविधम्। तत्र एकादश इन्द्रियाणि पञ्च तन्मात्राणि बुद्धिश्च इति सप्तदश अवगन्तव्याः। न तु प्राणपञ्चकमादाय। प्राणानां अन्तःकरणवृत्तिरूपत्वात्। अतः प्राणानामन्तःकरणरूपत्वेन लिङ्ग-शरीरप्रविष्टत्वे ऽपि न सङ्ख्यापूरकत्वमवगन्तव्यम्। सप्तदशशब्देन च सप्तदशावयवको राशिरेव। न तु अतिरिक्तावयवी वेदान्तसम्मतः।

"व्यक्तिभेदः कर्मविशेषात्"।

इति सूत्रेण व्यक्तिभेदोपपादनात्। अतिरिक्तधर्मिकल्पने गौर-वात् च। ननु—तस्यैव भोगायतनत्वे स्थूलदेहस्य कथं देहत्वम्? तत्र भोगाभावात्—इति चेत्। न। लिङ्गसम्बन्धात् तदधिष्ठानभूतस्य स्थूलदेहस्य तथात्वात्। एवं मातिवाहिके ऽपि तथात्वं अवगन्तव्यम् इति दिक्। एवं प्रमाद्याश्रयत्वमपि तस्यैव*। लिङ्गशरीरघटितान्तः-करणवृत्तेरेव प्रमाणत्वेन तज्जनितस्यापि तदाश्रितत्वात्। तथा च एवं प्रतिकर्मव्यवस्था।

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव नः।
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम्॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते।
साक्षाद्दर्शनरूपं च साक्षित्वं वक्ष्यते[१] स्वयम्†॥

---

१ 'वक्ष्यति' इति ख० पुस्तके।

---

* 'तस्यैव' लिङ्गशरीरस्यैवेत्यर्थः।

† साङ्ख्यभाष्यकृद्भिर्विज्ञानभिक्षुभिः विरचिताः सूत्रार्थसङ्ग्राहका इमे श्लोकाः।

अतः स्यात् कारणाभावात् वृत्तेः साक्ष्येव चेतनः ।

इति । अत्रायं निर्गलितोऽर्थः ।

इन्द्रियप्रणालिकया[1] अर्थसन्निकर्षात्[2] लिङ्गज्ञानादिना वा[3] बुद्धेरर्थाकारा वृत्तिः भवति । तत्र इन्द्रियसन्निकर्षजा प्रत्यक्षात्मिका इन्द्रियविशिष्टबुद्ध्याश्रिता । सा च [4]वृत्तिरर्थोपरक्ता* प्रतिबिम्बरूपेण पुरुषारूढ़ा सती भासते । पुरुषस्य अपरिणामितया बुद्धिवत् स्वतोऽर्थाकारत्वासम्भवात् । अर्थाकारताया एव अर्थग्रहणात्मकत्वात् । अन्यस्य च निर्वक्तुमशक्यत्वात् । न च—वृत्तेः पुरुषे प्रतिबिम्बनाभाव इति—वाच्यम् ।

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः[5] ।

इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥

इति† स्मृतेरेव प्रमाणत्वात् । एतेन पुरुषस्य सार्वदिकत्वेऽपि न

---

१ '०णालिकायां' इति ग. पुस्तके पाठः ।

२ 'सन्निकर्षेण' इति क० पुस्तके ।

३ '०ज्ञानादिना वादौ' इति ख० ग० पुस्तकयोः ।

४ 'बुद्धिरर्थोपरक्ता' इति क० पुस्तके ।

५ '०जातयः' इति ग. पुस्तके पाठः ।

---

* 'उपरक्ता' सम्बद्धेत्यर्थः ।

† भगवता पतञ्जलिनापि एवमेवोक्तम् । व्युत्थानदशायां पुरुषस्य बुद्धेश्च सारूप्यं भवतीति ।

वृत्तिसारूप्यमितरत्र [यो. पा. १ सू. ४]

इति । 'इतरत्र' व्युत्थाने चित्तेन सह द्रष्टुः 'वृत्तिसारूप्यं' इत्यर्थः । व्युत्थाने याः चित्तस्य वृत्तयो दीपस्य शिखा इव क्षयरूपा भङ्गुरा अवस्था-

सदा सर्वभानापत्तिः। स्वतो ऽसङ्गत्वेन अर्थाकारतांविना यथा-कथञ्चित्सम्बन्धमात्रेण अतीन्द्रियादौ अर्थग्रहणस्य बुद्धावनुपलब्धेः। पुरुषे च स्वबुद्धिवृत्तीनामेव प्रतिबिम्बसमर्पणसामर्थ्यं फलबलात् न त्वन्यथा। एतेन यत् वेदान्तिनो वर्णयन्ति—वृत्तिगतचैतन्यप्रति-बिम्बस्यैव वृत्तौ चैतन्यविषयतात्वात् वृत्तिप्रतिबिम्बस्यैव वृत्तिप्रका-शकत्वम्, इति चैतन्ये वृत्तिप्रतिबिम्बाङ्गीकारो व्यर्थः—इति तदपा-स्तम्। उक्तस्मृतिविरोधेन केवलतर्काप्रामाण्यात्। विनिगमकाभावेन अन्योन्यं वृत्ति-चैतन्ययोर्विषयतासम्बन्धस्वरूपत्वेन अन्योन्यप्रतिबिम्बा-ङ्गीकारात् च। बाह्यस्थले अर्थाकारताया एव विषयतारूपत्वेन अन्तरे ऽपि तत्तदर्थाकारताया एव विषयित्वाङ्गीकारौचित्यात् इति न को ऽपि दोषः। ननु—तथापि स्वस्वोपाधिवृत्तेरेव वृत्ति-

---

परिणामाः मूषानिषिक्तद्रुतताम्रवत् स्वसंयुक्तार्थाकाराः त्रिगुणकार्यत्वात् सुख-दुःखमोहाश्रयतया शान्त-घोर-मूढाख्या भवन्ति ताभिरविशिष्टा अविलक्षणा वृत्तयो यस्य पुरुषस्य स तथा। वृत्तिश्च गुणो न भवति। यथाह भगवान् साङ्ख्यसूत्रकारः कपिलाचार्यः।—

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पति।

इति। यद्यपि पुरुषश्चिन्मात्रो ऽविकारी तथापि बुद्धेः विषयाकार-वृत्तीनां यानि प्रतिबिम्बानि तान्येव पुरुषस्य वृत्तयः। न च—ताभिरवस्तु भूताभिः पुरुषस्य परिणामित्वं वाच्यम्। 'जपास्फटिकयोरिव नोपरागः। किन्त्वभिमान इति साङ्ख्यभाष्यकृद्भिरुक्तत्वात्। तस्मात् सुखदुःखमोह-गुणकवृत्तिसारूप्यात् व्युत्थाने चितिरपि दुःखादिमतीव भवति वृत्तिसा-रूप्यादिति दिक्।

चैतन्ययोरन्योन्यविषयतात्वसम्भवे अस्त्वमन्योन्यं प्रतिबिम्बाङ्गीकारेण —इति चेत्। न। वेदान्तिमते स्वत्वानिर्वचनात्।

तथा हि। स्वत्वं च स्ववृत्तिज्ञानविषयीभूतवृत्तिवासनावत्त्वमिति वाच्यम्। तथा च—विषयघटितत्वात् विषयतालक्षणस्य—इति आत्माश्रयः। तस्मादन्योन्यस्मिन् प्रतिबिम्ब एव अन्योन्यं विषयता इति युक्तमुत्पश्यामः। प्रतिबिम्बश्च स्वमते बुद्धेरेव परिणामविशेषो बिम्बाकारः। निरवयवस्थले तु शब्दवदवगन्तव्यः—इति चेत्। अत्रोच्यते।

यदुक्तं उपरागमात्रं बन्धः तन्निवृत्तिश्च मोक्षः इति तत् अस्मदिष्टमेव। परन्तु तव मते उपरागः किं—अयो दहति- इत्यादिवत्? आहो[1] अरुणःस्फटिक-इति वत् वा? एतदुभयातिरिक्तं वा? तत्र आद्याङ्गीकारे आवयोः समानयोगक्षेमेत्यलं आग्रहविग्रहेण। द्वितीयेऽपि उपाधिभूतजपाया आरुण्यपुरस्कारेण तादात्म्यप्रतीत्या आरुण्यस्य स्फटिकान्तर्वर्त्तित्वेन गृह्यमाणत्वरूपप्रतिबिम्बत्वं तु ममापि इष्टमेव। प्रतीयमानतादात्म्यस्य मममते ऽनिर्वचनीयत्वात्।

ननु—तव मते बिम्बस्यैव परिणामविशेषः प्रतिबिम्बो न तु अनिर्वचनीयं तादात्म्यं—इति चेत्। भ्रान्तो ऽसि। आरुण्यप्रतिबिम्बस्थले स्फटिकादौ आरुण्यरूपपरिणामविशेषोत्पत्तिस्वीकारे भ्रमकथैव उच्छिद्येत। अथ इष्टापत्तिरिति चेत्। न। अरुणस्फटिक इति विशेषदर्शनाद्युपयोगो ऽपि न स्यात्। तस्मान्न किञ्चिदेतत्।

---

१ 'अथवा' इति ख० पुस्तके।

नापि तृतीयः पक्षः । अप्रामाणिकत्वात् प्रकृतिपुरुषसंयोगानिर्वचनीयतादात्म्ययोश्च विचारतः संज्ञामात्रभेदात् । यदपि—

"सप्तदशैकं लिङ्गं" ।

इत्यादिना लिङ्गशरीरप्रक्रिया प्रदर्शिता सापीष्टैव । परन्तु तत्र इन्द्रियाणामाहङ्कारिकत्वं सूक्ष्मभूतपञ्चकस्य सङ्ख्यापूरकत्वं च न इति वदामः । किन्तु । प्राणादीनामेव । यथा च अनहङ्कारिकत्वं इन्द्रियाणां तथा व्यक्तमाकरे । दर्शितं चैतत् सृष्टिप्रक्रियायां[1] प्राक् । तथा च सूक्ष्मपञ्चमहाभूतानामेव इन्द्रियमनोबुद्ध्यादिकारणत्वात् न सूक्ष्मदेहगतसङ्ख्यापूरकत्वम् । कार्य-कारणयोः तादात्म्यात् । कार्याणां तु कार्यतावच्छेदकधर्मपुरस्कारेण कुण्डल मुकुटादिवद्भेदसत्त्वात् भवति सङ्ख्यापूरकत्वम् इति । तदुक्तम् ।

कार्यरूपेण नानात्वं अभेदः कारणात्मना ।
हेमात्मना यथा ऽभेदः कुण्डलाद्यात्मना भिदा ॥

इति । अन्यथा तत्रापि प्रधानमहत्त्वाद्यतिरेकेण सप्तदश इति सङ्ख्या विलीयेत । भेदेन वा कार्य-कारणयोः । तदप्रविष्टत्वे तु सत्कार्यवादे दीयतां जलाञ्जलिरिति । तस्मात् कार्य-कारणयोः तादात्म्ये ऽपि तेनैव रूपेण भेदांशस्यापि सत्त्वात् न तेन रूपेण पूरकत्वम् । किन्तु परस्परविजातीयकार्याणामेव । वैजात्यं च अन्तःकरण-प्राणयोः । सत्व रजोभ्यामारब्धत्वात् । अत एव तत्तत्कार्यवैचित्र्यमप्युपपद्यते । अन्यथा इन्द्रियाणामपि अन्तःकरणवृत्तिभेदत्वापत्त्या सप्तदशेति तवापि सिद्धान्तो भज्येत ।

---

१ 'प्रकरणे' इति ख. पुस्तके ।

अथ—एकोपादानकत्वेन ऐक्यं न ब्रूमो वयम् । अहङ्कारोपादानकत्वेन सर्वस्यापि ऐक्यापत्तेः । किन्तु फलभेदेन—इति चेत् । अतोऽतिबुद्धिकौशलमायुष्मतो यदसिद्धमसिद्धेन साध्यते । यतः फलैकस्यापि आपाद्यमानत्वात् । मन्मते तु इन्द्रियाणां प्रत्येकं विजातीयभूतारब्धत्वात्, विजातीयगुणारभ्यत्वात् च, समुदितगुणभूताद्यारभ्यत्वात् च वैजात्यं—इति न कोऽपि दोषः । घटादावपि सामग्रीभेदात् भेद इति नैयायिक-वैशेषिकोक्तेश्च ।

आस्तां वा फलभेदात् भेदः । तथापि सूक्ष्मभूतानां साक्षाद्विजातीयफलाजनकत्वात् न तद्गतसङ्ख्यापूरकत्वम् । तथापि प्राणवृत्तीनां एकोपादानकत्वेन ऐक्यमस्ति—इति चेत् । शृणु । प्राणत्वेन ऐक्यत्वेऽपि तत्तद्देशावच्छिन्नत्वेन तत्तद्विजातीयकार्यजनकत्वलक्षणपरस्परविरुद्धलक्षणधर्माध्यासात् भेदः सिद्ध्यत्येव । अतएव अन्तःकरणपरिणामरूपयोः मनोबुद्ध्योरेव भेदो महान् इति तयोरेव गणना । न चित्ताहङ्कारयोः इति स्वयमेव ऊह्यम् । यापि प्रतिकर्मव्यवस्था सापि अस्माकमिष्टैव । परन्तु परस्परप्रतिबिम्बनं अप्रामाणिकं इति ब्रूमः । कथितदिशा तादात्म्येनैव निर्वाहात् । अम्बुवदग्रहणात् न तथात्वं-इत्यनेन प्रतिबिम्बग्राहकत्वं परिच्छिन्नस्यैव-इत्युक्तेश्च । न च—पूर्वोक्तस्मृतिविरोध—इति वाच्यम् । भानमात्रतात्पर्येणापि स्मृत्युपपत्तेः इति दिक् ।

## इति अमूर्तपदार्थनिरूपणम् ।

---

तथा तेषामेव आकाशादीनां तामसांशेभ्यः पञ्चीकृतपञ्चमहाभूतानि जायन्ते। पञ्चीकरणं च। आकाशादीनि प्रत्येकं द्विधा विभज्य तेषु एकैकमर्द्धं भागं चतुर्धा कृत्वा स्वेतरेषु भूतचतुष्टयार्द्धेषु संयोज्य तेभ्यश्च पञ्चीकृतेभ्यः इदं ब्रह्माण्डं स्थूलं परमात्मनः शरीरमुत्पन्नं भवति। तदेतदस्य समष्टिशरीरम्। तदन्तर्गतं अस्मदादिव्यष्टिशरीरम्। वनवृक्षवत्। जलाशयतत्तरङ्गप्रतिबिम्बितचन्द्रवच्च।

## इति सङ्क्षेपेण मूर्तपदार्थः।

---

एवं लिङ्गमपि समष्टिव्यष्टिभेदेन द्विविधम्। तथा कारणमपि बोद्धव्यम्। अत्र च स्थूल-सूक्ष्म-कारण-व्यष्टिशरीरेषु क्रमात् पूर्वोक्तविश्व-तैजस-प्राज्ञा जाग्रदाद्यभिमानिनो भवन्ति। स्थूल-सूक्ष्म-कारणसमष्ट्यभिमानिनस्तु वैश्वानर-हिरण्यगर्भेश्वरापरपर्याया विराट्सूत्रान्तर्यामिसंज्ञाः। तत्र हैरण्यगर्भे बुद्धि-मनसी महदहङ्कारौ व्यवह्रीयेते। एवमत्र प्रक्रिया। स्थूलदेहो ऽन्नमयकोशः कर्मेन्द्रियैः सह प्राणमयः। ज्ञानेन्द्रियैः सहिते मनोविज्ञाने मनोमयविज्ञानमयौ। एते त्रयो ऽपि क्रमेण क्रिया-कर्तृ-करणरूपाः। कारणशरीरं च आनन्दमयकोशः। एतैः उपहितं चैतन्यं जीवः। अनुपहितं ईश्वर इति। शुद्धचिन्मात्रस्य उपाधिभेदमन्तरेण भेदासम्भवात्। तार्किकमते ऽप्यैक्ये ऽपि तत्तत्कर्णशष्कुल्युपाधिभेदेन शब्दग्रहव्यवस्थावत् आत्मैक्ये ऽपि अन्तःकरणभेदादेव बन्धमुक्तिव्यवस्थोपपत्तेः एक एव आत्मा इति सिद्धम्। एतेन साङ्ख्य-पातञ्जलमतमपि निराकृतम्। आत्म-

नानात्वस्वीकाराविशेषात्। परिणामवादस्य प्रथममुद्गरे विस्तरेण निराकृतत्वात् च। सृष्टिप्रलयादिप्रक्रियाविस्तरस्तु स्वरूपप्रकाशे ऽनुसन्धेय इति दिक्।

## इति सृष्टिप्रकरणम्।

---

ननु—भवतु एवं दृश्यत्रैविध्यनिरूपणम्। दृग्रूपयोः जीवब्रह्मणोः ऐक्ये किं प्रमाणम्?—इति चेत्। उच्यते। "तत्त्वमस्या"दि महावाक्यम्। वाक्यं च पदार्थज्ञानद्वारैव ज्ञापकम्। तत्र तत्पदार्थो द्विविधः। वाच्यो लक्ष्यश्च। अत्र पूर्वोक्तमायाशबलं ब्रह्म वाच्यो ऽर्थः। स च—

यतो वा इमानि भूतानि जायन्ते।
येन जातानि जीवन्ति।
यत् प्रयन्त्यभिसंविशन्तीति।
तद्ब्रह्म विजिज्ञासस्व।

इत्यादिश्रुतिभिः जगत्कर्तृत्वादिद्वारा तटस्थलक्षणेन ज्ञाप्यते। न तु स्वरूपेण। तस्य सच्चिदानन्दैकरसत्वात्। तटस्थलक्षणं च। यावल्लक्ष्यकालानवस्थितत्वे सति व्यावर्तकत्वम्। यथा तार्किकादिमते गन्धवत्त्वं पृथ्वीलक्षणम्। महाप्रलये परमाणुषु-उत्पत्तिकाले घटादिषु च गन्धाभावात्। गन्धादिचतुष्टयस्य पृथिव्यां पाकजस्यैव स्वीकारात्। प्रलये च परमाणुषु पाकाभावात्। तदुक्तम्।

तत्रापि परमाणौ स्यात् पाको वैशेषिके नये।

नैय्यायिकानां तु नये द्व्यणुकादावपीष्यते ॥

इति। मायाविनिर्मुक्तं तु लक्ष्यम्। तत्र—

'ब्रह्मविदाप्नोति परम्'।

इति आकर्ण्य—

'किं तत् ब्रह्म'?

इति स्वरूपमात्रे आकाङ्क्षामुत्थाप्य—

'सत्यं ज्ञानमनन्तं ब्रह्म'।

इत्यादिश्रुतिभिः स्वरूपलक्षणेनैव बोध्यते। लक्ष्य-लक्षणयोरभेदात्। खं छिद्रं—इतिवत् स्वरूपे प्रविष्टत्वात्। तदुक्तम्।

तटस्थं स्वरूपं द्विधालक्षणं च।
स्वरूपे प्रविष्टं स्वरूपे निविष्टम् ॥
यथा काकवन्तो गृहाः खं बिलं च।

इति। एवं 'त्वं' पदस्यापि द्वौ अर्थौ। वाच्यो लक्ष्यश्च। तत्र जाग्रत्स्वप्नसुषुप्त्यादिविशिष्टं चैतन्यं वाच्यो ऽर्थः। स च पूर्वोक्तः—

तद्यथा महामत्स्य उदके*।

---

* 'सलिल एको द्रष्टा ऽद्वैतो भवति एष ब्रह्मलोकः' इति। सलिलवत् स्वच्छीभूतः सलिल इव सलिलः। 'एको' द्वितीयस्य अभावात्। अविद्यया हि द्वितीयः प्रविभज्यते। सा च शान्ताऽत्र। अत एको द्रष्टा। दृष्टे रविपरिलुप्तो आत्मज्योतिःस्वभावा या। 'अद्वैतो' द्रष्टव्यस्य द्वितीयस्य अभावात् एतदमृतमभयं 'एष ब्रह्मलोको' ब्रह्मैव लोको ब्रह्मलोकः। पर एव अयमस्मिन् काले व्यावृत्तकार्यकरणोपाधिभेदः स्वात्मज्योतिषि शान्तसर्वसम्बन्धो वर्तते इति।

इत्यादिश्रुतिभिः तटस्थलक्षणेन प्रतिपाद्यते। एवं तद्रहितं तद्भासकं सच्चिदानन्दघनं तु लक्ष्यम्। तच्च बृहदारण्यके षष्ठाध्याये तृतीय-ब्राह्मणे—

एष ब्रह्मलोकः*।

इत्यादिवाक्येन शुद्धजीवब्रह्मणोरैक्यस्य वक्ष्यमाणत्वेन तदुपयुक्तस्य प्रकाशजीवस्वरूपं आदित्यचन्द्राग्निवाचामभावे जीवस्य व्यवहार-प्रयोजकरूपं—

किं ज्योतिरेवायं पुरुषः† ?

---

* व्याख्याता चेयं श्रुतिः पूर्वम्।

† जनकं ह वैदेहं याज्ञवल्क्यो जगाम। स च गच्छन् एवं मेने। न वदिष्ये किञ्चिदपि राज्ञे। अनन्तरं यत् जनकः पृष्टवान् तत् याज्ञवल्क्योऽकथयत्। सङ्कल्पितस्यान्यथा करणे इयमाख्यायिका। पूर्वं किल जनक-याज्ञवल्क्ययोः संवाद आसीदग्निहोत्रविषये। तत्र जनकस्य अग्निहोत्रविषयं विज्ञानमुपलभ्य परितुष्टो याज्ञवल्क्यः तस्मै जनकाय वरं ददौ। स च—यथाकामं प्रश्नं करिष्यामि—इत्यमुमेव वरं वव्रे। तमेव सम्प्रति वरयाम्बभूव जनकः। तेन वरप्रदानसामर्थ्येन अव्याचिरव्यासुमपि याज्ञवल्क्यं जनक एव पूर्वं पप्रच्छ। हे याज्ञवल्क्य 'किं ज्योतिरयं पुरुषः' इति। अस्य पुरुषस्य किं ज्योतिः येन असौ व्यवहरति इति। किमयं स्वावयवसङ्घातबाह्येन अन्तरेण ज्योतिषा व्यवहरति आहोस्वित् स्वावयवसङ्घातमध्यपातिना ज्योतिःकार्यमयं पुरुषो निवर्तयतीत्येतदभिप्रेत्य पृच्छति।

एवं पृष्टो याज्ञवल्क्यः आदित्यं चन्द्रमसं अग्निं वाचं च अनुक्रमेण ज्योतीष्ट्वेनाभिधाय 'अस्तमित आदित्ये चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुषः? इति पृष्टः। तदा 'आत्मैवास्य ज्योति-

इति प्रश्नपूर्वकेन—

'आत्मैवास्य ज्योतिर्भवति'।

इत्यनेन उक्ता—

'कतम आत्मा*'?

इत्यनेन शुद्धात्मस्वरूपमात्रज्ञाने आकाङ्क्षामुत्थाप्य—

'यो ऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः†।

न दृष्टेर्द्रष्टारं पश्येरदृष्टो हि द्रष्टा'।

---

र्भवति' इत्याह याज्ञवल्क्यः। कार्यकारणस्वावयवसङ्घातव्यतिरिक्तं कार्य-करणावभासकं बाह्यज्योतिर्वत् स्वयमन्येनानवभास्यमानं तत् ज्योतिः येन अन्तःस्थेन आत्मज्योतिषा अयं पुरुषः अवतिष्ठते प्रकाशते च। तदेवात्म-ज्योतिः इति भावः।

* यद्यपि व्यतिरिक्तत्वादिसिद्धं तथापि समानजातीयानुग्राहकत्वदर्शन-निमित्तभ्रान्त्या आत्मा करणानामेवान्यतमो व्यतिरिक्तो वा? इति अवि-वेकतः पृच्छति। 'कतम' इति। न्यायसूक्ष्मताया दुर्विज्ञेयत्वात् उपपद्यते हि भ्रान्तिः। अथवा आत्मनि शरीरव्यतिरिक्ते सिद्धे ऽपि करणानि सर्वाणि विज्ञानवन्ति च विवेकत आत्मनो ऽनुपलब्धत्वात् अतः पृच्छति कतम आत्मेति। यः त्वयोक्तः आत्मा स देहेन्द्रिय-प्राण-मनःसु कतमः? अथवा यो ऽयमात्मा त्वयाभिप्रेतो विज्ञानमयः विज्ञानमयेषु प्राणेषु कतमः? इति प्रश्नः।

† पूर्वस्मिन् व्याख्याने 'कतम आत्मा' इत्येतावदेव प्रश्नवाक्यम्। द्वितीये 'प्राणेषु' इत्येतदन्तं प्रश्नवाक्यम्। अथवा 'पुरुष' इत्येतदन्तं सर्वमेव प्रश्न-वाक्यम्। 'यो ऽयं' इति आत्मनः प्रत्यक्षत्वनिर्देशः। 'विज्ञानमयो' विज्ञानप्रायः। बुद्धिविज्ञानोपाधिसम्पर्काविवेकात् विज्ञानमय इत्युच्यते।

इत्यादिवाक्यैर्लक्ष्यस्वरूपं प्रतिपाद्यते तदेवमवान्तरवाक्येभ्यो ऽनुभूतयोः शुद्धजीव-ब्रह्मणोः । ततः—

'तरति शोकमात्मवित्' ।

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय' ॥

इत्यादिना स्वरूपज्ञानस्यैव मोक्षहेतुत्वमाकर्ण्य को ऽहमित्याकाङ्क्षायां परमकारुणिकेन वेदेन—

तत् त्वमसि ।

इत्युक्तम् । तत्र मुख्यार्थान्वयानुपपत्तिमवगम्य-सो ऽयं देवदत्त—इतिवत् जहदजहल्लक्षणया-गङ्गायां घोष-इतिवद्वा जहल्लक्षणया स्मरणोपपत्त्या अखण्डब्रह्मसाक्षात्कारात्मिका चित्तवृत्तिः उदेति । ननु—अवान्तरवाक्येभ्यः शुद्धे ऽनुभूते सति महावाक्यस्थपदैः शुद्धस्मृतिसम्भवः । अवान्तरवाक्यस्थपदैस्तु कथं शुद्धस्मृतिः ? तत्पूर्वं शुद्धस्य अननुभवात्—इति चेत् । न । सुषुप्तौ निर्विकल्पकचैतन्यानुभवस्य पूर्वं प्रतिपादितत्वात् ।

ननु—वार्तिकमते सुप्तौ न उक्तनिर्विकल्पकवृत्तिः स्वीक्रियते । न चैवं सुखमहमस्वाप्सं—न किञ्चिदवेदिषं—इति स्मरणं न स्यात्—इति वाच्यम् । तन्मते ऽनुभवाङ्गीकारात् । न च—तर्हि स्वप्रकाशतया सर्वदा भावात् शुद्धस्मृतिरवान्तरवाक्यस्थपदैः स्यात्—इति वाच्यम् । जन्यनिर्विकल्पकं विना तत्सूक्ष्मावस्थारूपसंस्कारजस्मृत्यसम्भवात् । न हि अस्मद्दर्शने सूक्ष्मावस्थारूपनाशात् अन्यः संस्कारः स्वीक्रियते—इति चेत् । न । प्रकारान्तरसम्भवात् ।

तथा हि । अद्वितीयब्रह्मविजिज्ञापयिषया प्रवृत्तानां सत्यादि-

पदानां उपाधिविशिष्टचैतन्यशक्तत्वे ऽपि चैतन्यमात्रे तात्पर्येण तदंश एव संस्कारोद्बोधसम्भवात्। शब्दवृत्तेस्तात्पर्याधीनत्वात्। तस्मात् तत्त्वमस्यादिवाक्यजन्याखण्डाकारमनोवृत्त्या सजातीयप्रत्ययप्रवाहपूर्वकविजातीयप्रत्ययशून्यया अविद्यानिवृत्तिः। तन्निवृत्तौ तु सकलानर्थनिवृत्तिरिति सिद्धम्। तदुक्तं वार्तिके।

तत्त्वमस्यादिवाक्योत्थसम्यक्धीजन्ममात्रतः।
अविद्यासहकार्येण नासीदस्ति भविष्यति॥

इति। एतेन यत् पातञ्जलस्वीकृतं प्रकृतिपुरुषविवेकेन अभ्यासवैराग्यपरिपाकात् यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यानलभ्यदृमात्रविषयकसम्प्रज्ञातसमाधिपूर्वकात् परमेश्वरप्रसादजात् पञ्चविधानां चित्तवृत्तीनां निरोधादेव धर्ममेघशब्दितात् असम्प्रज्ञातसमाधेः कैवल्यम्—इति तदपि निरस्तम्।

यत्पुनर्भेदाभेदवादिनो रामानुजाः—भेदाभेदश्रुत्योः तुल्यबलत्वेन साम्यात् जीवब्रह्मणोः अविनाभावलक्षणं अभेदं आहुः। तथा हि। यथा—शुक्लः पटः—इत्यत्र जाति-द्रव्य-गुणानां त्रयाणां ऐक्यं प्रतीयते। तच्च ऐक्यं न तद्भेदस्य बाधकम्। बाधकत्वे तु द्रव्यत्वगुणत्वयोः सामानाधिकरण्यं स्यात्। इष्टापत्तिः—इति चेत्। न। द्विरवभासो न स्यात्। न स्याच्च शक्यतावच्छेदकयोः समनियतत्वेन भेदाभावात् सङ्केतविशेषविषयतापि। घटकलशादिवदुपपादने तु। शुक्लः पटः शुक्लो घटः—इत्यादिप्रत्यया न स्युः। घटत्वशुक्लत्वादेः व्याप्यव्यापकभावस्य द्रव्यत्वघटत्वादिवत् अङ्गीकारे तु सुतरां भेदः इति। तस्मात् अगत्या अविनाभाव एव अन्योन्याभावाप्रतिद्वन्द्वी

अभेदः कर्तव्यः । न तु अद्वैतवादिसम्मतः । प्रमाणाविरहात् । तं च केचित् तादात्म्यत्वेन अभिमन्यन्ते, केचित् समवायत्वेन इति विशेषः । तस्मात् एवं जीव-परमात्मनोरपि अंशांशिनोरविनाभाव एव अभेदः ।

अद्वैतवादे तु अभेदः पारमार्थिको भेदस्तु मायाकल्पितः । भेदाभेदवादे तु अभेदो ऽविनाभावः भेदस्तु पारमार्थिकः इति तु रहस्यम् । अंशत्वं च जीवस्य यथा भास्करप्रभाया भास्करांशत्वम् । यथा वा गुणस्य गुणिनोऽंशित्वम् । यदाश्रयत्वनियमो यस्य स तद्विशेषणम् । एवंप्रकारवाचकशब्दस्य प्रकारिणि वर्तनात् प्रकारप्रकार्यैक्यमविनाभावः । तयोरभावे च तन्न स्यात् । नचांशत्वे वस्त्वैक्यं—इति वाच्यम् । जडेनापि सह तथात्वापत्तेः । तस्यापि अंशत्वश्रवणात् । न चेष्टापत्तिः । तर्हि ब्रह्मणो ऽपि परिच्छिन्नत्वापत्तेः । तस्मात् परमात्मनोऽंशस्य जीवस्य व्यापकस्य अब्रह्मात्मकताबुद्धिर्बन्धः, मुक्तिश्च तद्विलयः इति । स च विलयो लिङ्गशरीरापगममन्तरा न सम्भवति इति तल्लय एव मुक्तिः । पारिशेष्यात् । तदपि ब्रह्मात्मैक्यत्वज्ञानादेव । प्रमाणं च तत्र "तत्त्वमस्या"दिवाक्यान्येव । तत्प्रतिपादिताऽभेदस्य न भेदप्रतिद्वन्द्वी । मुक्तिकाले ऽपि भेदसत्त्वे बाधकाभावः । अत्र अद्वैतवादिनां ब्रह्माभिन्नस्य सत्यत्वे मानाभावात् तद्व्यतिरिक्तस्य भेदस्य मिथ्याभूतस्य न तत्र विद्यमानत्वमस्ति—इति दूषणमपि स्ववासनावासितमेव इति रामानुजानां सिद्धान्तः ।

अतएव तन्मते लिङ्गशरीरादिसम्बन्धेन अब्रह्मतामापन्नस्य त्वं

पदार्थस्यैव शोधनाय "तत्त्वमा"दिवाक्ये त्वं पदे लक्षणा । न तत्पदे ऽपि । प्रयोजनाभावात्—इत्यादिवल्गितमपि अपास्तम् । विस्तरेण भेदाभेदवादस्य तन्मोक्षस्य च पूर्वमेव निराकृतत्वात् इति दिक् ।

ननु—वेदान्तजन्याऽखण्डाकारवृत्तेः उपहितविषयत्वे तदानीं उपाध्यन्तराभावेन एतस्या एव उपाधायकत्वात् स्वविषयत्वापत्तिः । न चेष्टापत्तिः । शाब्दबोधे शब्दानुपस्थिताभाननियमेन वृत्तेः शब्दानुपस्थितायाः भावानुपपत्तेः । यथाकथञ्चिदुपपत्तौ वा न ततो ऽज्ञान-तत्कार्यनिवृत्तिः । अज्ञान-तत्कार्याविषयकज्ञानस्यैव तदुभयनिवर्तकत्वात् । अन्यथा—अहमज्ञः, अयं घटः—इत्यादिज्ञानानां उपहितविषयत्वेन अज्ञाननिवर्तकत्वप्रसङ्गात्—इति चेत् । नैवम् । वृत्तेः शाब्दबोधे अभासमानाया एव उपधायकत्वाभ्युपगमात् । तदुक्तं कल्पतरुकृद्भिः ।

"शुद्धं ब्रह्म विषयीकुर्वाणा वृत्तिः स्वं स्वेतरोपाधिं च
निवारयति । स्वस्या अपि उपाधित्वाविशेषात् ।
गुहायां न शब्द—इति शब्दत्वावच्छिन्नशब्दसामान्यनि-
षेधवत् । एवं च न अनुपहितस्य विषयता ।
वृत्त्युपरागो ऽत्र सत्तया उपयुज्यते । न भास्यतया ।
विषयकोटिप्रवेशेन" ।

इति । अयमभिप्रायः । यथा अज्ञानोपहितस्य साक्षित्वे ऽपि न अज्ञानं साक्षिकोटौ प्रविशति । जडत्वात् । किन्तु साक्ष्यकोटावेव । एवं वृत्त्युपहितस्य विषयत्वे ऽपि न वृत्तिर्विषयकोटौ प्रविशति । स्वविषयत्वानुपपत्तेः । किन्तु स्वयं अविषयो ऽपि वृत्तिरूपोपाधिः

चैतन्यस्य विषयतां सम्पादयति इति न कापि अनुपपत्तिः । तदुक्तं तृप्तिदीपे ।

स्वप्रकाशो ऽपि साच्येष धीवृत्त्या व्याप्यते ऽन्यवत् ।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥
बुद्धि-तत्स्थचिदाभासौ द्वावे[1]तौ व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येत् आभासेन घटः स्फुरेत् ॥
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयं स्फुरणरूपत्वात् नाभास उपयुज्यते ॥
चक्षुर्दीपावपेक्षेत घटादेर्दर्शने यथा ।
न दीपदर्शने किन्तु चक्षुरेकमपेक्ष्यते ॥
स्थितोऽप्यसौ चिदाभासो ब्रह्मण्येकीभवेत् परम् ।
न[2] तु ब्रह्मण्यविषयं फलं कुर्यात् घटादिवत् ।
'अप्रमेयमनादिं चे'त्यत्र श्रुत्येदमीरितम् ।
मनसैवेदमाप्तव्यं इतिधीव्याप्यता श्रु[3]ता* ॥

---

१ 'द्वावपि' इति क. पुस्तके पाठः ।
२ 'तत्तु' इति ग. पुस्तके ।
३ 'श्रुतौ' इति क. ख. पुस्तकयोः ।

---

* 'स्वप्रकाशः' अहमित्येवं बुद्धिवृत्तिसम्भवात् 'स्वप्रकाशो ऽपि' अन्यवत् घटादिवत् । 'धीवृत्त्या' बुद्धिवृत्त्या 'व्याप्यते'। तर्हि अपसिद्धान्तः स्यात्—इति चेत् । न। पूर्वाचार्य्यैरपि वृत्तिव्याप्यत्वस्य अङ्गीकृतत्वात् तथाहि। द्विविधा हि व्याप्तिः। वृत्तिव्याप्तिः फलव्याप्तिश्चेति तत्र आद्या पूर्वाचार्य्यसम्मता । द्वितीया निषिद्धा । 'फलं' वृत्तिप्रतिबिम्बितचिदाभासः तद्व्याप्यत्वं प्रत्यगात्मनो निराकृतम् स्वस्यैव स्फुरणरूपत्वात् इति भावः ।

आत्मनि फलव्याप्यभावं दर्शयितुं अनात्मनो वृत्त्या फलेन च व्याप्यत्वं

दर्शयति। बुद्धिः तत्स्थचिदाभासश्च एतौ द्वावपि घटं व्याप्नुतः। 'तत्र' तयोः बुद्धि-चिदाभासयोर्मध्ये। 'धिया' बुद्धिवृत्त्या प्रमाणभूतया 'अज्ञानं' नश्यति। ज्ञानाज्ञानयोः विरोधात्। 'आभासेन' चिदाभासेन 'घटः' स्फुरेत्। जडत्वेन स्वतः स्फुरणायोगात्।

आत्मनि ततो वैलक्षण्यं दर्शयति। प्रत्यक्-ब्रह्मणोः एकत्वस्य अज्ञानेन आवृतत्वात् तस्य अज्ञानस्य निवृत्तये वाक्यजन्यया—अहं ब्रह्मास्मीत्येवमाकारया धीवृत्त्या व्याप्तिरपेक्ष्यते। स्वस्यैव स्फुरणरूपत्वात् तत्स्फुरणाय चिदाभासो नापेक्ष्यते। अतो युज्यमानोऽपि चिदाभासः नोपयुज्यते इत्यर्थः।

उक्तमर्थं दृष्टान्तेन विशदयति। यथा अन्धकारावृतघटादिदर्शने चक्षुः दीपश्च उभावपि अपेक्ष्येते। दीपदर्शने तु न तथा। किन्तु। एकं चक्षुरेवापेक्षितम्। तथा ब्रह्मणि अज्ञाननाशाय धीवृत्त्या व्याप्तिः अपेक्षिता नतु चिदाभास इति भावः।

ननु—बुद्धि-तद्वृत्तीनां चिदाभासवैशिष्ट्यस्याभावात् घटादिष्विव ब्रह्मण्यपि फलव्याप्तिर्बलात् भवेदेवेति चेत्। शृणु। यद्यपि घटाकारवृत्तिवत् ब्रह्मगोचरवृत्तावपि चिदाभासो ऽस्ति। तथापि नासौ ब्रह्मणो भेदेन भासते। किन्तु प्रचण्डातपमध्यवर्तिदीपप्रभावत् तेन एकीभूत एव भवति। अतः ब्रह्मणि स्फुरणलक्षणातिशयजनको न भवतीत्यर्थः।

ननु—ब्रह्मणि फलव्याप्तिर्नास्ति। वृत्तिव्याप्तिस्तु विद्यते—इत्युक्तं तत्र किं प्रमाणम् ?—इति चेत्। मैवम्। श्रुति-स्मृतिप्रमाणसिद्ध एवायमर्थः। तथा च अमृतबिन्दूपनिषदि—

निर्विकल्पमनन्तं च हेतु-दृष्टान्तवर्जितम्।
अप्रमेयमनादिं च यं ज्ञात्वा मुच्यते बुधः।

इत्यत्र अप्रमेयशब्देन फलव्याप्तिराहित्यमुक्तम्। कठवल्ल्यां च—

मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन।

इतिधीव्याप्यता श्रुता। तस्मान्न कोपि विरोधः।

इति। एतेन ज्ञानाज्ञानयोरेकविषयत्वं व्याख्यातम्। अज्ञानमपि हि स्वोपधानदशायामेव ब्रह्म विषयीकरोति। स्वानुपधानदशायां स्वस्यैवाभावात्। तथा च ज्ञानाज्ञानयोरुभयोरपि उपाध्यविषयकत्वे सति उपहितविषयत्वात् समानविषयत्वमस्त्येव। एतेन उपाधिविषयकज्ञानानां अज्ञाननिवर्तकत्वं व्याख्यातम्। इति दिक्।

ननु—तथापि ब्रह्मसाक्षात्कारे किं मनः करणं उत शब्दः?—इति चेत्। अत्र केचित् तार्किकेभ्यो बिभ्यतः शब्दात् परोक्षज्ञानमेव अङ्गीकृत्य भावनासहकृतात् मनसा। अपरोक्षज्ञानमाचक्षते। अन्ये तु मन्यन्ते—शब्दात् आपाततः परोक्षज्ञानमेव जन्यते। करणस्वाभाव्यात्। उत्तरकालं तु श्रवण-मनन-निदिध्यासनादिसहितात् शब्दादेव अपरोक्षज्ञानमुदेति। संस्कारसहकृतेन्द्रियादिवत् प्रत्यभिज्ञानं इति। तत्र आद्यः पक्षस्तावत् न युक्तः। भावनाजन्यत्वे ज्ञानस्य अप्रामाण्यप्रसङ्गात्। कामातुरस्य कामिनीं भावयतो व्यवहितकामिनीसाक्षात्कारवत्।

ननु—न भावनाजन्यत्वं तत्र अप्रामाण्यप्रयोजकम्। किन्तु बाधितविषयत्वम्। भावनानपेक्षेऽपि शुक्तिरजतादिभ्रमे बाधादेव अप्राण्यस्वीकारात्। ब्रह्मणि तु सर्वमानागोचरे बाधासम्भवात्। तद्भावनाज्ञानजन्यस्यापि[1] प्रामाण्यं न व्याहन्यते। न च व्यवहितकामिनीविभ्रमादौ दोषत्वेन भावनायाः क्लृप्तत्वात् तज्जन्यत्वे ब्रह्मसाक्षात्कारस्य दोषजन्यत्वेन भ्रमत्वं भविष्यति। बाधितविषयत्ववत् दोषजन्यत्वस्यापि भ्रमत्वप्रयोजकत्वात्। तदुक्तं मीमांसाभाष्यकृद्भिः।

---

१ 'तस्माद्भावना०' इति ग. पुस्तके।

"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः
स एव असमीचीनो नान्यः"।

इति। तद्वार्तिककारैश्च—

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अन्यथा तु हेतूत्थदोषज्ञानादयो यतः।

इति। तुल्यवदेव अप्रामाण्यप्रयोजकं द्वयमुक्तम्। तस्मात् बाधाभावे ऽपि दोषजन्यत्वात् अप्रामाण्यमेव—इति वाच्यम्। भावनायाः क्वचिद्दोषत्वे ऽपि सर्वत्र दोषत्वाऽनिश्चयात्। अन्यथा शङ्खपीतत्वभ्रमकारणीभूतस्य पीतद्रव्यस्य स्वविषयज्ञाने ऽपि अप्रामाण्यप्रयोजकत्वं स्यात्। क्वचित् कश्चिद्दोष इत्येवाङ्गीकारात्। विषयबाधेनैव दोषजन्यत्वप्रकल्पनात् च। दुष्टकरणजन्यस्यापि अनुमानादेर्विषयाबाधेन प्रामाण्याभ्युपगमात् च। अन्यथा परिभाषामात्रापत्तेः। मीमांसाभाष्य-वार्तिककाराभ्यामपि बाधितविषयव्याप्यत्वेनैव दुष्टकरणजन्यत्वं अप्रामाण्यप्रयोजकमुक्तम्। न स्वातन्त्र्येण।

तस्मात् भावनाजन्यमपि ब्रह्मज्ञानं अबाधात् प्रामाण्यं लप्स्यताम्—इति चेत्। नैवम्। परोक्षज्ञानजनकभावनाया अपरोक्षज्ञानजनकत्वासम्भवात्। न हि वह्न्यनुमितिज्ञानं सहस्रकृत्व आवृत्तमपि वह्निसाक्षात्काराय कल्पते। क्लृप्तप्रमा सामग्रीमन्तरेण जायमानस्यैव ज्ञानस्य अप्रामाण्यनियमात्। अन्यथा—

"चैत्यं वन्देत स्वर्गकामः"।

इत्यादि पौरुषेयवाक्यानामपि विषयबाधाभावात् अप्रामाण्यं न स्यात्। न हि चैत्यवन्दनं स्वर्गसाधनं भवति—इत्यत्र किञ्चिन्मान-

मस्ति। अलौकिकहिताहितसाधनतायाः वेदैकमेयत्वात्*। तत्र च मानान्तराप्रसरात्। पुरुषवचसां च[1] मानान्तरमूलत्वेनैव प्रामाण्यात्। तत्र मूलाभावादप्रामाण्यम्। पुरुषस्य भ्रम-प्रमादादिसम्भवात्—इति चेत्। प्रकृते ऽपि तुल्यम्। न चात्र शब्दप्रमाणस्य मूलत्वात् नामूलता—इति वाच्यम्। संवादात् प्रामाण्याङ्गीकारे पूर्वतन्त्रोपपादितस्वतस्त्व-भङ्गप्रसङ्गात्। आवश्यकत्वेन शब्दस्यैवात्र प्रामाण्यस्योचितत्वात् च।

अन्यच्च अदृष्टमपि फलान्यथानुपपत्त्या अत्रैव प्रामाण्यं कल्प्यते—इति चेत्। न। अपूर्वप्रामाण्यान्तरकल्पने मानाभावात्। फलस्य च क्लृप्तप्रमाणेनैव उपपत्तेः। परोक्षभावनाया अपरोक्षविषयत्वं च अन्यत्र अदृष्टचरमपि त्वया कल्पनीयम्। तदुभयकल्पनात् वरं क्लृप्तप्रामाण्यस्य शब्दस्यैव अपरोक्षविषयत्वमात्रकल्पनम्। धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात्।

---

१ 'तु' इति ख. पुस्तके।

---

* नैतदपरे आर्हतादयः सहन्ते। तेषां मते अलौकिक-हिताहित साधनस्यापि आप्तवाक्यैकमेयत्वम्। आप्तत्वं च यथार्थवक्तृत्वम्। वेदस्य तु न सर्वथा आप्तत्वम्। अनर्थावहानां श्येनयागादीनामपि तत्रोप-देशात्। तस्मात् लौकिकवाक्यवत् हेयोपादेयत्वाविशेषात् ग्राह्य-त्या-ज्यांशयोः तुल्यं लौकिक-वैदिकवाक्ययोः प्रामाण्यम्—इति तेषामाशयः। अन्ये तु अलौकिकं हिताहितमेव नाद्रियन्ते चार्वाकादयः। कुतस्तरां तत्साधनस्य वेदस्य आदरः? अलं तेषां नास्तिकानां दुर्मतप्रदर्शनेनेति सर्वमनवद्यम्।

अथास्तु तर्हि मन एव अत्र प्रमाणं—इति चेत्। तत्किं भावना-सहकृतं केवलं वा? आद्ये पूर्वोक्तदोषः। ज्ञानादिसहकृतस्य मनस एव सर्वत्र प्रामाण्यसम्भवे प्रमाणान्तरोच्छेदापत्तेः। चक्षुरादीनामेव सर्वत्र असाधारण्यात्। प्रामाण्यमित्यभ्युपगमे भावनाया अपि तुल्यत्वम्। नापि द्वितीयः। वेदान्तवाक्यश्रवणात्पूर्वमपि केवलमनसो विद्यमानत्वेन ब्रह्मणश्च सर्वदा सन्निहितत्वेन साक्षात्कारः स्यात्। तथा च। श्रवण-मनन-निदिध्यासनादिसाधनानां आनर्थक्येन तत्प्र-तिपादकचतुर्लक्षणीमीमांसारम्भो न स्यात्। किञ्च तस्य प्रमाणानु-ग्राहकत्वेन तर्कालोकादिवत् न प्रमाणान्तरत्वं सम्भवति। असाधा-रणविषयाभावात्। सिद्धान्ते सुख-दुःखेच्छादीनां मनोधर्माणां करणव्यवधानाभावेनैव साक्षिवेद्यत्वाभ्युपगमात्।

न च ब्रह्मैव असाधारणो विषयो मनस—इति वाच्यम्।

"यन्मनसा न मनुते"।

इत्यादिश्रुतिविरोधात्। ननु—

यद्वाचा नाभ्युदितम्। न चक्षुषा गृह्यते नापि वाचा।
यतो वाचो निवर्त्तन्ते।

इत्यादि श्रुतिविरोधः सिद्धान्ते ऽपि समः—इति चेत्।

"नावेदविन्मनुते तं बृहन्तम्।
वेदेनैतद्वेदितव्यम्"।

"तं त्वौपनिषदं पुरुषं पृच्छामि"।

इत्यादिश्रुतिबलेन निषेधश्रुतीनां मुख्यवृत्त्यविषयत्वेनापि उप-पत्तेः। मनसि च मुख्यामुख्यभेदाभावात्। ननु—

सर्वे वेदा यत्रैकं भवन्ति ।

स मानसीन आत्मा मनसैवानुद्रष्टव्यः ॥

इत्यादिश्रुतेः कागतिः ?—इति चेत् । शृणु । मानसीनत्वं मनसि उपाधौ उपलभ्यमानत्वम् । न मनोजन्यसाक्षात्कारविषयत्वम् । "मनसैव" इति तु कर्तरि तृतीया आत्मनो ऽकर्तृत्वप्रतिपादनार्था मनसो दर्शनकर्तृतामाह । न करणताम् । औपनिषदसमाख्याविरोधात् । असाधारणेन हि व्यपदेशा भवन्ति व्यवहारे । मानसीन समाख्यानवत् । अतएव प्रमाश्रयत्वादपि न मनसः तत्र करणतावकाशः ।

कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा ।

धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव* ॥

इति श्रुतौ—मृद्घट—इति वत् उपादानकारणत्वेन मनसः सामानाधिकरण्यप्रतिपादनात् । दण्डो घट—इत्यादिसामानाधिकरण्यादर्शनेन न निमित्तकारणत्वाभ्युपगमेन उपपत्तिः । निमित्तकारणग्रहणार्थं अवश्यकल्प्ययोः अन्वय-व्यतिरेकयोः समवायिकारण-

---

* 'कामः' स्त्रीव्यतिकराभिलाषः । 'सङ्कल्पः' प्रत्युपस्थितविषयविकल्पनं शुक्लनीलादिभेदेन । 'विचिकित्सा' संशयज्ञानम् । 'श्रद्धा' अदृष्टार्थेषु कर्मसु देवतासु देवत्वादिषु च आस्तिक्यबुद्धिः । 'अश्रद्धा' तद्विपरीता बुद्धिः । 'धृतिः' धारणं देहाद्यवसादे उत्तम्भनम् । 'अधृतिः' तद्विपर्ययः । 'ह्रीः' लज्जा । 'धीः' प्रज्ञा । 'भीः' भयम् । 'इत्येतत्' एवमादिकं सर्वं 'मन एव' मनसः अन्तःकरणस्य रूपाण्येतानि । मनसो ऽस्तित्वं प्रति अन्यच्च कारणमुच्यते । तस्मान्मन्ये नामास्त्यन्तःकरणम् ।

विषयत्वस्यैव उचितत्वात्। समवायिकारणान्तरोपस्थित्यभावात्। आत्मनश्च—

"साक्षी चेत्ता केवलो निर्गुणश्च"।

इति श्रुत्या निर्गुणत्वप्रतिपादनात्। दृश्यानां द्रष्टृधर्मत्वानुपपत्तेः। दृश्यानां घटादीनां स्वरूपतो धर्मत्वेन वा तादात्म्याभावस्य सर्वसिद्धत्वात्। काम-सङ्कल्पादीनां स्वप्रकाशत्वाभावेन दृश्यत्वादिधर्माणां द्रष्टृधर्मत्वाभावनिश्चये मनसैव तु द्रष्टव्यम्।

यदा सर्वे प्रमुच्यन्ते कामा ये ऽस्य हृदि स्थिताः* ।
तीर्णो हि तदा सर्वान् शोकान्[1] हृदयस्य भवति† ॥

---

१ 'कामान्' इति ख. पुस्तके।

---

* जनकमाह भगवान् याज्ञवल्क्यः। 'यदा' यस्मिन् काले 'सर्वे' समस्ताः 'कामाः' तृष्णाप्रभेदाः ये लोके प्रसिद्धा इहामुत्रार्थाः पुत्र-वित्त-लोकैषणालक्षणाः। 'अस्य' प्रसिद्धस्य पुरुषस्य। 'हृदि' बुद्धौ। 'श्रिताः' आश्रिताः। 'प्रमुच्यन्ते' आत्मकामस्य ब्रह्मविदः समूलतो विशीर्यन्ते,—

'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते'।

इति मन्त्रस्योत्तरार्धमत्रानुसन्धेयम्। 'अथ' स 'मर्त्यो' मरणधर्मा सन् समूलतः कामवियोगात् 'अमृतो भवति' अर्थादनात्मविषयाः कामाः अविद्या लक्षणा मृत्यवः इति। 'अत्र' अस्मिन् नरजन्मनि 'ब्रह्म समश्नुते' ब्रह्मभावं मोक्षं प्रतिपद्यत इत्यर्थः।

† 'तीर्णो' अतिक्रान्तो हि यस्मात् तस्मात् 'तदा' तस्मिन्काले 'सर्वान्' 'शोकान्' शोकाः कामाः इष्टविषयप्रार्थनाः। यतः ते कामाः विषय-

इत्यादिश्रुतिभिर्मनोधर्मत्वमेव कामादीनां निश्चीयते। मनसः तादात्म्याध्यासाच्च तद्धर्माणामपि आत्मनि आध्यासिको व्यवहारः।

"बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरो ऽपि दृष्टः"।

"स समानः सन्नुभौ लोकावनु सञ्चरति"।

"ध्यायतीव स धीः स्वप्नो भूत्वेमं लोकमतिक्रामति"॥

इत्यादिश्रुतिभ्यः।

विज्ञानं यज्ञं तनुते कर्माणि तनुते ऽपि च।

इति श्रुतौ विज्ञानशब्दवाच्यस्य मनस एव प्रथमान्तपदनिर्दिष्टत्वे कर्तृत्वश्रवणात् च। ननु—

"मनसा ह्येव पश्यति मनसा शृणोति"।

इत्यादौ करणत्वमपि श्रुतं—इति चेत्। न। इन्द्रियातिरिक्ते मनसि विप्रतिपन्नान्प्रति तदतिरिक्तमनःसद्भावमात्रे तस्याः श्रुतेः तात्पर्यात्। न तु करणत्वे ऽपि। एवकारानन्वयापत्तेः चक्षुरादीनामपि कारणत्वस्यान्वय-व्यतिरेकसिद्धत्वेन तद्व्यवच्छेदेन नियमानुपपत्तेः[१]। हेतुमात्रे ऽपि तृतीयास्मरणात्। मनसः करणताप्रसिद्धिस्तु निर्धर्मकस्य प्रकाशस्य आत्मनः असङ्गस्य स्वतो विषयोपलम्भायोग्यस्य स्वतादात्म्याध्यासेन तदाकारवृत्तिभिः विषयोपलम्भद्वारत्वादेव। न तु चक्षुरादिवत्तटस्थत्वेन इति आस्तां तावत्।

---

१ 'नियमोपपत्तेः' इति ख. पुस्तके।

---

वियोगे शोकत्वमापद्यन्ते। शोकः, कामः, रतिः इति पर्यायाः। प्रक्रिया-पतितत्वात् शोकशब्दः कामवचन एव भवितुमर्हति। विगतशोको भवति इत्यर्थः।

अस्तु तर्हि प्रथमं परोक्षज्ञानं जनयतो ऽपि शब्दस्यैव सहकारिविशेषलाभेन पश्चादपरोक्षज्ञानजनकत्वम्—इति चेत्। न। अर्द्धजरतीन्यायापातात्* शब्दस्य परोक्षज्ञानजननस्वभावे सहकारिसहस्रेणापि तदन्यथाकरणायोगात्। आगन्तुकस्य स्वभावत्वानुपपत्तेः। यत्तु दृष्टान्तत्वेन प्रत्यक्षज्ञानमुदाहृतम्। तत्र किं विवक्षितम्? अपरोक्षज्ञानजनकस्वभावस्य चक्षुषः संस्कारसहकारेण परोक्षज्ञानजनकत्वम्? अथवा सन्निकृष्टविषये अपरोक्षज्ञानजनकस्वभावस्य चक्षुषः संस्कारसहकारेण ऽसन्निकृष्टे ऽपि तत्तांशे अपरोक्षज्ञानजनकत्वम्? किंवा संस्कारनिरपेक्षत्वेन ज्ञानं जनयतो ऽपि चक्षुषः संस्कारसापेक्षत्वे ऽपि न अप्रामाण्यम्? इति। तत्र नाद्यः। प्रत्यभिज्ञायाः अपरोक्षत्वात्। तत्तांशे चक्षुषोऽजनकत्वाच्च। अतएव न द्वितीयो ऽपि। तत्तांशे ऽपरोक्षत्वानङ्गीकारात्। तदंशे संस्कारमात्रजन्यत्वेन स्मृतित्वस्याभ्युपगमात् च। एतेन प्रत्यभिज्ञायाः संस्कारजन्यत्वे स्मृतित्वापातात् संस्कारजस्मरणमेव विशेषणज्ञानत्वेनतत्कारणं—इत्यपास्तम्। संस्कारजन्यत्वांशे स्मरणत्वाङ्गीकारात्। स्मृतिहेतुत्वेनावश्यकल्प्योद्बुद्धसंस्कारादेव प्रत्यभिज्ञोत्पादसम्भवे अन्तरास्मृतिकल्पनानवकाशात्। तद्धेतोरेव तदस्तु, किं तेन—इति न्यायात् स्मरण इव प्रत्यभिज्ञायामपि पूर्वानुभवान्वय-व्यतिरेकयोः तुल्यत्वात् च। प्रमात्वाप्रमात्ववत् अनुभवत्व-स्मरणत्वयोरेकज्ञानवृत्तित्वे

---

* 'अर्द्धजरतीन्यायः' अर्द्धा जरतीव अर्द्धजरती इत्यर्थे कन्। अर्द्धवृद्धातुल्ये न्याये। स च यथा—एकस्याः कुक्कुट्याः शरीरस्य एकं अर्द्धं पाकाय अपरमर्द्धं प्रसवाय यथा न प्रभवति। एवं एकस्य भागस्य अन्यपरत्वं अन्यस्य अन्यपरत्वं न युज्यते इत्येवंपरो ऽयं न्यायः।

विषयकर्त्तांशभेदात् न विरोधः। स्मृतित्वानुभवत्वयोः जातित्वानङ्गीकारात्। अतएव न तृतीयः। न हि चक्षुषः स्वविषये संस्कारसापेक्षत्वमस्ति। येन सापेक्षत्वलक्षणं अप्रामाण्यं स्यात्। किन्तु। स्वसहकारिसमवधानात् स्वे स्वे विषये युगपत् तज्ज्ञानजनकयोः चक्षुःसंस्कारयोः अर्थसमाजेनानुभवस्मरणात्मैकज्ञानजनकत्वं पर्यवस्यति। अन्यथा संस्कारसहकारेण चक्षुषो ऽसन्निकृष्टे विषये ऽपि ज्ञानजनकत्वे रजतसंस्कारसहकारेण असन्निकृष्टे ऽपि रजते चाक्षुषज्ञानापत्तेरन्यता ख्यातिस्वीकारप्रसङ्गः। रजतचाक्षुषत्वेन रजतसंयोगत्वेनैव कार्यकारणभावनियमे तद्देशकालरूपायां तत्तायामपि तुल्यम्। प्रत्यक्षस्य विद्यमानोपलम्भत्वनियमात्। किन्तु भिन्नजातीयज्ञानहेतुत्वेन क्लृप्तयोरपि संस्कारयोरन्वय-व्यतिरेकाभ्यां एकज्ञानहेतुत्वं प्रत्यभिज्ञायां क्लृप्तम्। इदमेव अन्यताख्यातिनिराकरणेन अनिर्वचनीयाख्यमिथ्याज्ञानोत्पत्तिं व्यवस्थापयद्भिः पञ्चपादिकाकारैर्दृष्टान्तितम्। नैतावता सापेक्षस्यापि प्रामाण्यं भविष्यति। इह च पूर्वमपरोक्षज्ञानासमर्थस्यैव शब्दस्य विचारजनितसंस्कारविशेषसहकारेण अपरोक्षज्ञानजनने सापेक्षत्वलक्षणाप्रामाण्य-स्वभावभङ्गयोः प्रसङ्गो वज्रलेपायते। तस्मात् शब्द एव विचारात्पूर्वं ऊर्ध्वं च स्वतःप्रमाणभूतो विषयमहिम्ना साक्षात्कारं जनयतीति युक्तमाश्रयितुम्।

न च स्वभावभङ्गदोषः। मनस इव अपरोक्षापरोक्षज्ञानजननस्वभावाङ्गीकारात्। यथा मनः क्वचित् परोक्षं ज्ञानं जनयति। क्वचित् च अपरोक्षं—इति उपेयते परैः, तद्वदस्माकं किं न स्यात्? ननु—तत्र अवच्छेदकद्वयमस्ति। मनस्त्वेन परोक्षज्ञानजनकता।

इन्द्रियत्वेन चक्षुरादिवत् असाधारणेन अपरोक्षज्ञानजनकता। इन्द्रियत्वं च—शब्देतरोद्भूत*विशेषगुणाभावसमानाधिकरणज्ञानकारण[१]-मनःसंयोगाश्रयत्वम्। स्मृत्यजनकवृत्तिज्ञानकारणमनःसंयोगाश्रितत्वं वा। तत्तु चक्षुरादाविव मनस्यपि वर्तते। एवं शब्दे द्वैरूप्यं वाच्यम्। एकं परोक्षज्ञानजनकतावच्छेदकम्। अपरं अपरोक्षज्ञानजनकतावच्छेदकं—इति चेत्। उच्यते विषयाजन्यज्ञानजनकत्वेन वा ज्ञातकरणत्वेन† वा शब्दस्य परोक्षज्ञानजनकत्वम्। योग्यपदार्थनिरूपितत्वं पदार्थभेदपरशब्दत्वेन‡ च अपरोक्षज्ञानजनकता। धार्मिकस्त्वमसि—इत्यादौ व्यभिचारवारणाय आद्यं विशेषणम्। इतरविशेषणव्यावर्त्यं तु स्पष्टम्।

एतच्च—दशमस्त्वमसि, राजा त्वमसि—इति वाक्यात्—दशमोऽहमस्मि, राजाहमस्मि—इत्यादिसाक्षात्कारदर्शनात्। अन्यथा—नाहं

१ 'ज्ञानजनक' इति क. ख. पुस्तकयोः।

* शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानाऽसाधारणकारणमनःसंयोगाश्रयत्वमिन्द्रियम्। ननु—ज्ञानकारणासाधारणमनःसंयोगाश्रयत्वं आत्मन्यपि अस्ति इति तद्वारणाय 'विशेषगुणानाश्रयत्वे' इति। ननु—एतदपि इन्द्रियेष्वसिद्धम्। अतएव—'उद्भूते'ति। तदपि श्रोत्रे ऽव्याप्तं—इति चेत् एतद्वारणाय 'शब्देतरे'ति। ननु—पुरीत इति अतिव्याप्तिवारणाय—'ज्ञानकारणे'ति। कालादावतिव्याप्तमिति तद्वारणाय—'असाधारणे'ति सङ्क्षेपः।

† अतिव्याप्तिवारणाय ज्ञानकरणत्वेनेति—अज्ञातकारणत्वेन वा इति अवगन्तव्यम्।

‡ अभेदप्रतिपादकेन 'तत्त्वमस्या''दि वाक्यरूपशब्देन इत्यर्थः।

दशमः नवमोऽहमस्मि—नाहं राजा व्याधएवाहमस्मि—इत्यादि-साक्षात्कारिभ्रमनिवृत्तिः ततो न स्यात्। साक्षात्कारिभ्रमे साक्षात्कारिविरोधिज्ञानत्वेनैव विरोधित्वकल्पनात्।

न च—तत्र वाक्यात् पदार्थमात्रोपस्थितौ मानसः संसर्गबोधः—इति वाच्यम्। सर्वस्मिन्नपि वाक्ये तथा सम्भवेन शब्दप्रमाणमात्रोच्छेदप्रसङ्गात्[१]। असाधारणमनःसहकारित्वेन पदार्थज्ञानस्य प्रमाणान्तरत्वावश्यकत्वात् च। 'यदसाधारणं कारणं' इत्यादि न्यायात्। अतएव वाक्यात् परोक्षज्ञानानन्तरं मानसज्ञानानन्तरमेव भ्रमनिवर्तकं—इत्यपास्तम्।

अन्वय-व्यतिरेकाभ्यां तत्र वाक्यस्यैव कारणतावधारणात्। अन्यथा वाक्याश्रवणात् पूर्वमेव सामग्र्याः सम्भवेन मनसा चक्षुरादिना वा साक्षात्कारजननप्रसङ्गात्। वाक्यमपि तत्र सहकारि—इति चेत्। तर्हि आयातं वाक्यस्यैव प्रामाण्यम्। मनसो ऽसाधारणकारण*त्वात्। तस्मात् शब्द एव तत्र सहकारहेतुः। यथा च परोक्षत्वव्याप्यमेकं मानसत्वमपरोक्षव्याप्यमपरम्। तद्वत् शब्दत्वमपि द्विविधम्। तेन न साङ्कर्यप्रसङ्गः इति दिक्।

## इति शब्दादपरोक्षज्ञानसिद्धिः।

---




१ 'मात्रोच्छेदापत्तेः' इति ख. पुस्तके।

* सहकारित्वात् कारणत्वमित्यर्थः।

ननु—अस्तु शब्दस्य ब्रह्मसाक्षात्कारकरणत्वम्। तथापि अविद्यानिवर्तिका किं स्वप्रकाशा चित्? उत तदाधारभूतावृत्तिः? नाद्यः। तस्य इदानीमपि सत्त्वेन नित्यनिवृत्त्यापत्तेः। न द्वितीयः। असत्त्वात् सत्यसिद्धेरयोगात्। जानामि—इति ज्ञप्तिरूपचिद्विरोधस्यैव अनुभवसिद्धत्वेन अज्ञप्तिरूपवृत्तिविरोधस्य असम्भवात्। चिता प्रकाशमानसुखादौ अज्ञानादर्शनात् च—इति चेत्। न। अविद्यानिवर्तकं यद्यपि न स्वप्रकाशचैतन्यरूपं ज्ञानमात्रं तस्य तत्साधकत्वात्। तथापि श्रवणादिसाध्यापरोक्षवृत्तिसमारूढं तदेव। तदुक्तम्।

तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत्।
सूर्यकान्तमुपारुह्य तन्न्यायं चिति योजयेत्॥

इति।

ननु—तर्हि सविलासाज्ञाननाशकमिदं ब्रह्मज्ञानं कथं नश्येत्? नाशकान्तराभावात्—इति चेत्। शृणु। यथा कतकरजःसलिलेन संयुज्य पूर्वयुक्तरजोन्तरविश्लेषं जनयत्स्वविश्लेषमपि जनयति। तथा ह्यात्मनि अध्यस्यमानं ब्रह्मज्ञानं पूर्वाध्यस्तसर्वप्रपञ्चं निवर्तयन् स्वात्मानमपि निवर्तयतीति। तदुक्तम्।

[१]अज्ञानकलुषं जीवं ज्ञानाभ्यासात् हि निर्मलम्।
कृत्वा ज्ञानं स्वयं नश्येत् जलं कतकरेणुवत्॥

इति। केचित्तु। अन्यं निवर्त्य स्वयमपि निवृत्तौ दग्धलोहपीताम्बुन्यायं उदाहरन्ति इति। अन्ये पुनः—ब्रह्मज्ञानमज्ञानस्यैव

---

१ 'अविद्याकलुषं' इति क. पुस्तके।

निवर्तकम्। ज्ञानाऽज्ञानयोरेव साक्षात् विरोधात्। प्रपञ्चस्य च उपादाननाशात् न नाश इति प्रपञ्चान्तर्गतस्य ब्रह्मज्ञानस्यापि तत एव नाशः। न च—प्रपञ्चस्य ज्ञानाऽनिवर्त्यत्वे मिथ्यात्वानुपपत्तिः—इति वाच्यम्। प्रपञ्चनिवृत्तेः साक्षात् ज्ञानजन्यत्वाभावे ऽपि ज्ञानजन्याज्ञाननाशजन्यत्वात् साक्षात्परम्परया वा ज्ञानैकनिवर्त्यत्वाङ्गीकारात्।

ननु—भवतु अविद्यानिवृत्त्या तत्कार्यनिवृत्तिरूपा मुक्तिः। सैव तु न सम्भवति। तथा हि। अविद्यानिवृत्तिः किं आत्मरूपा तद्भिन्ना वा? नाद्यः। असाध्यत्वापत्तेः। द्वितीये ऽपि किं सती? उत मिथ्या? आद्ये। अद्वैतहानिः। अन्त्ये। अविद्यातत्कार्यान्यतरापत्तिः—इति चेत्। मैवम्[१]। चरममनोवृत्त्युपलक्षितस्य आत्मनो ऽज्ञानहानिरूपत्वात्। न च—उपलक्षणनिवृत्त्या मुक्तेरपि निवृत्तिः—इति वाच्यम्। पाके निवृत्ते ऽपि पाचकाऽनिवृत्तिदर्शनात्। तदुक्तम्।

> निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।
> उपलक्षणनाशे ऽपि स्यान्मुक्तिः पाचकादिवत्॥

इति। न च—वृत्त्युपलक्षितस्य पश्चादिव पूर्वमपि सत्त्वेन मोहकाले ऽपि तद्धान्यापत्तिः—इति शङ्क्यम्। पूर्वसिद्धस्य उपलक्षणत्वायोगात्। न हि पाकसम्बन्धात् पूर्वं पाचको भवति। तथा व्यवह्रियते वा इति दिक्।

---

१ 'नैवम्' इति ग. क. पुस्तकयोः।

अथ तथापि कस्यायं मोक्षः पुमर्थः । किं अहमर्थस्य ? उत चिन्मात्रस्य ? नाद्यः । त्वन्मते अहमर्थस्य मुक्त्यनन्वयात् । नान्त्यः । अहं मुक्तः स्यां—इतिवत्—चिन्मात्रं मुक्तं स्यात्—इति इच्छाया अनुदयात्—इति चेत् । न । अहमर्थगतचिदंशस्यैव मुक्तिकालान्वयित्वेन परमानन्दरूपत्वेन च पुमर्थत्वसम्भवात् । न च—सुखस्य दुःखाभावमात्रत्वे वैशेषिकमोक्षवदपुरुषार्थत्वम् । अतिरेके च सद्वितीयत्वं—इति वाच्यम् । दुःखाभावातिरेके ऽपि आत्मानतिरेकात् । आत्मनस्य स्वप्रकाशसुखस्वरूपत्वेन ज्ञानानन्दैकरूपत्वात् । तदुक्तम् ।

तस्मादविद्यास्तमयो नित्यानन्दः प्रकीर्तितः ।
निःशेषदुःखच्छेदाच्च पुरुषार्थः परो मतः ॥

इति । न च—अर्थभेदाभावे सुखप्रकाश इति सह प्रयोगो न स्यात्—इति वाच्यम् । अविद्याकल्पितदुःखजडात्मकत्वरूपव्यावृत्तिभेदेन तदुपपत्तेः । न च—स्वप्रकाशसुखस्य स्वतः स्फुरणे ऽपि दुःखाभावस्य अस्फुरणात् अपुमर्थता—इति वाच्यम् । दुःखाभावस्यापि आत्मानतिरेकेण आत्माभिन्ने सुखे स्फुरणे सति तस्यापि स्फुरणात् । तत्त्वेन स्फुरणस्य अप्रयोजकत्वात् च । तस्मात् स्वप्रकाशचिद्भिन्नं सुखं इति दिक् ।

## इति चिदंशस्य मुक्त्यन्वयित्वनिरूपणम् ।

---

अथ जीवन्मुक्तिः। अथ कथं नष्टाविद्यस्य जीवन्मुक्तस्य अविद्यावत्पुरुषवद्व्यवहारः* इति ?—चेत्। उच्यते। अविद्यालेशाङ्गीकारात्। तथा हि। यद्यपि ज्ञानेन अज्ञानं निवर्तितमेव दीपेनेव तमः। तस्य तद्विरोधिस्वभावत्वात्। तथापि तदुपादेयं† अहङ्कार-देहादि निरुपादानमेव यावत्प्रारब्धकर्मभोगं अनुवर्तते। दृष्टत्वादेव। न हि दृष्टे ऽनुपपन्नं नाम।

तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ सम्पत्स्ये‡।

इति श्रुतिश्च। किञ्च। तार्किकैरपि हि समवायिकारणनाशात् द्रव्यनाशमङ्गीकुर्वद्भिः निरुपादानं द्रव्यं क्षणमात्रं तिष्ठतीत्यङ्गीकृतम्। नित्यपरमाणुसमवेतद्व्यणुकनाशे तु असमवायिकारणनाशादेव द्रव्यनाशः। समवायनिरूपित§कारणनाशत्वमुभयोरनुगत||मिति न

---

* अविद्यायुक्तपुरुषवत् अज्ञानिवत्—अहं दुःखी—इत्यादिव्यवहारः कथं भवतीति शङ्का ?।

† 'तदुपादेयं' अविद्योपादानकमित्यर्थः।

‡ 'तस्य' एवमाचार्यवतो ऽस्य पुरुषस्य मुक्ताविद्याभिमानस्य। 'तावदेव' तावानेव कालः 'चिरं' क्षयः 'सदात्मस्वरूपसम्पत्तेः' इति शेषः। कियान् कालः चिरमित्युक्ते ? 'यावत् न विमोक्ष्ये' न विमोक्ष्यते। येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयात् देहपातो यावदित्यर्थः। 'अथ' तदैव 'सम्पत्स्यते' इति। नात्र अथशब्द आनन्तर्यार्थः। नहि देहमोक्षस्य सत्सम्पत्तेश्च कालभेदो ऽस्ति येन अथशब्द आनन्तर्यार्थः स्यात्।

§ समवायेन कार्यम्प्रति यत्कारणं तन्नाशत्वमित्यर्थः।

|| 'उभयानुगतं' समवायिकारणनाशाऽसमवायिकारणनाशयोः अनुगतमित्यर्थः।

अननुगमः। ये तु। असमवायिकारणनाशादेव सर्वत्र कार्यद्रव्यनाशं अङ्गीकुर्वन्ति तेषामाश्रयनाशस्थले लक्षणद्वयं अनुपादानं कार्यं तिष्ठति। एवमत्रापि प्रतिबन्धसन्निपाते बहुकालावस्थितिः केन वार्यते। प्रारब्धकर्मणश्च प्रतिबन्धकत्वं श्रुतिसिद्धम्। अन्तःकरण-देहाद्यवस्थित्यन्यथानुपपत्तिसिद्धं च। तदुक्तम्।

उपादाने विनष्टे ऽपि क्षणं कार्यं प्रतीयते[1]।
इत्याहुस्तार्किकास्तद्वदस्माकं किं न सम्भवेत्॥
तन्तूनां दिनसङ्ख्यानां तैस्तादृक् क्षण ईरितः।
भ्रमस्यासङ्ख्यकल्पस्य योग्यः क्षण इहेष्यताम्*॥

इति। अतएव शिष्यसेवकाद्यदृष्टमपि तत्र प्रतिबन्धकम्। तद-भावमपेक्ष्य च पूर्वसिद्ध एवाज्ञाननाशः तत्कार्यमन्तःकरणादिकं नाशयतीति न पुनर्ज्ञानापेक्षा। न जानामि—इत्यादिप्रत्ययस्तु तस्य

---

१ 'प्रवर्तते' इति ख. पुस्तके।

---

* प्रारब्धकर्मणः निमित्तमात्रत्वात् तत्सद्भावमात्रेण उपादाने विनष्टे ऽपि कथं कार्यानुवृत्तिः? इति शङ्कायां न्यायशास्त्रसिद्धदृष्टान्तेन कार्यस्य अनुवृत्तिं सम्भावयति। तार्किकैस्तावत्—उपादानकारणस्य नाशे ऽपि क्षण-मात्रं कार्यमवतिष्ठते—इत्युक्तम्। तद्देवात्रापि अहङ्कारदेहादिकं नि-रुपादानमेव यावत्प्रारब्धकर्मभोगमनुवर्तत इति भावः।

ननु—तार्किकैः कार्यस्य क्षणमात्रमवस्थानमङ्गीकृतम्। न चिरकालं—इति चेत्। शृणु। संसारस्य अनादिकालानुवृत्तत्वात् तत्संस्कारवशेन कुलालचक्रभ्रमवत् चिरकालानुवृत्तिर्न विरुध्यते इति सर्वमविरुद्धम्।

निवृत्ताज्ञानस्यापि अज्ञाननाशजनितादनुपादानात् अन्तःकरणाश्रयादेव अज्ञानसंस्कारात् तत्त्वज्ञानसंस्कारनिवर्त्त्यात् भवति।

अन्तःकरणस्थित्यवधेः।

इति विवरणकृतः। 'अहं ब्रह्मास्मि' इति चरमसाक्षात्कारानन्तरं—अहं ब्रह्म न भवामि—न जानामि—इत्यादिप्रत्ययो नास्त्येव। यदि—परं घटं न जानामि—इत्यादिप्रत्ययः स्यात्। तदुपपादनाय चेयं संस्कारकल्पना—इति न किञ्चिदनुपपन्नम्।

अविद्यालेशपदेनापि अयमेव संस्कारो विवक्षितः। न हि सावयवमज्ञानम्। येन कियत् नश्यति कियत् तिष्ठति—इति वाच्यम्। अनिर्वचनीयत्वात्। एकदेशाभ्युपगमे तु तन्निवृत्त्यर्थं पुनः चरमं ज्ञानमपेक्षितमेव। तच्च मृतिकाले दुर्घटं—इति तत्त्वज्ञानसंस्कारनाशता तस्य अभ्युपेता। ततश्च संस्कारपक्षात् न कोऽपि विशेषः इति। विस्तरस्तु स्वरूपप्रकाशे चतुर्थपरिच्छेदे इति दिक्।

ननु—कथं महावाक्यार्थावगममात्रात् जीवन्मुक्तिः? तस्या भगवता पतञ्जलिना अष्टाङ्गयोगसाध्यत्वप्रतिपादनात्। तथाहि।

यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयो ऽष्टावङ्गानि [यो. द. पा. २ सूत्र. २९]

तत्र[1] अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः ३०

शौच-सन्तोष-तपःस्वाध्यायेश्वरप्रणिधाना[2]नि नियमाः ३२

---

१ 'तत्र' एतत् क. पुस्तके वङ्गदेशीयाश्यातिकसोसायटीमुद्रितयोगवृत्तिपुस्तके च नास्ति। परं नैतदसाध्विति प्रतीमः।

२ 'प्रणिधाना नियमा' इति क. पुस्तके पाठः।

इति। एतत्सूत्रद्वयस्य व्याख्या। तत्र अशास्त्रीयप्राणिवधो हिंसा*। सा च कृत-कारित-अनुमोदित भेदेन त्रिधा। एवमयथार्थभाषणं अवद्यहिंसानुबन्धि यथार्थभाषणं च अनृतम्। तद्विरुद्धं सत्यम्†।

---

* एतेन श्रौतं पश्वालम्भनं हिंसा न भवतीति अवगम्यते। सर्वथा सर्वदा सर्वभूतानामनभिद्रोहो ऽहिंसा—इति व्याचष्टे योगभाष्यकारो भगवान् बादरायणः। योगवार्तिककृत् विज्ञानभिक्षुस्तु—आश्रमविहित-नित्यकर्माविरोधेन सर्वथा सर्वदा सर्वभूतानामनभिद्रोहो ऽहिंसा—इत्याह। आश्रमविहितनित्यकर्मणि शौचादौ क्षुद्रजन्तुहिंसाया अपरि-हार्यत्वात्। अतएव योगिनां प्राणायामादिकं तत्पापक्षालनाय नित्यतया शास्त्रे विहितम्।

योगवृत्तिकृत् धारेश्वरस्तु।—प्राणवियोगप्रयोजनव्यापारो हिंसा। तद-भावः अहिंसा—इत्याह। तन्मते हिंसायाः सर्वकालमेव परिहार्यत्वम्। वार्तिककृदुक्तं—शौचादिषु क्षुद्रजन्तुहिंसाया अपरिहार्यत्वं नैतत्सम्मतम्। शास्त्रीयपश्वालम्भनमपि हिंसैवेति तदाशयः। इदमेव तु युक्तं प्रतीमः।

† वृत्तिकृता—वाङ्‌मनसयोर्यथार्थत्वं सत्यं—इत्युक्तम्। भाष्ये तु। यथार्थे वाङ्‌मनसे सत्यम्। यथा दृष्टं यथानुमितं तथा श्रुतं तथा वाङ्‌मनश्चेति परत्र स्वबोधसंक्रान्तये वागुक्ता। सा यदि न वञ्चिका भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेत् इति। इत्येषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय। यदि च एवमप्यभिधीयमाना भूतोपघात-परैव स्यात् न सत्यं भवेत्। पापमेव भवेत्। तेन पुण्याभासेन पुण्य-प्रतिरूपकेण कष्टं तमः प्राप्नुयात्। तस्मात्परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात्—इति उक्तम्।

स्तेयं अशास्त्रीयमार्गेण परद्रव्यस्वीकरणम्*। अशास्त्रीयस्त्रीपुंसव्यतिकरो मैथुनम्†। शास्त्राविरुद्धमार्गेण देहयात्रानिर्वाहकाधिकभोगसाधनस्वीकारः परिग्रहः‡। एते निवृत्तिलक्षणा उपरमा यमाः।

एवं शौचमपि द्विविधम्। बाह्यमाभ्यन्तरं च। तत्र मृज्जला-

---

* अत्र मूले 'अस्तेये' निरूपयितव्ये अभावस्य प्रतियोगिनिरूपणाधीननिरूपणत्वात् आदौ स्तेयमेव लक्षितम्। तत्र—अशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं स्तेयम्। न तत्प्रतिषेधः पुनरस्पृहारूपः स्तेयमिति। अत्र विज्ञानभिक्षुणोक्तम्। प्रतिग्रहव्यावर्तनायाः शास्त्रपूर्वकमिति। चौर्येणापि स्वत्वं जायत इत्यवगम्यते। अथ वा स्वीकरणं ममेति बुद्धिमात्रं भ्रमसाधारणमिति। वृत्तौ तु—स्तेयं परस्वापहरणं तदभावः 'अस्तेयम्' इति।

† भाष्ये—गुप्तेन्द्रियस्य उपस्थस्य संयमः 'ब्रह्मचर्यम्' इति। वार्तिके तु। 'संयम' इत्यत्र अन्येन्द्रियसाहित्यमुपस्थस्य ग्राह्यम्। तेन—उपस्थस्य विषये सर्वेन्द्रियव्यापारोपरमः ब्रह्मचर्यमिति लक्षणम्। तथा चोक्तं दक्षसंहितायाम्।

ब्रह्मचर्यं सदा रक्षेत् अष्टधा लक्षणं पृथक्।
स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्॥
सङ्कल्पो ऽध्यवसायश्च क्रियानिर्वृत्तिरेव च।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥

इति। प्रेक्षणं रागपूर्वकं दर्शनमित्यर्थः। वृत्तौ तु न कोऽपि विशेषः।

‡ विषयाणां अर्जन-रक्षण-क्षय-सङ्ग-हिंसादोषदर्शनादस्वीकरणं 'अपरिग्रहः' इति भाष्ये। परिग्रहे हिंसाद्या अपि दोषाः तेषां 'दर्शनात्' इति विशेषणं दम्भाशक्त्यादिनिमित्तकास्वीकरणे ऽतिव्याप्तिवारणाय। हिंसा च अत्र दातृप्रभृतीनां बोध्या इति वार्तिके। वृत्तौ तु—भोगसाधनानां अस्वीकरणं अपरिग्रहः इति। एते पञ्च यमशब्दवाच्याः।

दिभिः कायादिचालनं हितमितमेध्याशनादि च बाह्यम्। मैत्री-मुदितादिभिः मदमानादिचित्तमलचालनं आन्तरम्। सन्तोषः विद्यमानभोगोपकरणात् अधिकस्य अनुपाधित्सारूपा चित्तवृत्तिः। तपः क्षुत्पिपासा-शीतोष्णादिद्वन्द्वसहनम्। काष्ठमौनाकारमौनादिव्रतानि च। इङ्गितेनापि स्वाभिप्रायाप्रकाशनं काष्ठमौनम्। अवचनमात्रं आकारमौनम् इति भेदः। स्वाध्यायो मोक्षशास्त्राध्ययनम्*। ईश्वर-प्रणिधानम् सर्वकर्मणां तस्मिन् परमगुरौ फलनिरपेक्षतयार्पणम्। प्रणवादिजपो वा यथाधिकारम्। एते विधिरूपा नियमाः।

ये अहिंसाद्याः पूर्वं पञ्च यमा उक्ताः त एव जात्याद्यनवच्छेदेन दृढ़भूमयो महाव्रतशब्दवाच्या भवन्ति। तदुक्तं पतञ्जलिना मुनिना। "ते[1] जाति-देश-काल-समयानवच्छिन्नाः सार्वभौमा महाव्रतम्[2]" ३१

---

१ 'एते जाति-देश०' इति क. ख. पुस्तकयोः। वङ्गदेशीयास्यातिक-सोसायटीमुद्रितयोगवृत्तिपुस्तके ऽपि एवमेव पाठः। तत्रैव 'एते त्वि'ति पाठान्तरं च। काशीस्थपाठशालामुद्रितयोगवार्तिकपुस्तके तत्रैव मुद्रित-व्यासभाष्यपुस्तके च केवलं 'जाति-देश०' इत्येव वर्तते। तदशुद्धमिति भाति।

२ 'सार्वभौममहाव्रतम्' इति ग. पुस्तके वं. दे. ए. सो. मु. पुस्तके च वर्तते। परमत्र 'सार्वभौमामहा०' इत्येव साधु इति भाष्यादिभ्यो ऽवगम्यते।

---

* 'स्वाध्याय'शब्देन 'मोक्षशास्त्राध्ययनं' इति यदुक्तम्। तन्न मीमांसकैरादियते। तेषां मते "अहरहः स्वाध्यायमधीयीत" इत्यादिवाक्यैः स्वाध्यायो वेदाध्ययनम्। न केवलमोक्षशास्त्रस्यैवाध्ययनमित्यादि। वस्तुतस्तु। सु—अध्यायः उत्तमं अध्ययनं—अर्थात् यस्य यस्य येन येन अधीतेन ऐहिक-पारलौकिकसुखसाधनं भवति तस्याध्ययनमेव स्वाध्यायः। वेदस्य च सर्वविद्यानिधानत्वात् स एव स्वाध्यायशब्देन गृह्यते। तस्मात् यथा प्रवृत्तिमार्गपरस्य त्रय्यध्ययनं स्वाध्यायः तथैव निवृत्तिनिरतस्य मोक्ष-शास्त्राध्ययनमपि स्वाध्याय एवेत्यलं बहुना पाण्डित्येन।

इति। तत्र अहिंसा जात्यवच्छिन्ना यथा*—हिंसारूपव्यसनपरस्य मृगातिरिक्तान् न हनिष्यामि—इति। सैव देशावच्छिन्ना यथा—क्षेत्रे न हनिष्यामि—इति। एवं कालावच्छिन्ना यथा—पर्वणि न हनिष्यामि—इति। सैव प्रयोजनविशेषरूपसमयावच्छिन्ना यथा—क्षत्रियस्य देव-ब्राह्मणप्रयोजनमन्तरेण न हनिष्यामि—इति। एवं विवाहादिप्रयोजनव्यतिरेकेण† अनृतं न वदिष्यामि—इति। एवं आपत्कालव्यतिरेकेण‡ इक्षुदयाद्यतिरिक्तं स्तेयं न करिष्यामि—इति। एवं

---

* अत्र अहिंसादीनां पञ्चानामपि यमानां त्रिभिर्जात्यादिभिरनवच्छेदो विवक्षितः। तत्र अहिंसाख्यस्य मुख्यत्वात् प्राथम्यम्।

† अनृतभाषणस्य सर्वथा वर्ज्यत्वेऽपि विवाहादिष्वदोषः। तथाच श्रुतिः॥

"सत्यानृते मिथुनीकरोति"।

इति। भागवतेऽपि।

"स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे।
गो-ब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम्"॥

इति। 'स्त्रीषु' प्रोत्साहनेन वशीकरणे। 'नर्मणि' परिहासे। विवाहे च वरादिस्तुतौ। 'हिंसायां' च कस्यचित् प्राप्तायां अनृतं न दोषाय। तथाच याज्ञवल्क्यः।

"वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदत्"।

इत्यादिवाक्यैः विवाहादिषु अनृतभाषणस्य अदुष्टत्वाभिधानात् तत्रानृतवाद्यपि सत्यवागेव भवति। परमेतदवच्छिन्नं सत्यं महाव्रतसंज्ञकं भवतीत्याशयः।

‡ स्तेयं निन्द्यमपि आपदि प्राणरक्षणार्थं इक्षुदयादिरूपं स्तेयं न दोषावहं भवतीत्याशयः।

ऋतुव्यतिरिक्तकाले* पत्नीं न गमिष्यामि—इति । एवं गुर्वादिप्रयोजनमन्तरेण न प्रतिग्रहीष्यामि—इति । यथायोग्यव्यवच्छेदो द्रष्टव्यः ।

एतादृगवच्छेदपरिहारेण यदा सर्वजाति-सर्वदेश-सर्वकाल-सर्वप्रयोजनेषु भवाः सार्वभौमाः अहिंसादयो भवन्ति महता प्रयत्नेन परिपाल्यमानत्वात् तदा ते महाव्रतशब्देनोच्यन्ते । एतादृशव्रतदार्ढ्ये च काम-क्रोध-लोभ-मोहानां चतुर्णामपि नरकद्वारभूतानां निवृत्तिः† इति सूत्रद्वयार्थः इति दिक् ।

---

* एवं स्त्रीसङ्गस्य वर्ज्यत्वे ऽपि गृहस्थस्य—

"ऋतुस्नातां तु यो भार्यां गृहे तिष्ठन्न गच्छति ।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः" ॥

इत्यादिनिषेधात् ।

"ऋतौ भार्यामुपेयात् । स ब्रह्मचारी" ।

इत्यादिविधेश्च ऋतुकाले भार्यागमने ऽपि ब्रह्मचर्यहानिर्न भवतीत्यर्थः ।

† ननु—कुश-समिधाद्याहरणादिवैधहिंसानामपि परित्यागे नित्यकर्मपरित्यागेन प्रत्यवायापत्तिः स्यात्—इति चेत् । नैवम् ।

"सर्वाणि भूतानि सुखे रमन्ते
सर्वाणि दुःखेषु तथोद्विजन्ति ।
तेषां भयोत्पादनजातखेदः
कुर्यान्न कर्माणि हि जातवेदः" ॥

इति मोक्षधर्मादिवाक्यैः 'जातवेदस्य' उत्पन्नात्मज्ञानस्य योगिनः कालिकस्य बाह्यकर्मत्यागानुज्ञया अयोगिनामेव बाह्यकर्माकरणे प्रत्यवायात् योगरूपस्यैव नित्यकर्मणो मन्वादिभिर्विहितत्वाच्च ।

स्थिरसुखमासनं पद्म-स्वस्तिकाद्यनेकविधम् । पूरक-कुम्भक-रेचकाद्यनेकविधः प्राणायामः । श्रोत्रादीनामिन्द्रियाणां स्वस्वविषयेभ्यो विमुखीकरणं प्रत्याहारः । हृत्पुण्डरीकादौ मनसः चिरकालस्थापनं धारणा । एवमेकत्र धृतस्य चित्तस्य विच्छिद्य विच्छिद्य भाव्याकारवृत्तिप्रवाहो ध्यानम् । सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः । स तु चित्तभूमिभेदेन द्विविधः । सम्प्रज्ञातो ऽसम्प्रज्ञातश्च । तत्र चित्तस्य पञ्च भूमयो भवन्ति । क्षिप्तं मूढं विक्षिप्तं एकाग्रं निरुद्धम्—इति ।

तत्र सर्वदा रागादिवशात् विषयेषु अभिनिविष्टं क्षिप्तम् । तन्द्रादिग्रस्तं मूढम् । सर्वदा विषयासक्तमपि कदाचित् ध्याननिष्ठं क्षिप्ताद्विशिष्टतया विक्षिप्तम् । तत्र क्षिप्त-मूढयोः समाधिशङ्कैव नास्ति । विक्षिप्ते तु चेतसि कादाचित्कः समाधिः । स तु विक्षेपप्राधान्यात् योगपक्षे ऽपि नास्ति । किन्तु तीव्रतरपवनविक्षिप्तप्रदीपवत् स्वयमेव नश्यति । एकाग्रं त्वेकविषयकधारावाहिकवृत्तिसमर्थं सत्वोद्रेकेन तमोगुणकृततन्द्रादिरूपलयाभावात् आत्माकारावृत्तिः सा च रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावादेकविषयैव इति । शुद्धे सत्वे भवति चित्तमेकाग्रम् । अस्यां भूमौ सम्प्रज्ञातः समाधिः । अत्र ध्येयाकारावृत्तिरप्यस्ति । तदुक्तम् ।

ब्रह्माकारमनोवृत्तिप्रवाहो ऽहङ्कृतिं विना ।
स सम्प्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः ॥

इति । तत्र सोऽपि मुमुक्षुणा हेयः । सवितर्कसविचारसानन्दास्मितभेदेन चतुर्द्धा भवति । सूत्र च ।

वितर्क-विचारानन्दास्मितानुगमात् सम्प्रज्ञातः।

इति। तत्र सम्यक् संशय-विपर्ययादिरहितत्वेन प्रज्ञायते प्रकर्षेण विशेषरूपेण ज्ञायते भाव्यस्वरूपं येन स सम्प्रज्ञातः समाधिः। भावनाविशेष इति यावत्। भावना तु भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनःपुनः निवेशनम्। भाव्यं च त्रिविधम्। ग्राह्य-ग्रहण-गृहीतृभेदात्। ग्राह्यमपि द्विविधम्। स्थूल-सूक्ष्मभेदात्। तत्र यदा स्थूलं महाभूतेन्द्रियात्मकं षोडशविकाररूपं विषयमादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखेन च भावना प्रवर्तते तदा सवितर्कः[१] समाधिः। अस्मिन्नेवालम्बने पूर्वापरानुसन्धानेन शब्दार्थोल्लेखशून्यत्वेन च यदा भावना प्रवर्तते तदा निर्वितर्कः[२]। एतौ उभावपि अत्र वितर्कशब्देनोक्तौ।

तन्मात्रान्तःकरणलक्षणं सूक्ष्मं विषयमालम्ब्य तस्य देश-काल-धर्मावच्छेदेन यदा भावना प्रवर्तते तदा सविचारः समाधिः। अस्मिन्नेवालम्बने देश-काल-धर्मावच्छेदं विना धर्मिमात्रावभासित्वेन यदा भावना प्रवर्तते तदा निर्विचारः। एतौ उभावपि अत्र विचारशब्देनोक्तौ।

## सोऽयं ग्राह्यसमाधिः।

---

१ 'सविकल्पः' इति ख. पुस्तके।

२ 'निर्विकल्पः' इति ख. पुस्तके

यदा रजस्तमोलेशानुविद्धं अन्तःकरणसत्त्वं विभाव्यते तदा गुणभावात् चिच्छक्तेः सुखप्रकाशमयस्य सत्त्वस्य भाव्यमानस्य उद्रेकात्सानन्दः समाधिर्भवति। अस्मिन्नेव समाधौ ये बद्धधृतयः सत्त्वान्तरं प्रधानं पुरुषरूपं च न पश्यन्ति ते विगतदेहाकारत्वात्। विदेहशब्देनोच्यन्ते ।

## सो ऽयं ग्रहणसमाधिः ।

---

ततः परं रजस्तमोलेशानभिभूतं शुद्धसत्त्वमालम्बनीकृत्य या भावना प्रवर्तते तस्यां ग्राह्यस्य सत्त्वस्य न्यग्भावात्। चिच्छक्तेरुद्रेकात् सत्तामात्रावशेषत्वेन यः समाधिः सो ऽस्मिता—इत्युच्यते। न च अहङ्कारास्मितयोरभेदः शङ्कनीयः। यत्र अन्तःकरणसत्त्वं उल्लेखेन विषयान् वेदयते सो ऽहङ्कारः। यत्र तु अन्तर्मुखतया प्रतिलोमपरिणामेन प्रकृतिलीने चेतसि सत्तामात्रमवभासति सा अस्मिता। अस्मिन्नेव समाधौ ये कृतपरितोषाः ते परं पुरुषमपश्यन्तः चेतसः प्रकृतौ लीनत्वात् प्रकृतिलया इत्युच्यन्ते।

## सो ऽयं गृहीतसमाधिः ।

---

अस्मितामात्रगृहीतृनिष्ठत्वात् ये तु परंपुरुषं विविच्य भावनायां प्रवर्तन्ते तेषामपि केवलपुरुषविषया विवेकख्यातिर्गृहीतृसमाधिरपि नास्मितसमाधिः। विवेकेन अस्मितायाः त्यागात्। तत्र गृहीतृभानपूर्वकमेव ग्रहणभानम्। तत्पूर्वं च सूक्ष्मग्राह्यभानम्। तत्पूर्वं स्थूलग्राह्यभानम्। इति स्थूलविषयो द्विविधो ऽपि वितर्कचतुष्टये-

नानुगतः। एवं द्वितीयो वितर्कविकलः तृतीयानुगतः। तृतीयो वितर्क-विचाराभ्यां विकलो द्वितीयानुगतः। चतुर्थो वितर्क-विचारानन्दैर्विकलो ऽस्मितामात्रः इति चतुरवस्थो ऽयं सम्प्रज्ञातः।

एवं सवितर्क—सविचार—सानन्द—सास्मिताश्च समाधयो अन्तर्धानादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधितया च हेया एव मुमुक्षुभिः। तदुक्तं योगवासिष्ठे।

सर्वेच्छाजालसंशान्तौ आत्मलाभोदयो हि यः।
स कथं सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते॥
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी।
नागरं नागरीकान्तं कुग्रामललना इव॥

इति। अतएव मुक्तिविरोधिसमाधीनां फलमुक्तं वायुपुराणे।

दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः॥
पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते।

इति। गृहीतृग्रहणयोरपि चित्तवृत्तिविषयत्वात् ग्राह्यकोटावेव निवेश इति विवेकः। एत एव सविचारा निर्विचाराश्च सूक्ष्मविषया व्याख्याताः। सूत्रं च।

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्।

इति। तत्र पार्थिवस्य अन्तर्गन्धतन्मात्रं विषयः। आप्यस्यापि रसतन्मात्रम्। तैजसस्य रूपतन्मात्रम्। वायवीयस्य स्पर्शतन्मात्रम्।

नभसः शब्दतन्मात्रम् । तेषामहङ्कारः । तस्य लिङ्गमात्रं महत्तत्वम् । तस्यापि अलिङ्गं* प्रधानं सूक्ष्मो विषयः । सप्तानामपि प्रकृतीनां प्रधान एव सूक्ष्मताविश्रान्तिः यद्यपि प्रधानादपि पुरुषः सूक्ष्मो ऽस्ति तथापि अन्वयिकारणाभावात् न तत्र तादृक् सूक्ष्मत्वम् । किन्तु सर्वान्वयिकारणे प्रधान एव निरतिशयं सौक्ष्म्यं व्याख्यातमिति सूत्रार्थः । तथा च अयमेव सबीजः समाधिः । तत्र—सवितर्क—निर्वितर्क—सविचार—निर्विचाराणां मध्ये निर्विचार एव त्रयाणां फलम् । निर्विचारस्य फलमाह ।

निर्विचारवैशारद्ये ऽध्यात्मप्रसादः ।

इति । निर्विचारस्य प्रकृष्टाभ्यासबलात् । 'वैशारद्ये' रजस्तमो ऽनभिभूतसत्त्वोद्रेके सति 'अध्यात्मप्रसादः' । ततो ऽविद्यास्मितारागद्वेषाभिनिवेशादिरूपक्लेशवासनादिरहितस्य चित्तस्य क्रमा[1]ननुरोधी स्फुटः[2] प्रज्ञालोकः† प्रादुर्भवति । तथा च सूत्रम् ।

---

१ क. ख. पुस्तकयोः 'क्रमानुरोधी' इति पाठः । परमयं न समीचीनः । ग. पुस्तके 'भूतार्थविषयः क्रमाननुरोधी' इति पाठः ।

२ 'स्फुटप्रज्ञालोकः' इति ख. पुस्तके ।

---

* न क्वचिल्लीयते न वा किञ्चिल्लिङ्गयति गमयतीति 'अलिङ्गं' प्रधानमिति । एतदेवातिसूक्ष्मम् ।

† 'क्रमाननुरोधी' युगपत्सर्वार्थग्राही । स्फुटः प्रव्यक्तः स प्रज्ञाख्य आलोक इत्यर्थः । अस्मिन्नर्थे पारमर्षिगाथा उदाहृता भगवता भाष्यकृता । सा च—

प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञो ऽनुपश्यति ॥

इति । पुस्तकान्तरे 'प्रज्ञाप्रसादभागेवमशोच्यः' इति पाठः ।

ऋतम्भरा तत्र प्रज्ञा*।

इति। वैशारद्येन समाहितस्य चित्तस्य योगिनो यः प्रज्ञालोको जायते सा ऋतम्भरा। सा तु—

श्रुता[1]नुमान-ज्ञाभ्यामन्यविषया विशेषार्थत्वात्†।

इति। ननु—क्षिप्त-मूढ़-विक्षिप्ताख्यसंस्काराणां एकाग्रभूमौ निर्विचारादिसंस्कारैः नाशितानामपि निर्विचारादिसंस्काराणां विद्यमानत्वेन नैश्चाल्यमानस्य चित्तस्य कथमध्यात्मप्रसादः? कथं वा ऋतम्भरा प्रज्ञा? तत्राह।

---

१ क. पुस्तके 'श्रौतानुमानं' इति पाठः। क. मु. ए. सो. पुस्तके 'श्रौता-नुमान-प्रज्ञाभ्यां सामान्यविषया०' इति पाठान्तरम् अयमेव वृत्तिकृदभिमत इवेति प्रतिभाति।

---

* ऋतं सत्यं बिभर्ति कदाचिदपि न विपर्ययेण आच्छाद्यते सा 'ऋतम्भरा' अन्वर्था चेयं संज्ञा। सा सत्यमेव बिभर्ति न तत्र विपर्यासज्ञान गन्धो ऽप्यस्ति। योगकाले प्रकृष्टा प्रज्ञा भवति इत्यत्र स्मृतिप्रमाणं यथा,—

आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्॥

इति।

† 'श्रुतं' आगमज्ञानं 'अनुमानं' उक्तलक्षणं ताभ्यां या जायते प्रज्ञा सा सामान्यविषया। शब्द-लिङ्गयोः विशेषप्रतिपत्तौ न हि सामर्थ्यम्। एवं हि निर्विचारवैशारद्यसमुद्भवा ताभ्यां विलक्षणा। विशेषविषयत्वात्। अस्यां हि सूक्ष्मादीनामपि स्फुटेनैव रूपेण प्रतिभासनं भवति।

"तज्जः[१]संस्कारो ऽन्यसंस्कारविरोधी*" ।

इति । ननु—भवतु व्युत्थानसंस्काराणां अतत्त्वविषयप्रज्ञाजनितानां तत्त्वविषयसम्प्रज्ञातसमाधिप्रज्ञाजनितसंस्कारैः प्रतिबन्धः । सम्प्रज्ञातसंस्काराणां प्रतिबन्धकाभावात् एकाग्रभूमावेव सबीजः समाधिः स्यात् । न तु निर्बीजः । तत्राह ।

"तस्यापि निरोधे सर्ववृत्तिनिरोधात्[२] निर्बीजः समाधिः†" ।

इति । सोऽपि द्विविधः भवप्रत्ययो उपायप्रत्ययश्च । तत्र भवप्रत्ययो विदेहप्रकृतिलयानाम् । स च पञ्चविधः ।

"जन्मौषधि-मन्त्रतपः-समाधिजाः सिद्धयः‡" ।

---

१ 'तज्जसंस्कार' इति क. पुस्तके ।
२ 'सर्ववृत्तिविरोधात्' इति क. पुस्तके पाठः ।

---

* तया प्रज्ञया जनितः 'तज्जः' यः संस्कारः सो ऽन्यान् व्युत्थानजान् समाधिजांश्च संस्कारान् प्रतिबध्नाति । स्वकार्यकरणाक्षमान् करोति इत्यर्थः ।

† 'तस्यापि' सम्प्रज्ञातस्यापि 'निरोधे' प्रविलये सति 'सर्वासां "चित्तवृत्तीनां स्वकारणे प्रविलयात् या या संस्कारमात्रा वृत्तिरूपेति तस्यां तस्यां नेतिनेतीति केवलं पर्युदासनात् निर्बीजः समाधिराविर्भवतीति ।

‡ ऐहिकेन कर्मणा देवादिदेहान्तरे जन्ममात्रेण भवन्ती अणिमादिसिद्धिर्जन्मसिद्धिरिति भाष्य-वार्तिककारौ । वृत्तिकृत् तु पक्ष्यादीनां आकाशगमनादिकमपि जन्मसिद्धिरिति । तन्न साधु इति प्रतिभाति । औषधिसिद्धयो यथा पातालादौ रसायनाद्युपभोगात् कायदार्ढ्यादयः । मन्त्रसिद्धिः यथा मन्त्रजपात् केषांचित् आकाशगमनादि । तपःसिद्धिर्यथा विश्वामित्रादीनाम् । समाधिसिद्धयः पूर्वमुक्ताः एताः सिद्धयः पूर्वजन्मनि क्षपितक्लेशानामेव जायन्ते ।

इति न्यायात्। मुमुक्षूणां उपायप्रत्ययमाह।

श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञा-पूर्वक इतरेषाम्।

[१। २०]।

इति। इतरेषां पूर्वोक्तविलक्षणानां आत्मानात्मविवेकदर्शिनां यः समाधिः स श्रद्धापूर्वकः। श्रद्धादयः पूर्वे उपाया यस्य। श्रद्धा योगविषये चित्तप्रसादः। सा हि जननीव योगिनां पाति। ततो वीर्यं उत्साहः। ततः समुपजातवीर्यस्य पाश्चात्यासु भूमिषु स्मृतिः* इति। एतस्य प्रयोजनमाह।

"ततः प्रशान्तवाहितात् संस्कारात्"।

इति। प्रशान्तवाहितानामावृत्तिकस्य चित्तस्य निरिन्धनाग्निवत् प्रतिलोमपरिणामेन उपशमः। तथा च अयमेव सर्वतो विरक्तस्य समाधिफलं विशोका नाम सिद्धिः। सर्वज्ञत्वादिकमनपेक्षमाणस्य योगिनो दृढ़भूमिः सन् धर्ममेघ इत्युच्यते। सूचितं च भगवता।

"प्रसङ्ख्याने ऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः†"।

इति। 'प्रसङ्ख्यानं' सत्त्वपुरुषान्यताख्यातिशुद्धात्मज्ञानं इति यावत्। 'अकुसीदस्य' विशोकानामसिद्धिफलमलिप्सोः सर्वथा द्वैत-

---

* 'स्मृतिः' अनुभूतासम्प्रमोषः। 'समाधिः' एकाग्रता। 'प्रज्ञा' प्रज्ञातत्त्वविवेकः।

† यावतां तत्त्वानां यथाक्रमं व्यवस्थितानां परस्परविलक्षणस्वरूपविभावनं इत्यादि। अनेन प्रकृष्टधर्मस्यैव ज्ञानहेतुत्वमुक्तं भवति।

भानरहितत्वेन धर्मं—प्रत्यक्ब्रह्मैक्यसाक्षात्कारं मेहति—सिञ्चति—इति धर्ममेघः। तत्त्वसाक्षात्कारहेतुरित्यर्थः। एतस्यापि फलमाह।

"ततः क्लेशकर्मनिवृत्तिः"।

इति। ततः धर्ममेघात् अविद्या-अस्मिता-राग-द्वेषाणां प्रसुप्ततनुविच्छिन्नोदाररूपेण चतुरवस्थापन्नानामपि क्लेशानां निवृत्तिः। तथा च सूत्राणि।

क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः॥ [२। १२]।

सति मूले तद्विपाको जात्यायुर्भोगाः[1] [२। १३]।

इति। तत्र अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः अविद्या। बुद्धिपुरुषयोरभेदाभिमानो ऽस्मिता। साधनरहितस्यापि—सर्वं सुखजातीयं मे भूयादिति विपर्ययविशेषो रागः। दुःखसाधने विद्यमाने ऽपि—किमपि दुःखं मे माभूत्—इति विपर्ययविशेषो द्वेषः। आयुरभावे ऽपि—एतैः शरीरेन्द्रियादिभिः अनित्यैरपि वियोगो मे माभूत्—इति आविद्वदङ्गनाबालं स्वाभाविकः सर्वप्राणिसाधारणो मरणत्रासरूपो विपर्ययविशेषो ऽभिनिवेशः। तत्र असतो ऽनुत्पत्तेरनभिव्यक्तरूपेण अवस्थानं सुप्तावस्था तच्च प्रकृतिलयानामेव। अभिव्यक्तस्यापि सहकार्यलाभात् कार्याजननं तन्वस्था। ते च प्रतिपक्षभावनया तनवो योगिनामेव। अभिव्यक्तस्य जनितकार्यस्यापि केनचित् बलवता अभिभवात् विच्छेदावस्था।

---

१ 'भोगः' इति क. पुस्तके।

अभिव्यक्तस्य प्राप्तसहकारिसम्पत्तेः अप्रतिबन्धेन स्वकार्यकरत्वमुदारावस्था। एतच्च सर्वसाधारणमिति।

तथा च एतादृगवस्थाचतुष्टयविशिष्टानां अस्मितादीनां अविद्यैव प्रसवभूमिः। सूत्रं च।

"अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्"।

इति अतएव अविद्यानिवृत्त्यैव क्लेशानां निवृत्तिः—इति सिद्धम्। एतच्च चित्तवृत्तिनिरोधंविना न सम्भवतीति—कथमुक्तं वाक्यार्थावगममात्रेण जीवन्मुक्तिः? कथं वा अज्ञान-तत्कार्यनिवृत्तिः? वृत्तिनिरोधस्य सम्पादयितुमशक्यत्वात्। तदुक्तम्।

अप्यब्धिपानान्महतः सुमेरोन्मूलनादपि।
अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः॥

इति। अतएव काशीखण्डे ऽप्युक्तम्।

नात्मज्ञानादृते मुक्तिः तच्च योगं विना न हि।
स च योगश्चिरं कालादभ्यासादेव जायते॥
आत्मक्रीडस्य सततं सदात्ममिथुनस्य च।
आत्मन्येव सुतृप्तस्य[१] योगसिद्धिर्न दूरतः॥
दुर्निवारा मनोवृत्तिः यावत्ता न निवारयेत्।
किं वदन्त्यपि योगस्य तदा नेदीयसी कुतः॥
यन्नास्ति सर्वलोकेषु तदस्तीति विरुध्यते।
कथ्यमानं तदन्यस्य हृदये नावतिष्ठते॥

---

१ '०न्येवानुसक्तस्य' इति ख. पुस्तके।

स्वसंवेद्यं हि तद्ब्रह्म कुमारीस्त्रीसुखं यथा ।
अयोगी नैव जानाति जात्यन्ध इव वर्णिकान् ॥
क्षणमप्येकमुदकं यथा न स्थिरतामियात् ।
वाताहतं तथा चित्तं तस्मात्तस्य न विश्वसेत् ॥
अतो ऽनिलं निरुन्धीत चित्तस्य स्थैर्यहेतवे ।
तस्मान्मरुन्निरोधार्थं षडङ्गं योगमभ्यसेत् ॥

—इति चेत् । अत्रोच्यते । यथा हि उक्तरीत्या चित्तवृत्तिनिरोधपूर्वकात्मसाक्षात्कारो जीवन्मुक्तित्वसम्पादकः । तथा जड़ात् चैतन्यविवेको ऽपि श्रवणादिपूर्वको न केवलं योग एवावश्यकः। तदुक्तं वासिष्ठे ।

द्वौ क्रमौ चित्तनाशाय[1] योगो ज्ञानं च राघव ।
योगो[2] वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥
असाध्यः कस्यचित् योगः कस्यचित् तत्त्वनिश्चयः ।
प्रकारौ द्वौ ततो देवो जगाद परमः शिवः ॥

इति । अतएव भगवत्पूज्यपादाः कुत्रापि ब्रह्मविदां योगापेक्षां न व्युत्पादयाम्बभूवुः । अतएव च औपनिषदाः परमहंसाः श्रौते वेदान्तविचारे एव गुरुमुपसृत्य प्रवर्त्तन्ते ब्रह्मसाक्षात्काराय । न योगे। तस्य अशुद्धान्तःकरणपरत्वात् । तदुक्तं अखिलवेदार्थविद्भिर्विद्यारण्यैः ध्यानदीपे ।

---

१ 'चित्तनाशस्य' इति क. ग. पुस्तकयोः ।
२ 'योगश्चित्तनिरोधो' इति क. पुस्तके ।

*"वऋव्याकुलचित्तानां[1] विचारात् तत्त्वधीर्न हि।
योगोमुख्यस्ततस्तेषां[2] धीदर्पस्तेन नश्यति॥
अव्याकुलधियां मोहमात्रेणाच्छादितात्मनाम्।
साङ्ख्यनामा[3] विचारः स्यात् मुख्यो झटिति सिद्धिदः"॥

इति। चित्रदीपारम्भे च।

†संसारःपरमार्थोऽयं सम्बद्धः स्वात्मवस्तुनि।
इति भ्रान्तिरविद्या स्यात् विद्ययैषा निवर्तते[4]॥

---

१ '०चित्तस्य' इति ग. पुस्तके। क. पुस्तके तु '०व्याकुलचित्तत्वात्' इति।
२ '०स्तस्य' इति ग. पुस्तके।
३ 'साङ्ख्यशास्त्रविचारोऽयं' इति क. पुस्तके।
४ 'विनश्यति' इति ख. ग. पुस्तकयोः।

---

* ब्रह्मविचारासम्भवे योगाभ्यासः कर्तव्य इत्युक्तं तत्र विचारासम्भवे किं कारणं? इति चेत्। शृणु। यतः अतिशयेन व्यग्रबुद्धीनां विचारेण तत्त्वज्ञानं न सम्भवति। अतो योगः कर्तव्यः। तेन योगेन बुद्धेः दर्पः नश्यति अतः स एव व्याकुलचित्तस्य मुख्य इत्यर्थः। अव्याकुलधियां केवलं अज्ञानमात्रेण आच्छादितात्मनां 'साङ्ख्यनामा' साङ्ख्यपदवाच्यः विचार एव मुख्यः। यतोऽयं शीघ्रं सिद्धिं ददाति इति योजना। अयमत्र निष्कृष्टोऽर्थः। विषयव्यग्रबुद्धीनां योगाभ्यासेन बुद्धिस्थैर्यं भवति। स्थिरायां तस्यां विचारेण ज्ञानमुत्पद्यते। अतो बुद्धिस्थैर्यायैव योगः न ज्ञानाय। तत्तु वेदान्तविचारादिनैव भवतीति सर्वं समञ्जसम्।

† आत्मनि आरोपितस्य संसारस्य ज्ञाननिवर्त्यत्वसिद्धये तन्मूलभूतां अविद्यां आह। 'अयं संसारः परमार्थः' सत्यः स्वात्मवस्तुनि सम्बद्धश्च एवम्प्रकारा या भ्रान्तिः सा अविद्या। सा च ज्ञानेन निवर्तते। अज्ञानस्य ज्ञानैकनाश्यत्वात्।

*आत्माभासस्य जीवस्य संसारो नात्मवस्तुनः[१] ।
इति बोधो भवेत् विद्या लभ्यते ऽसौ विचारणात् ॥
सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः ।
जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥
†नाप्रतीतिस्तयोर्बाधः किन्तु मिथ्यात्वनिश्चयः ।
नो[२]चेत्सुषुप्तिमूर्च्छादौ मुच्येतायत्नतो जनः ॥
‡परमात्मावशेषो ऽपि तत्सत्यत्वविनिश्चयः ।
न जगद्विस्मृतिर्नोचेत् जीवन्मुक्तिर्न सम्भवेत् ॥

---

१ 'नात्मवस्तुनि' इति ख. पुस्तके ।
२ 'एवं चेत् सुप्तिमूर्च्छासु' इति क. पुस्तके ।

---

* विद्यया अविद्या निवर्तते इत्युक्तम् । तच्च विद्यास्वरूपमाह । 'आत्माभासस्य' चिदाभासस्य जीवस्यैव संसारः । आत्मवस्तुनः न । एवम्प्रकारकं ज्ञानमेव विद्या । सा च वेदान्तविचारादिना लभ्यते । तस्मात् सदा जगत्-जीव-परमात्मस्वरूपविचारः कर्तव्यः । ननु—परात्मैव विचार्यताम् । मोक्षावस्थायां फलरूपेण तस्यैव अवस्थानात् । जीव-जगतोर्विचारः क्वोपयुज्यते ? इति चेत् । तयोरपवादे जीवभाव-जगद्भावबाधे केवलमात्मैव अवशिष्यते । अतः बाधार्थं तयोरपि विचारः कर्तव्य इत्याह ।

† ननु—जीव-जगतोर्बाधं तदप्रतीत्या व्यवहारलोपः प्रसज्येत—इति चेत् । न । बाधो नाम तयोरप्रतीतिः न । किन्तु तयोर्मिथ्यात्वनिश्चय एव बाधः । नोचेत् सुषुप्ति-मूर्च्छादावपि स्वत एव द्वैतप्रतीत्यभावात् तत्त्वज्ञानं विनापि मुक्तिः स्यात् । तच्च नेष्टम् ।

‡ 'स्वात्मैव शिष्यते' इत्यनेनापि परमात्मनः सत्यत्वज्ञानमेव विवक्षितम् । न तदतिरिक्तजगद्विस्मृतिः । नोचेत् जगद्विस्मृतौ सत्यां जीवन्मुक्त्यभावप्रसङ्गः स्यात् ।

इति । एवमेव चित्रदीपसमाम्नावपि ।

*प्रवृत्तौ वा निवृत्तौ वा देहेन्द्रियमनोधियाम् ।
न किञ्चिदपि वैषम्यमस्त्यज्ञानि-विबुद्धयोः ॥
व्रात्य-श्रोत्रिययोर्वेदपाठापाठकृता भिदा ।
नाहारादावस्ति भेदः सोऽयं न्यायो ऽत्र योज्यताम् ॥
†वैराग्यबोधोपरमाः सहायास्ते परस्परम् ।
प्रायेण सह वर्तन्ते वियुज्यन्ते क्वचित् क्वचित् ॥
‡हेतु[1]-स्वरूप-कार्याणि भिन्नान्येषामसङ्करः ।
यथावदवगन्तव्यः शास्त्रार्थं प्रविविच्यता ॥

---

१ 'हेतु-स्वरूप-कार्याणां भिन्नानामेव सङ्करः'। इति ख. पुस्तके ।

---

* अज्ञानि-ज्ञानिनोः देहेन्द्रियमनोबुद्धीनां प्रवृत्तौ निवृत्तौ न कश्चिदपि भेदः। यथा श्रोत्रियो वेदपाठं करोति व्रात्यो न इयानेव भेदः। आहारादिकं त्वेकमेव। अयमेव न्यायो ऽत्र योज्यताम् ।

† वैराग्यं च ज्ञानं च उपरमश्च एते त्रयो ऽपि परस्परं सहायाः। अत एव प्रायेण सहैव च वर्तन्ते। क्वचित् वियुज्यन्ते च। एवं सति तेषामन्योन्यपरिहारेण अवस्थानदर्शनात् अभेदशङ्कायां तद्धेत्वादीनां भेदात् भेदो ऽवगन्तव्यः शास्त्रविवेकिना। तस्य विषयेषु दोषदृष्टिः वैराग्यस्य हेतुः। तेषां जिहासा वैराग्यस्य स्वरूपम्। पुनः भोगेषु अदीनता अकातर्यम्। इदन्त्रयमपि असाधारणम्। एवं तत्त्वबोधस्यापि ।

‡"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ।

इति श्रुतेः श्रवणादित्रयं हेतुः। सदसद्विवेचनं कूटस्थाहङ्कारादेश्च भेदज्ञानं स्वरूपम्। पुनः अन्योन्याध्यासरूपस्य ग्रन्थेः अनुदयः ज्ञानस्य कार्यम् "छिद्यन्ते सर्वसंशयाः" इत्युक्तत्वात् ।

दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता[१] ।
असाधारणहेत्वाद्या वैराग्यस्य त्रयो ऽप्यमी ॥
*श्रवणादित्रयं[२] तद्वत् तत्त्वमिथ्याविवेचनम् ।
पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः ॥
†यमादिर्धीनिरोधश्च व्यवहारस्य सङ्क्षयः ।
स्युर्हेत्वाद्या उपरते इत्यसङ्कर ईरितः ॥
‡तत्त्वबोधः प्रधानः[३] स्यात् साक्षान्मोक्षप्रदत्वतः ।
बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥

---

१ 'भोगेष्वधीनता' इति ग. पुस्तके ।
२ 'श्रवणादिकमप्येतत्' इति क. ग. पुस्तकयोः ।
३ 'प्रधानो ऽत्र' इति क. पुस्तके ।

---

*यम-नियमासन-प्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधयो ऽष्टौ 'उपरमस्य' हेतुः । चित्तवृत्तिनिरोधलक्षणो योगस्य स्वरूपम् । व्यवहारस्य नाशः कार्यम् इति । अतः परस्परं न सङ्करः ।

† ननु—किमेतेषां त्रयाणां समं प्राधान्यमिति चेत् । न ।

"तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यते ऽयनाय ।
इति श्रुतेः तत्त्वबोध एव प्रधानः । इतरयोस्तु उपकारित्वम् ।

"ब्राह्मणो निर्वेदमायात् । समाहितो भूत्वात्मन्येवात्मानं पश्येत्" ।
इत्यादिश्रुतिभ्यः वैराग्योपरमयोः ज्ञानस्य सहकारित्वावगमात् इति भावः ।

‡ एषां त्रयाणां सहभावस्तु अनेकजन्मार्जितपुण्यपुञ्जपरिपाकवशादेव भवति । अन्यथा तु प्रतिबन्धकापायानुसारेण पुरुषविशेषे कालविशेषेण कस्यचित् प्रतिबन्धो भवति । तत्रापि यस्य वैराग्योपरमलाभे ऽपि ज्ञानस्य प्रतिबन्धे सति मोक्षो न भवेत् तर्हि तस्य तत्सम्पादनं निष्फलमिति चेत् । न ।

*त्रयो ऽप्यत्यन्तपक्वाश्चेन्महतस्तपसः फलम्।
दुरितेन क्वचित् किञ्चित् कदाचित् प्रतिबध्यते॥
वैराग्योपरतौ पूर्णौ बोधस्तु प्रतिबध्यते।
यस्य तस्य न मोक्षो ऽस्ति पुण्यलोकस्तपोबलात्॥
पूर्णे बोधे तदन्यौ द्वौ प्रतिबन्धौ यदा तदा[1]।
मोक्षो विनि[2]श्चितः किन्तु दृष्टदुःखं न नश्यति॥
†ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः।
देहात्मवत् परात्मत्वदार्ढ्ये बोधः समाप्यते॥

---

१ 'यदा यदा' इति क. ख. पुस्तकयोः।
२ 'मोक्षो ऽपि' निश्चितः' इति ग. पुस्तके।

---

प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टो ऽभिजायते॥

इति भगवद्वचनात् तपोबलात् पुण्यलोकप्राप्तिर्भवति। अथ च। ज्ञानस्य पूर्णत्वे ऽपि वैराग्योपरमयोः प्रतिबन्धो यदा भवेत् तदा मोक्षो निश्चयेन भवेदेव। किन्तु। दृष्टदुःखस्य नाशो न स्यात्। जीवन्मुक्तिसुखं न लभ्येत् इत्यर्थः।

* इदानीं त्रयाणामपि परमावधिमाह। ब्रह्मलोकस्यापि तृणवत् परिगणनं वैराग्यस्य परमावधिः। देहात्मत्वबुद्धिवत् परात्मत्वदार्ढ्ये ज्ञानस्य परिसमाप्तिः भवति। यथा—सुषुप्तौ विषयादीनां विस्मृतिः तथा विस्मृतौ सत्यां उपरमस्यापि सीमा भवेत्। अनयैव हि अन्यत् तारतम्यं निश्चेयम्।

†ननु—तत्त्वबोधवतामपि रागादिमत्त्वेन वैषम्योपलम्भात् ज्ञानस्यापि युक्तिहेतुत्वं न शक्यं—इति चेत्। रागादेः व्याध्यादिवत् आरब्धकर्मफल-




सुप्तिवद्दिस्थितिः सीमा भवेदुपरमस्य[1] हि ।
दिशानया विनिश्चेयं तारतम्यमवान्तरम् ॥
[2]आरब्धकर्मनानात्वात् बुद्धानामन्यथान्यथा ।
[3]प्रवृत्तिर्दृश्यते तत्र भ्रमितव्यं न पण्डितैः ॥
स्व स्व कर्मानुसारेण वर्तन्तां ते यथा[4] तथा ।
अविशिष्टः सर्वबोधः समामुक्तिरिति स्थितिः" ॥

इत्यादिग्रन्थेन। विस्तरस्तु स्वरूपप्रकाशे चतुर्थपरिच्छेदे जीवन्मुक्तिप्रक्रियायां अनुसन्धेय इति दिक्। तस्मादास्तिकपञ्चदर्शने ऽपि गुरुशब्दाभिधेयस्य असिद्धत्वात् वेदान्तदर्शनानुसारेण च प्रथममुद्गर एव निरूपितत्वाच्च न घट्टकुटीप्रभातवृत्तान्तन्यायेन शिरसि मुद्गरप्रहार उचितः? किन्तु उचित एव इति शिवम्।

---

१ 'उपरतस्य' इति ग. पुस्तके।
२ 'आरब्धकर्म०' इति ख. ग. पुस्तकयोः॥ बुद्धानामित्यत्र 'बुधानां' इति च पाठान्तरम्।
३ 'वर्तनं तेन शास्त्रार्थे' इति क. पुस्तके।
४ 'तथा तथा' इति क. ख. पुस्तकयोः।

---

त्वात् मुक्तिप्रतिबन्धकत्वं असिद्धम्। अतो न शास्त्रार्थे विप्रतिपत्तव्यम्। स्व-स्वकर्मानुसारेण ते यथा तथा वर्तन्तां नाम। सर्वेषां 'ब्रह्माहमस्मि'—इति ज्ञानं एकाकारं निरवद्यब्रह्मरूपेणावस्थानं च समानं अतो न कापि विप्रतिपत्तिरित्यलमप्रसक्तेन।

## उपसंहारः ।

जीवतत्त्वं जगत्तत्त्वमीशतत्त्वं तृतीयकम् ।
खिलैकादशतन्त्रेषु तत्तद्युक्त्या निरूपितम् ॥ १ ॥
पश्चाद्वेदान्तसद्युक्त्या अद्वैतश्रुतिमानतः ।
अद्वयं ब्रह्म संसिद्धं द्वैतस्यावसरः कुतः ॥ २ ॥
अनेन भगवानीशः सच्चिदानन्दविग्रहः ।
प्रीयतां भक्तिभावेन भक्तानां भक्तवत्सलः ॥ ३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीब्रह्मानन्दसरस्वतीश्रीपादशिष्यकाश्मीरकश्रीसदानन्दयतिविरचितायां अद्वैतब्रह्मसिद्धौ गुरुशब्दाभिधेयविचारे साङ्ख्य-पातञ्जलमतनिराकरणगर्भितप्रौढमीमांसकमतखण्डनव्याजेन दुर्दुरूढवादिशिरसि चतुर्थोऽयं मुद्गरप्रहारः ॥ ४ ॥ ओं तत्सत् ।

॥ समाप्तेयमद्वैतब्रह्मसिद्धिः ॥

ओं श्रीदक्षिणामूर्तये नमः ।

# अथ वेदान्तडिण्डिमः ।



वेदान्तडिण्डिमास्तत्त्वमेकमुद्घोषयन्ति[1] यत् ।
आस्तां पुरस्तात्तत्तेजो दक्षिणामूर्तिसञ्ज्ञितम् ॥ १ ॥
आत्मानात्मपदार्थौ द्वौ भोक्तृ-भोग्यस्य लक्षणौ ।
ब्रह्मैवात्मा न देहादिरिति वेदान्तडिण्डिमः ॥ २ ॥
ज्ञानाज्ञानपदार्थौ द्वावात्मनो बन्ध-मुक्तिदौ ।
ज्ञानान्मुक्तिर्निबन्धो[2] ऽन्यादिति वेदान्तडिण्डिमः ॥ ३ ॥
ज्ञातृ-ज्ञेयपदार्थौ द्वौ भास्य-भासकलक्षणौ ।
ज्ञाता ब्रह्म जगज्ज्ञेयमिति वेदान्तडिण्डिमः ॥ ४ ॥
सुख-दुःखपदार्थौ द्वौ प्रिय-विप्रियकारकौ ।
सुखं ब्रह्म जगद्दुःखमिति वेदान्तडिण्डिमः ॥ ५ ॥
समष्टि-व्यष्टिरूपौ द्वौ पदार्थौ सर्वसम्मतौ ।
समष्टिरीश्वरो व्यष्टिर्जीवो वेदान्तडिण्डिमः ॥ ६ ॥
ज्ञानकर्मपदार्थौ द्वौ वस्तुकर्त्रात्मतन्त्रकौ ॥

---

१ 'डिण्डिमस्तत्त्वमेकमुद्घोषयेद्धि यत्' इति पाठः क. पुस्तके ।
२ '०र्न बन्धो ऽन्य इति' इति ख. पुस्तके ।

ज्ञानान्मोक्षो न कर्मभ्य इति वेदान्तडिण्डिमः ॥७॥

श्रोतव्याऽश्राव्यरूपौ[1] द्वौ पदार्थौ सुख-दुःखदौ ।
श्रोतव्यं ब्रह्म नैवान्यदिति वेदान्तडिण्डिमः ॥८॥

चिन्त्याचिन्त्यपदार्थौ द्वौ विश्रान्ति-भ्रान्तिदायकौ ।
चिन्त्यं ब्रह्म परं नान्यदिति वेदान्तडिण्डिमः ॥९॥

ध्येयाऽध्येयपदार्थौ द्वौ धीसमाध्यसमाधिदौ ।
ध्यातव्यं ब्रह्म नैवान्यदिति वेदान्तडिण्डिमः ॥१०॥

योगिनो भोगिनो वापि त्यागिनो रोगिणो ऽपि च ।
ज्ञानान्मोक्षो न सन्देह इति वेदान्तडिण्डिमः ॥११॥

न वर्णाश्रमसङ्केतैर्न कर्मोपासनादिभिः ।
ब्रह्मज्ञानं विना मोक्ष इति वेदान्तडिण्डिमः ॥१२॥

असत्यः सर्वसंसारो रसाभासादिदूषितः ।
उपेक्ष्यो ब्रह्म विज्ञेयमिति वेदान्तडिण्डिमः ॥१३॥

वृथा क्रिया वृथा लापान् वृथा वादान् मनोरथान् ।
त्यक्त्वैकं ब्रह्म विज्ञेयमिति वेदान्तडिण्डिमः ॥१४॥

स्थितो ब्रह्मात्मना जीवो ब्रह्मजीवात्मना स्थितम् ।
इति सम्पश्यतां मुक्तिरिति वेदान्तडिण्डिमः ॥१५॥

जीवो ब्रह्मात्मना ज्ञेयो ज्ञेयं जीवात्मना परम् ।
मुक्तिस्तदैक्यविज्ञानमिति वेदान्तडिण्डिमः ॥१६॥

सर्वात्मत्वात्परं ब्रह्म श्रोतुरात्मतया स्थितम् ।

---

१ 'श्रोतव्याश्रोव्य०' इति क. पुस्तके ।

नायासस्तत्त्वविज्ञप्ताविति[1] वेदान्तडिण्डिमः ॥१७॥
ऐहिकं चामुष्मिकं च तापान्तं कर्मसञ्चयम् ।
त्यक्त्वा ब्रह्मैव विज्ञेयमिति वेदान्तडिण्डिमः ॥१८॥
अद्वैत-द्वैतवादौ द्वौ सूक्ष्म-स्थूलदृशां गतौ ।
अद्वैतवादान्मोक्षः स्यादिति वेदान्तडिण्डिमः ॥१९॥
कर्मणो विनिवर्तन्ते निवर्तन्ते उपासकाः[2] ।
ज्ञानिनो न निवर्तन्त इति वेदान्तडिण्डिमः ॥२०॥
परोक्षासत्फलं कर्म ज्ञानं प्रत्यक्षसत्फलम् ।
ज्ञानमेवाभ्यसेत्तस्मादिति वेदान्तडिण्डिमः ॥२१॥
वृथा श्रमो ऽयं विदुषां वृथाऽयं कर्मिणां श्रमः ।
यदि न ब्रह्मविज्ञानमिति वेदान्तडिण्डिमः ॥२२॥
अलं यागैरलं योगैरलं भोगैरलं[3] धनैः ।
परस्मिन्ब्रह्मणि ज्ञात इति वेदान्तडिण्डिमः ॥२३॥
अलं वेदैरलं शास्त्रैरलं श्रुति-पुराणकैः ।
परमात्मनि विज्ञात इति वेदान्तडिण्डिमः ॥२४॥
नर्चा न यजुषाऽर्थो ऽस्ति न साम्नाऽर्थोऽस्ति[4] कश्चन ।
ज्ञाते ब्रह्मात्मविज्ञान इति वेदान्तडिण्डिमः ॥२५॥
कर्माणि चित्तशुद्ध्यर्थमैकाग्र्यार्थमुपासना ।

---

१ 'तत्त्वविज्ञाने' इति ख. पुस्तके ।

२ 'तथा जनाः' इति क. ख. पुस्तकयोः ।

३ '०रलं सुतैः' इति क. पुस्तके ।

४ 'साम्नार्थोस्ति' ग. पुस्तके । 'वास्ति' क. पुस्तके ।

मोक्षार्थं ब्रह्मविज्ञानमिति वेदान्तडिण्डिमः ॥२६॥
सञ्चितागामिकर्माणि दह्यन्ते ज्ञानवह्निना ।
प्रारब्धानुभवान्मोक्ष इति वेदान्तडिण्डिमः ॥२७॥
न पुण्यकर्मणो वृद्धिर्न हानिः पापकर्मणः ।
नित्यासङ्गात्मनिष्ठानामिति वेदान्तडिण्डिमः ॥२८॥
बुद्धिपूर्वाबुद्धिपूर्वकृतानां पापकर्मणाम् ।
प्रायश्चित्तं महाज्ञानमिति वेदान्तडिण्डिमः ॥२९॥
दृग्दृश्यौ द्वौ पदार्थौ तौ परस्परविलक्षणौ ।
दृग्ब्रह्म दृश्यं माया स्यात् इति वेदान्तडिण्डिमः ॥३०॥
अविद्योपाधिको जीवो मायोपाधिक ईश्वरः ।
मायाविद्यागुणातीत इति वेदान्तडिण्डिमः ॥३१॥
साकारं च निराकारं सगुणं चागुणात्मकम्[1] ।
तत्त्वं तत्परमं ब्रह्म इति वेदान्तडिण्डिमः ॥३२॥
द्विजत्वं विध्यनुष्ठानात् विप्रत्वं वेदपाठतः ।
ब्राह्मण्यं ब्रह्मविज्ञानादिति वेदान्तडिण्डिमः ॥३३॥
सर्वात्मनास्थितं ब्रह्म सर्वं ब्रह्मात्मना स्थितम् ।
न कार्यं कारणाद्भिन्नमिति वेदान्तडिण्डिमः ॥३४॥
सत्ता-स्फुरण-सौख्यानि भासन्ते सर्ववस्तुषु ।
तस्माद्ब्रह्ममयं सर्वमिति वेदान्तडिण्डिमः ॥३५॥
अवस्थात्रितयं[2] यस्य क्रीडाभूमितया स्थितम् ।

---

१ 'निर्गुणं तथा' इति क० पुस्तके ।
२ 'अवस्थात्रितये' इति ग० पुस्तके ।

तदेव ब्रह्म जानीयादिति वेदान्तडिण्डिमः ॥ ३६ ॥

यन्नादौ यच्च नास्त्यन्ते तन्मध्ये भातमप्यसत् ।
अतो मिथ्या[1] जगत्सर्वमिति वेदान्तडिण्डिमः ॥ ३७ ॥

घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च ।
तथा ब्रह्म जगत्सत्यमिति वेदान्तडिण्डिमः ॥ ३८ ॥

यदस्त्यादौ यदस्त्यन्ते तन्मध्ये भाति तत्त्वयम्[2] ।
ब्रह्मैवैकमिदं सत्यमिति वेदान्तडिण्डिमः ॥ ३९ ॥

पुरुषार्थत्रयाविष्टाः पुरुषाः पशवो ध्रुवम् ।
मोक्षार्थी पुरुषश्रेष्ठ इति वेदान्तडिण्डिमः ॥ ४० ॥

परित्यज्य त्रयं हित्वा द्वयं भित्वाऽखिलातिगम् ।
एकं बुध्वा ऽश्नुते मोक्षमिति वेदान्तडिण्डिमः ॥ ४१ ॥

हित्वा षट्कं च भित्वाथ गत्वाग्रे चतुरस्त्रिकम् ।
द्वयं हित्वाऽऽश्रयेदेकमिति वेदान्तडिण्डिमः ॥ ४२ ॥

देहो नाहमहं देही देहसाक्षीति निश्चयात् ।
जन्म-मृत्युप्रहीणो ऽसाविति वेदान्तडिण्डिमः ॥ ४३ ॥

प्राणो नाहमहं देवः प्राणसाक्षीति निश्चयात् ।
क्षुत्पिपासोपशान्तिः स्यादिति वेदान्तडिण्डिमः ॥ ४४ ॥

मनो नाहमहं देवो मनःसाक्षीति निश्चयात् ।
शोक-मोहो[3]पहानिः स्यादिति वेदान्तडिण्डिमः ॥ ४५ ॥

---

१ 'अतो मिथ्यैव तत्सर्वं' इति ख० ग० पुस्तकयोः ।
२ 'नान्यथा' इति क० पुस्तके ।
३ '०मोहनिवृत्तिः स्यात्' इति क० पुस्तके ।

बुद्धिर्नाहमहं देवो बुद्धिसाक्षीति निश्चयात् ।
कर्तृभावनिवृत्तिः स्यादिति वेदान्तडिण्डिमः ॥४६॥
नाज्ञानं स्यामहं देवो ज्ञानसाक्षीति निश्चयात् ।
सर्वानर्थनिवृत्तिः स्यादिति वेदान्तडिण्डिमः ॥४७॥
अहं साक्षीति यो विद्याद्विविच्यैवं पुनः पुनः ।
स एव मुक्तोऽसौ विद्वानिति वेदान्तडिण्डिमः ॥४८॥
नाहं माया न तत्कार्यं[1] तत्साक्षी परमोऽस्म्यहम् ।
इति निःसंशयज्ञानान्मुक्तिर्वेदान्तडिण्डिमः ॥४९॥
नाहं सर्वमहं सर्वं मम सर्वमिति स्फुटम् ।
ज्ञाते तत्त्वे कुतो दुःखमिति वेदान्तडिण्डिमः ॥५०॥
देहादिपञ्चकोशस्था या सत्ता स्फुरिभासते ।
सा सत्तात्मा न सन्देह इति वेदान्तडिण्डिमः ॥५१॥
देहादिपञ्चकोशस्था या स्फूर्तिरनुभूयते ।
सा स्फूर्तिरात्मा नैवान्यदिति वेदान्तडिण्डिमः ॥५२॥
देहादिपञ्चकोशस्था या प्रीतिरनुभूयते ।
सा प्रीतिरात्मा कूटस्थ इति वेदान्तडिण्डिमः ॥५३॥
व्योमादिपञ्चभूतस्था या सत्ता भासते नृणाम् ।
सा सत्ता परमं ब्रह्म इति वेदान्तडिण्डिमः ॥५४॥
व्योमादिपञ्चभूतस्था या चिदेवानुभूयते ।
सा चिदेव परं ब्रह्म नान्यद्वेदान्तडिण्डिमः ॥५५॥
व्योमादिपञ्चभूतस्था या प्रीतिरनुभूयते ।

१ 'मायाकार्यजातं' इति ग. पुस्तके ।

सा प्रीतिरेव ब्रह्म स्यादिति वेदान्तडिण्डिमः ॥५६॥

देहादिकोशगा सत्ता या सा व्योमादिभूतगा ।
मानाभावान्न[1] तद्भेद इति वेदान्तडिण्डिमः ॥५७॥

सच्चिदानन्दरूपत्वाद्ब्रह्मैवात्मा न संशयः ।
श्रुतिप्रमाण[2]सन्धानादिति वेदान्तडिण्डिमः ॥५८॥

न नाम-रूपे नियते सर्वत्र व्यभिचारतः ।
अनामरूपं सर्वं स्यादिति वेदान्तडिण्डिमः ॥५९॥

न जीव-ब्रह्मणोर्भेदः स्फूर्तिरूपेण विद्यते ।
स्फूर्तिरूपेण मानं स्यादिति वेदान्तडिण्डिमः ॥६०॥

न जीव-ब्रह्मणोर्भेदः प्रियरूपेण विद्यते ।
प्रियभेदेन भावं स्यात् इति वेदान्तडिण्डिमः ॥६१॥

न जीव-ब्रह्मणोर्भेदो नाम्ना रूपेण विद्यते ।
नाम्नो रूपस्य मिथ्यात्वादिति वेदान्तडिण्डिमः ॥६२॥

न जीव-ब्रह्मणोर्भेदः पिण्डब्रह्माण्डभेदतः ।
व्यष्टिः समष्टिरेकत्वादिति वेदान्तडिण्डिमः ॥६३॥

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
जीवन्मुक्तस्तु तद्विद्वानिति वेदान्तडिण्डिमः ॥६४॥

---

१ 'मानाभावान्मतच्छेद' इति ख. पुस्तके । क. पुस्तके तु 'मानाभावाद्भवेद्भेद' इति ।

२ 'प्रमाणकोपसन्धानात्' इति क. पुस्तके। ख. पुस्तके तु 'प्रमाणं नापि सन्धानात्' इति ।

अनामरूपं सकलं सन्मयं चिन्मयं परम् ।
कुतो भेदः कुतो बन्ध इति वेदान्तडिण्डिमः ॥६५॥
न सत्त्वा¹त्कथ्यते लोको नामाद्यैर्व्यभिचारतः ।
बटुः कुलट इत्यादिरिति वेदान्तडिण्डिमः ॥६६॥
नाम-रूपात्मकं विश्वमिन्द्रजालं विदुर्बुधाः ।
अनामत्वादमुक्तत्वादिति वेदान्तडिण्डिमः ॥६७॥
अभेददर्शनो मोक्षः संसारो भेददर्शनः ।
सर्ववेदान्तसिद्धान्त इति वेदान्तडिण्डिमः ॥६८॥
न नाम्नाऽभिनिवेशेन न भाषावेषमात्रतः ।
मुक्तिर्विनात्मविज्ञानमिति वेदान्तडिण्डिमः ॥६९॥
न काम्यप्रतिषिद्धाभिः क्रियाभिर्मोक्षवासना ।
ईश्वरानुग्रहात्सा स्यादिति वेदान्तडिण्डिमः ॥७०॥
अविज्ञाते जन्म नष्टं विज्ञाते जन्म सार्थकम् ।
ज्ञातुरात्मा न दूरे स्यात् इति वेदान्तडिण्डिमः ॥७१॥
दशमस्य परिज्ञाने नायासो ऽस्ति यथा तथा ।
स्वस्य ब्रह्मात्मविज्ञानमिति वेदान्तडिण्डिमः ॥७२॥
उपेक्ष्यौपाधिकान् दोषान् दुह्यन्ते विषया यथा ।
उपेक्ष्य दृश्यं तद्ब्रह्म इति वेदान्तडिण्डिमः ॥७३॥
सुखमन्तं बहुः क्लेशो विषयग्राहिणां नृणाम् ।
अनन्तं ब्रह्मनिष्ठानामिति वेदान्तडिण्डिमः ॥७४॥

---

१ 'न तत्त्वात्कथ्यते' इति ग. पुस्तके ।

धनैर्वा धनदैः पुत्रैः दारागारसहोदरैः।
ध्रुवं प्राणहरैर्दुःखमिति वेदान्तडिण्डिमः ॥७५॥
सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम्[1]।
नातिदूरे नृणां मृत्युरिति[2] वेदान्तडिण्डिमः ॥७६॥
पञ्चानामपि कोशानां मायानर्थव्ययोचिता।
तत्प्राची ब्रह्मविज्ञानमिति वेदान्तडिण्डिमः ॥७७॥
दशमलपरिज्ञानं नवज्ञस्य यथा सुखम्।
तथा जीवस्य सम्प्राप्तिरिति वेदान्तडिण्डिमः ॥७८॥
नवजीवपरं प्रत्यक् नववेदपरं परम्।
तद्विज्ञानाद्भवेत्तुल्या मुक्तिर्वेदान्तडिण्डिमः ॥७९॥
नवाभासा नवज्ञलान्नवोपाधीर्न्नवात्मनः।
मिथ्येत्यनवशिष्टे तु मौनं वेदान्तडिण्डिमः ॥८०॥
परमे ब्रह्मणि स्वस्मिन् प्रविलाप्याखिलं जगत्।
गायन्नद्वैतमात्मानमास्ते वेदान्तडिण्डिमः ॥८१॥
प्रतिलोमानुलोमाभ्यां विश्वारोपापवादयोः।
चिन्तने शिष्यते तत्त्वमिति वेदान्तडिण्डिमः ॥८२॥
नाम-रूपाभिमानः स्यात्संसारे सर्वदेहिनाम् ॥
सच्चिदानन्ददृष्टिः स्यान्मुक्तिर्वेदान्तडिण्डिमः ॥८३॥
सच्चिदानन्दसत्यत्वे मिथ्यात्वे नाम-रूपयोः।
विज्ञाते किमिदं ज्ञेयमिति वेदान्तडिण्डिमः ॥८४॥

---

१ 'प्रविविच्यताम्' इति क. पुस्तके।
२ 'न्दयां मोच्च' इति ख. ग. पुस्तकयोः।

सालम्बनं निरालम्बं सर्वालम्बावलम्बितम् ।
अवलम्बे ऽखि[१]लालम्बमिति वेदान्तडिण्डिमः ॥८५॥
न कुर्यान्न विजानीयात् सर्वं ब्रह्मेत्यनुस्मरन् ।
यथा सुखं तथा तिष्ठेत् इति वेदान्तडिण्डिमः ।८६॥
स्वकर्मपाशवशगः प्राज्ञोऽन्यो वा जनो ध्रुवम् ।
यथासुखं नयेत्कालमिति वेदान्तडिण्डिमः ॥८७॥
न विद्वान् तापयेच्चित्तं करणाकरणोद्भवम् ।
सर्वमात्मनि विज्ञानादिति वेदान्तडिण्डिमः ॥८८॥
नैवाभासं स्पृशेत्कर्म मिथ्योपाधिमपि स्वयम् ।
कुतो ऽधिष्ठानमत्यन्तमिति वेदान्तडिण्डिमः ॥८९॥
अहो ऽस्माकमलं मोहैरात्मा ब्रह्मेति निर्भयम् ।
श्रुतौ भेरीरवो ऽद्यापि श्रूयते श्रुतिरञ्जनः ॥९०॥
वेदान्तभेरीझाङ्कारः प्रतिवादिभयङ्करः ।
श्रूयतां ब्राह्मणैः श्रीमद्दक्षिणामूर्त्यनुग्रहात् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नृसिंहसरस्वतीतीर्थविरचितो वेदान्तडिण्डिमः समाप्तः ॥ श्रीः ॥

---

१ 'अवलम्बोऽखिलो नष्ट' इति ग. पुस्तके ।

| | Rs. | |
|---|---|---|
| Pingala Chhandaḥ Sútra, (Sans.) Fasc. II—III @ /6/ each | 0 | 12 |
| Prithiráj Rásau, (Sans.) Part I, Fasc. I, Part II, Fasc. I—V @ /6/ each | 2 | 4 |
| Ditto (English) Part II Fasc. I .. .. .. | 0 | 12 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I .. .. .. | 1 | 8 |
| Parásara Smṛiti (Sans.) Vol. I, Fasc. 1—8, Vol. II, Fasc. 1—2, @ /6/ each | 3 | 12 |
| Paráśara, Institutes of (English) .. .. .. .. | 0 | 12 |
| S'rauta Sútra of Ápastamba, (Sans.) Fasc. I—XII @ /6/ each .. | 4 | 8 |
| Ditto Áśvaláyana, (Sans.) Fasc. I—XI @ /6/ each .. | 4 | 2 |
| Ditto Látyáyana (Sans.) Fasc. I—IX @ /6/ each .. | 3 | 6 |
| Ditto S'ánkháyana (Sans.) Fasc. I—VIII @ /6/ each .. | 3 | 0 |
| Sáma Veda Saṃhitá, (Sans.) Vols I, Fasc. 3—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /6/ each Fasc. .. .. .. | 13 | 2 |
| Saṃkhya Sutra Vritti (Sans.) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Sánkhya Aphorisms of Kapila, (English) Fasc. I and II @ /6/ each .. | 0 | 12 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. .. | 0 | 6 |
| Sankara Vijaya, (Sans.) Fasc. II and III @ /6/ each .. .. | 0 | 12 |
| Sánkhya Pravachana Bháshya, Fasc. III (English preface only) .. | 0 | 6 |
| S'ṛi Bháshyam, (Sans.) Fasc. I—II @ /6/ each .. .. .. | 0 | 12 |
| Suśruta Saṃhitá, (Eng.) Fasc. I and II @ /12/ each .. .. | 1 | 8 |
| Taittiríya Áraṇya (Sans.) Fasc. I—XI @ /6/ each .. .. | 4 | 2 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /6/ each .. .. | 9 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc. IX—XXXV @ /6/ each .. .. | 10 | 2 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /6/ each .. .. | 1 | 2 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /6/ each | 0 | 12 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /6/ each .. .. | 7 | 2 |
| Tattva Chintámaṇi, Vol. I, Fasc. I—IX; Vol. II, 1—3 (Sans.) @ /6/ each | 4 | 8 |
| Tul'sí Sat'saí, (Sans.) Fasc. I—II @ /6/ each .. .. .. | 0 | 12 |
| Uttara Naishadha, (Sans.) Fasc. III, V—XII @ /6/ each .. .. | 3 | 6 |
| Uvásagadasáo, (Sans.) Fasc. I—V @ /12/ .. .. .. | 3 | 12 |
| Varáha Puráṇa, (Sans.) Fasc. I—XIII @ /6/ each .. .. | 4 | 4 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. I—VI; Vol. II, Fasc. I—VII, @ /6/ each Fasc .. .. .. .. .. | 4 | 14 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /6/ each .. .. | 0 | 12 |
| Vivádáratnákara, (Sans.) Fasc. I—VII @ /6/ each .. .. | 2 | 10 |
| Vṛihannáradíya Puráṇa, (Sans.) Fasc. I—V @ /6/ .. .. | 1 | 14 |
| Yoga Sútra of Patañjali, (Sans. & English) Fasc. I—V @ /14/ each .. | 4 | 6 |

*Tibetan Series.*

| | | |
|---|---|---|
| Sher-Phyin—Fasc. I—V @ 1/ each .. .. .. | 5 | 0 |
| *Rtogs brjod dpag bsam hkhri S'iñ* (Tibetan & Sans.) Fasc. I—II @ /1 .. | 2 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /6/ each .. | 4 | 14 |
| Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/ each .. .. | 22 | 0 |
| Ditto (English) Vol. I (Fasc. I—VII) .. .. .. | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXXVII @ 1/ each | 37 | 0 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /6/ each .. | 7 | 2 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to., thin paper .. | 4 | 8 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. I—XXI @ 1/ each .. .. .. .. .. | 21 | 0 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/ each .. .. | 14 | 0 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. | 3 | 0 |
| Futúḥ-ul-Shám Waqidí, (Text) Fasc. I—IX @ /6/ each .. | 3 | 6 |
| Ditto Azádí, (Text) Fasc. I—IV @ /6/ each .. | 1 | 8 |
| Haft Ásmán, History of the Persian Mansawi (Text) Fasc. I .. | 0 | 12 |
| History of the Caliphs, (English) Fasc. I—VI @ /12/ each .. | 4 | 8 |
| Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /6/ each .. | 1 | 2 |
| Iṣabáh, with Supplement, (Text) 51 Fasc. @ /12/ each .. .. | 38 | 4 |
| Maásir-ul-Umara, Vol. I, Fasc. 1—9, Vol. II, Fasc. 1—9 @ /6/ each .. | 6 | 12 |
| Magházi of Wáqidí, (Text) Fasc. I—V @ /6/ each .. .. | 1 | 14 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /6/ each .. | 5 | 10 |
| Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I—V @ /12/ each .. | 3 | 12 |

(*Turn over.*)